मृगैर्वर्त्तितरोमन्थम् उटजाङ्गनभूमिषु ॥ ५२ ॥
अभ्युत्थिताग्निपिशुनैः अतिथीनाश्रमोन्मुखान् ।
पुनानं पवनोद्भूतैर्धूमैराहुतिगन्धिभिः ॥ ५३ ॥
अथ यन्तारमादिश्य धुर्य्यान् विश्रामयेति सः ।
तामवारोहयत् पत्नीं रथादवततार च ॥ ५४ ॥

न्यानि" इत्यमरः। उटजानां पर्णशालानाम् अङ्गनभूमिषु चत्वरभागेषु चत्वरस्थानेषु वा "पर्णशालोटजोऽस्त्रियाम्" इति, "अङ्गनं चत्वराजिरे" इति च अमरः। निषादिभिः उपविष्टैः मृगैः वर्त्तितः निष्पादितः रोमन्थः चर्वितचर्वणं यस्मिन्, आश्रमे तम् ॥ ५२ ॥

अभ्युत्थितेति। अभ्युत्थिताः प्रज्वलिताः होमयोग्याः इत्यर्थः। "समिद्धेऽग्नावाहुतीर्जुहोति" इति वचनात्। तेषाम् अग्नीनां पिशुनैः सूचकैः पवनोद्भूतैः आहुतिगन्धः येषाम् अस्तीति आहुतिगन्धिनः तैः धूमैः आश्रमोन्मुखान् अतिथीन् पुनानं पवित्रीकुर्व्वाणम् ॥ कुलकम् ॥ ५३ ॥

अथेति। अथ आश्रमप्राप्त्यनन्तरं सः राजा यन्तारं सारथिं धुरं वहन्ति धुर्य्याः युग्याः। धुरोयड्ढकाविति, यत्प्रत्ययः। "धूर्वहे धुर्य्यधौरेयधुरीणाः सधुरन्धराः" इत्यमरः। धुर्य्यान् रथाश्वान् विश्रामय विनीतश्रमान् कुरु इति आदिश्य आज्ञाप्य तां पत्नीं रथात् अवारोहयत् अवतारितवान् स्वयञ्च अवततार। विश्रमयेति ह्रस्वपाठे जनीजृष्क्नसुरञ्जोऽमन्ताश्चेति मित्त्वे मितां ह्रस्वः।

तस्मै सभ्याः सभार्य्याय गोप्त्रे गुप्ततमेन्द्रियाः ।
अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे ॥ ५५ ॥
विधेः सायन्तनस्यान्ते स ददर्श तपोनिधिम् ।
अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ॥ ५६ ॥

इति क्रत्वः । दीर्घपाठे मितां ह्रस्व इति सूत्रे वा चित्तविरागे इत्यतोवेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणात् ह्रस्वाभाव इति वृत्तिकारः ॥ ५४ ॥

तस्मै इति । सभायां साधवः सभ्याः । सभायां यत् इति यप्रत्ययः । गुप्ततमेन्द्रियाः अत्यन्तनियमितेन्द्रियाः मुनयः सभार्य्याय गोप्त्रे रक्षकाय नयः शास्त्रम् एव चक्षुः तत्त्वावेदकं प्रमाणं यस्य तस्मै नयचक्षुषे अत एव अर्हते प्रशस्ताय पूज्याय इत्यर्थः । अर्हः प्रशंसायामिति शत्प्रत्ययः । तस्मै राज्ञे अर्हणां पूजां चक्रुः । "पूजानमस्यापचितिः सपर्य्यार्चार्हणाः समाः" इत्यमरः ॥ ५५ ॥

विधेरिति । स राजा सायन्तनस्य सायम्भवस्य । सायञ्चिरमित्यादिना ट्युल्प्रत्ययः । विधेः जपहोमाद्यनुष्ठानस्य अन्ते अवसाने अरुन्धत्या अन्वासितं पश्चात् उपवेशनेन उपसेवितम् । कर्म्मणि क्तः, उपसर्गवशात् सकर्म्मकत्वम् । अन्वास्यैनामित्यादिवदुपपद्यते । तपोनिधिं वसिष्ठं स्वाहया स्वाहादेव्या । "अथाग्नायी स्वाहा च हुतभुक्प्रिया" इत्यमरः । अन्वासितं हविर्भुजम् इव ददर्श । "समित्पुष्पकुशाग्न्यम्बुमृदन्नाक्षतपाणिकः । जपं होमञ्च कुर्व्वाणो नाभिवाद्यो द्विजो भवेत् ॥" इति मनुष्ठा-

तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी।
तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः॥ ५७॥
तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम्।
पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः॥ ५८॥

नस्य मध्ये अभिवादननिषेधाद्विधेरन्ते ददर्शेत्युक्तम्। अन्वासितत्वाच पतिव्रताधर्मत्वेनोक्तं न तु कर्माङ्गत्वेन, विधेरन्ते इति कर्मणः समाप्त्यभिधानात्॥ ५६॥

तयोरिति। मागधी मगधराजपुत्री राज्ञी सुदक्षिणा राजा च तयोः अरुन्धतीवसिष्ठयोः पादान् जगृहतुः। "पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमरः। पादग्रहणमभिवादनम्। गुरुपत्नी गुरुश्च कर्त्तारौ सा च स च तौ सुदक्षिणादिलीपौ कर्मभूतौ प्रीत्या हर्षेण प्रतिननन्दतुः आशीर्वादादिभिः सम्भावयाञ्चक्रतुः इत्यर्थः॥ ५७॥

तमिति। मुनिः अतिथ्यर्थम् आतिथ्यम्। अतिथेर्ञ्य इति ञ्यप्रत्ययः। आतिथ्यस्य क्रिया तया शान्तः रथक्षोभेण यः परिश्रमः सः यस्य सः तं तथोक्तं राज्यम् एव आश्रमः तत्र मुनिं मुनितुल्यम् इत्यर्थः। तं दिलीपं राज्ये कुशलं पप्रच्छ। पृच्छतेस्तु द्विकर्मकत्वमित्युक्तम्। यद्यपि राज्यशब्दः पुरोहितादिष्वन्तर्गतत्वाद्राजकर्मवचनः(१)तथाप्यत्र सप्ताङ्गवचनः "उपपन्नं ननु शिवं सप्तस्वङ्गेषु" इति उत्तरविरोधात्। तथाह मनुः,

(१). "पत्यन्तपुरोहितादिभ्यो यक्" इति सूत्रेण राजशब्दात् राज्ञो कर्म इत्यर्थे यक्। तथाप्यत्र समाधावस्थीत्यं, समाहृतः कल्पते इति।

**अथाथर्वनिधेस्तस्य(१) विजितारिपुरः पुरः।**
**अर्थ्यामर्थपतिर्वाचम् आददे वदतां वरः ॥ ५९ ॥**
**उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे।**

"स्वाम्यमात्यपुरं राष्ट्रं कोषदण्डौ तथा सुहृत्। सप्तैतानि समस्तानि लोकेऽस्मिन् राज्यमुच्यते" इति। तत्र, "ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्। वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥" इति मनुवचने सत्यपि तस्य राज्ञो महानुभावत्वात् ब्राह्मणोचितः कुशलप्रश्न एव कृत इत्यनुसन्धेयम् अत एवोक्तं राज्याथमसुनिमिति ॥ ५८ ॥

अथेति। अथ प्रश्नानन्तरं विजितारिपुरः विजितशत्रुनगरः वदतां वक्तॄणां वरः श्रेष्ठः। यतश्च निर्द्धारणमिति षष्ठी। अर्थपतिः राजा अथर्वणः अथर्ववेदस्य निधेः तस्य मुनेः पुरः अग्रे अर्थ्याम् अर्थात् अनपेताम्। "धर्म्मपथ्यर्थन्यायादनपेत" इति यप्रत्ययः। वाचम् आददे वक्तुम् उपक्रान्तवान् इत्यर्थः। अथर्वनिधित्वेनेन पुरोहितत्वाभिप्रायात् प्रकृतकार्य्यनिर्व्वाहकत्वं मुनेरस्तीति सूच्यते। यथाह कामन्दकः, "त्रय्याञ्च दण्डनीत्याञ्च कुशलः स्यात् पुरोहितः। अथर्वविहितं कुर्यात् नित्यं शान्तिकपौष्टिकम्"। इति ॥ ५९ ॥

उपपन्नमिति। हे गुरो सप्तसु अङ्गेषु स्वाम्यमात्यादिषु।

---

(१) अथर्वनिधेः अथर्ववेदाभिज्ञस्य; अथर्वनिधिपदेन दुरितोपशमननिमित्तशान्तिकपौष्टिकप्रवीणत्वं बोध्यते इति दिनकरः। तदाह मिताक्षरायां।
पुरोहितञ्च कुर्वीत दैवज्ञमुदितोदितम्।
दण्डनीत्याञ्च कुशलं अथर्वाङ्गिरसे तथेति॥

दैवीनां मानुषीणाञ्च प्रतिहर्त्ता त्वमापदाम् ॥ ६०॥
तव मन्त्रकृतो मन्त्रैः दूरात् प्रशमितारिभिः।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥ ६१ ॥

"स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च। सप्ताङ्गानि" इत्यमरः। शिवं कुशलम् उपपन्नं ननु युक्तम् एव। ननु अवधारणे। "प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः। कथम्? इत्यत्राह, यस्य मे दैवीनां दैवेभ्यः आगतानां दुर्भिक्षादीनां, मानुषीणां मनुष्येभ्यः आगतानां चौरभयादीनाम्। उभयत्रापि तत आगत इत्यण्, टिड्ढाणञित्यादिना ङीप्। आपदां व्यसनानां त्वं प्रतिहर्त्ता वारयिता असि। अत्राह कामन्दकः, "हुताशनो जलं व्याधिः दुर्भिक्षं मरणं तथा। इति पञ्चविधं दैवं मानुषं व्यसनं ततः। आयुक्तकेभ्य(१)श्चौरेभ्यः परेभ्यो राजवल्लभात्। पृथिवीपतिलोभाच्च नराणां पञ्चधा मतम्" ॥६०॥

तत्र मानुषापत्प्रतीकारमाह, तवेति। दूरात् परोक्षे एव प्रशमितारिभिः, मन्त्रान् कृतवान् मन्त्रकृत् "सुकर्म्मपापमन्त्रपुण्येषु कृञः" इति क्विप्। तस्य मन्त्रकृतः मन्त्राणां स्रष्टुः प्रयोक्तुः वा तव मन्त्रैः कर्त्तृभिः दृष्टं प्रत्यक्षं यत् लक्ष्यं तन्मात्रं भिन्दन्ति इति दृष्टलक्ष्यभिदः मे शराः प्रत्यादिश्यन्ते इव, वयमेव समर्थाः किमेभिः पिष्टपेषकैरिति निराक्रियन्ते इव इत्युत्प्रेक्षा। "प्रत्यादेशो निराकृतिः" इत्यमरः। त्वमन्त्रसामर्थ्यादेव नः पौरुषं फलतीति भावः ॥ ६१ ॥

(१) आयुक्तकेभ्यः मन्त्रिभ्यः, कर्माध्यक्षेभ्यः।

हविरावर्ज्जितं होतः त्वया विधिवदग्निषु।
वृष्टिर्भवति शस्यानाम् अवग्रहविशोषिणाम्॥ ६२॥
पुरुषायुषजीविन्यः निरातङ्का(१) निरीतयः।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्च्चसम्॥ ६३॥

सम्प्रति दैविकापत्प्रतीकारमाह, हविरिति। हे होतः! त्वया विधिवत् अग्निषु आवर्ज्जितं प्रक्षिप्तं हविः आज्यादिकं कर्त्तृ अवग्रहः वर्षप्रतिबन्धः। अवे ग्रहौ वर्षप्रतिबन्धे इति अप् प्रत्ययः। "वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ" इत्यमरः। तेन विशोषिणां विशुष्यतां शस्यानां वृष्टिः भवति वृष्टिरूपेण शस्यान्युपजीवयतीति भावः। अत्र मनुः, "अग्नौ दत्ताहुतिः सम्यक् आदित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः।" इति॥ ६२॥

पुरुषेति। आयुः जीवितकालः पुरुषस्य आयुः पुरुषायुषं वर्षशतम् इत्यर्थः। "शतायुर्वै पुरुषः" इति श्रुतेः। अचतुरादिसूत्रेण अच्प्रत्ययान्तो निपातः। मदीयाः प्रजाः पुरुषायुषं जीवन्ति इति पुरुषायुषजीविन्यः निरातङ्काः निर्भयाः। "आतङ्को भयमाशङ्का" इति हलायुधः। निरीतयः अतिवृष्ट्यादिरहिताः इति यत्, तस्य सर्व्वस्य त्वद्ब्रह्मवर्च्चसं तव व्रताध्ययनसम्पत्तिः एव हेतुः। "व्रताध्ययनसम्पत्तिः इत्येतत् ब्रह्मवर्च्चसम्" इति हलायुधः। ब्रह्मणः वर्च्चः ब्रह्मवर्च्चसम्। ब्रह्महस्तिभ्यां वर्च्चस इति अच्प्रत्ययः। "अतिवृष्टिरनावृष्टिः

(१) आङ्पूर्व्वात् तचतेः घञीत्यर्थकनो यत्।

त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।
सानुबन्धाः कथं न स्युः सम्पदो मे निरापदः ॥६४॥
किन्तु वध्वां तवैतस्याम् अदृष्टसदृशप्रजम् ।
न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥ ६५ ॥
नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।

मूषिकाः शलभाः शुकाः(१) । अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः" । इति कामन्दकः ॥ ६३ ॥

त्वयेति । ब्रह्मा योनिः कारणं यस्य तेन ब्रह्मपुत्रेण गुरुणा त्वया एवम् उक्तप्रकारेण चिन्त्यमानस्य अनुध्यायमानस्य अत एव निरापदः व्यसनहीनस्य मे सम्पदः सानुबन्धाः अनुस्यूताः अविच्छिन्नाः इति यावत् कथं न स्युः ? स्युरेव इत्यर्थः ॥ ६४ ॥

सम्प्रति आगमनप्रयोजनमाह, किन्त्विति । किन्तु तव एतस्यां वध्वां स्नुषायाम् । "वधूर्जाया स्नुषा स्त्री च" इत्यमरः । अदृष्टा सदृशी अनुरूपा प्रजा येन तं मां सद्वीपा अपि रत्नानि(२) सूयते इति रत्नसूः अपि । सत्सूद्विषेत्यादिना क्विप् । मेदिनी न अवति न प्रीणाति । अवधातुः रक्षणगतिप्रीत्याद्यर्थेषु उपदेशात् अव प्रीणने । रत्नसूरपीत्यनेन सर्व्वरत्नेभ्यः पुत्ररत्नमेव श्लाघ्यमिति सूचितम् ॥ ६५ ॥

तदेव प्रतिपादयति, नूनमिति । मत्तः परं मदनन्तरम् ।

(१) पक्षा इति वा पाठः ।

(२) रत्नानि जातिश्रेष्ठवस्तूनि इति यावत् । तदुक्तं जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते इति ।

न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः ॥ ६६ ॥
मत्परं दुर्लभं मत्वा नूनमावर्ज्जितं मया ।
पयः पूर्वैः स्वनिःश्वासैः कवोष्णमुपभुज्यते ॥ ६७ ॥
सोऽहमिज्याविशुद्धात्मा प्रजालोपनिमीलितः ।
प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः(१) ॥६८॥

पञ्चम्यास्तसिल् । पिण्डविच्छेददर्शिनः पिण्डदानविच्छेदम् उत्प्रेक्षमाणाः वंशोद्भवाः वंश्याः पितरः, स्वधा इत्यव्ययं पितृभोज्ये वर्त्तते, तस्य संग्रहे तत्पराः आसक्ताः सन्तः श्राद्धे पितृकर्म्मणि । "पितृदानं निवापः स्यात् श्राद्धं तत्कर्म्म शास्त्रतः" इत्यमरः । प्रकामभुजः पर्य्याप्तभोजिनः न भवन्ति नूनं सत्यम् । "कामं प्रकामं पर्य्याप्तम्" इत्यमरः । निर्धना ह्यापद्धनं कियदपि संगृह्णन्तीति भावः ॥ ६६ ॥

मत्परमिति । मत्परं मदनन्तरम् । अन्यारादित्यादिना पञ्चमी । दुर्लभं दुर्लभ्यं मत्वा मया आवर्ज्जितं दत्तं पयः पूर्वैः पितृभिः स्वनिःश्वासैः दुःखजैः कवोष्णम् ईषदुष्णं यथा तथा उपभुज्यते नूनमिति तर्के । कवोष्णमिति कुशब्दस्य कवादेशः । "कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति" इत्यमरः ॥ ६७ ॥

सोऽहमिति । इज्या यागः । व्रजयजोर्भावे क्यपिति क्यप् प्रत्ययः । तया विशुद्धात्मा विशुद्धचेतनः प्रजालोपेन सन्तत्यभावेन निमीलितः कृतनिमीलनः सः अहं लोक्यते इति लोकः

(१) "मेरुं प्रदक्षिणीकुर्व्वन्तं सूर्यं ये यत्र पश्यन्ति, सा च तेषां प्राची, तेषां च वामभाग एव मेरुः । अतः सर्व्वेषां सर्व्वदा मेरुरुत्तर एव । दक्षिण भागे च लोका-

लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम् ।
सन्ततिः शुद्धवंश्या हि परत्रेह च शर्म्मणे ॥ ६९ ॥

न लोक्यते इति अलोकः लोकश्च अलोकश्च अन्तः इति, लोकश्चासौ अलोकश्चेति वा लोकालोकः चक्रवालः अचलः इव । लोकालोकश्चक्रवालः इत्यमरः । प्रकाश्यते इति प्रकाश्यः देवर्णविमोचनात्, न प्रकाश्यते इति अप्रकाश्यः पितृणाविमोचनात् । यथायथ् । अस्मीति शेषः। लोकालोकोऽपि अन्तःसूर्य्यसम्पर्कात् बहिस्तमोव्याप्तया च प्रकाश्यश्चाप्रकाश्यश्चेति मन्तव्यम् ॥ ६८ ॥

ननु तपोदानादिसम्पन्नस्य किमपत्यैरित्यत्राह, लोकान्तरेति । समुद्भवति अस्मादिति समुद्भवः कारणं तपोदाने समुद्भवः यस्य तत् तपोदानसमुद्भवं यत् पुण्यं तत् लोकान्तरे परलोके सुखं सुखकरं, शुद्धवंशे भवा शुद्धवंश्या सन्ततिः हि परत्र परलोके इह च लोके शर्म्मणे सुखाय "शर्म्मशातसुखानि च" इत्यमरः । भवतीति शेषः ॥ ६९ ॥

---

लोकाथम्:। तस्मादुत्तरस्यां दिशि सदा रात्रिः दक्षिणस्यां च सदा दिनम्" इति। See Wilson's Vishnupurana Vol. III. page 243. But Wilson remarks.—

"Beyond the sea of fresh water is the mountain-belt called Lokaloka the circular boundary between the world and void space. It is so termed, because the world is separated by it, from that which is not world; for which it was placed by Isvara, on the limit of the three worlds; and its height and breadth are such that the rays of the heavenly luminaries from the sun to the polar star, which spread over the regions within the mountain, cannot penetrate beyond it. See Wilson's Vishnupurana Vol II p. 205.

तया हीनं विधातर्मां(१) कथं पश्यन् न दूयसे।
सिक्तं स्वयमिव स्नेहाद् वन्ध्यमाश्रमवृक्षकम् ॥७०॥
असह्यपीड़ं भगवन् ऋणमन्त्यमवेहि मे।
अरुन्तुदमिवालानम् अनिर्वाणस्य दन्तिनः ॥ ७१ ॥

तयेति। हे विधातः स्रष्टः तया सन्तत्या हीनम् अनपत्यम् मां स्नेहात् प्रेम्णा स्वयम् एव सिक्तं जलसेकेन वर्द्धितं वन्ध्यम् अफलम्। "वन्ध्योऽफलोऽवकेशी च" इत्यमरः। आश्रमस्य वृक्षकं वृक्षपोतम् (२) इव पश्यन् कथं न दूयसे न परितप्यसे। विधातरित्यनेन समर्थोऽप्युपेक्षसे इति गम्यते ॥७०॥

असह्येति। हे भगवन् मे मम अन्त्यम् ऋणं पैतृकम् ऋणम् अनिर्वाणस्य मज्जनरहितस्य। "निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने" इति यादवः। दन्तिनः गजस्य अरुः मर्म्म तुदतीति अरुन्तुदं मर्म्मस्पृक्। "व्रणोऽस्त्रियामीर्म्ममरुः" इति "अरुन्तुदस्तु मर्म्मस्पृक्" इति च अमरः। विध्वरुषोस्तुद इति खशप्रत्ययः, अरुर्द्विषदित्यादिना मुमागमः। आलानं बन्धनस्तम्भम् इव। "आलानं बन्धनस्तम्भे" इत्यमरः। असह्या सोढुम् अशक्या पीड़ा दुःखं यस्मिन् तत् अवेहि दुःसहदुःखजनकं विद्धि इत्यर्थः। निर्वाणोद्यानयमनानि त्रीणि गजकर्म्माणि इति पालकाव्ये। "ऋणं देवस्य यागेन ऋषीणां दानकर्म्मणा। सन्तत्या पितृलोकानां शोधयित्वा परिव्रजेत्" ॥७१॥

(१) अद्यः पुत्रदान् प्रजापतित्वात् "विधातः" इत्युक्तम्।
(२) वृक्षोदमांमिति क्वचित् पाठः।

तस्मान्मुच्ये यथा तात (१) संविधातुं तथार्हसि ।
इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ॥७२॥
इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः ।
क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ॥ ७३ ॥
सोऽपश्यत् प्रणिधानेन सन्ततेः स्तम्भकारणम् ।
भावितात्मा भुवो भर्त्तुः अथैनं प्रत्यबोधयत् ॥ ७४ ॥

तस्मादिति । हे तात तस्मात् पैतृकात् ऋणात् यथा मुच्ये मुक्तो भवामि । कर्त्तृकर्म्मणि लट् । तथा संविधातुं कर्त्तुम् अर्हसि, हि यस्मात् कारणात् इक्ष्वाकूणां इक्ष्वाकुवंश्यानाम् । तद्राजत्वात् बहुष्वणो लुक् । दुरापे दुष्प्राप्ये अर्थे सिद्धयः त्वदधीनाः त्वदायत्ताः इक्ष्वाकूणामिति शेषे षष्ठी,(२) न लोकेत्यादिना कृद्योगे षष्ठीनिषेधात् ॥ ७२ ॥

इतीति । इति राज्ञा विज्ञापितः ऋषिः ध्यानेन स्तिमिते लोचने यस्य सः ध्यानस्तिमितलोचनः निश्चलाक्षः सन् क्षणमात्रं सुप्तमीनः ह्रदः इव तस्थौ ॥ ७३ ॥

सोऽपश्यदिति । सः मुनिः प्रणिधानेन चित्तैकाग्र्येण भावितात्मा शुद्धान्तःकरणः भुवो भर्त्तुः नृपस्य सन्ततेः स्तम्भकारणं सन्तानप्रतिबन्धकारणम् अपश्यत्, (३) अथ अनन्तरम् एनं नृपं

पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः ।
आसीत् कल्पतरुच्छायामाश्रिता सुरभिः पथि ॥७५॥
धर्म्मलोपभयाद्राज्ञीम् ऋतुस्नातामिमां स्मरन् ।
प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः ॥७६॥

प्रत्यबोधयत् स्पष्टं ज्ञापितवान् इत्यर्थः । एनमिति गतिबुद्धीत्यादिना अणिकर्त्तुः कर्म्मत्वम् ॥ ७४ ॥

पुरेति । पुरा पूर्वं शक्रम् इन्द्रम् उपस्थाय संसेव्य उर्व्वीं प्रति भुवम् उद्दिश्य यास्यतः गमिष्यतः तव पथि कल्पतरुच्छायाम् आश्रिता सुरभिः कामधेनुः आसीत् तत्र स्थिता इत्यर्थः ॥ ७५ ॥

ततः किमित्याह, धर्म्मलोपेति । ऋतुः पुष्पं रजः इति यावत् । "ऋतुः स्त्रीकुसुमेऽपि च" इत्यमरः । ऋतुना निमित्तेन स्नाताम् इमां (पुरोवर्त्तिनीम्) राज्ञीं सुदक्षिणां धर्म्मस्य ऋत्वभिगमनलक्षणस्य लोपात् भ्रंशात् यत् भयं तस्मात् स्मरन् ध्यायन् । "मृदङ्गं दैवतं विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्वीत विज्ञातांश्च वनस्पतीन्" इति शास्त्रात् प्रदक्षिणक्रियार्हायां प्रदक्षिणकरणयोग्यायां तस्यां धेन्वां त्वं साधु प्रदक्षिणादिसत्कारं न आचरः न आचरितवान् असि । व्यासक्ता हि विस्मरन्तीति भावः । ऋतुकान्ताभिगमने मनुः "ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा" इति । अकरणे दोषमाह

"भाविताभा" इति विशेषणेन, मुनिर्निश्चित्य भाविताभ:करणत्वं प्रति कारणविशेषमन्वा ... इति तु ... प्रति ... कारणमा- ... इति द्रष्टव्यम् । भाविताभा ... इति भावः ।

अवजानासि मां यस्मात् अतस्ते न भविष्यति।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥७७॥
स शापो न त्वया राजन् न च सारथिना श्रुतः।
नदत्याकाशगङ्गायाः(१)स्रोतस्युद्दामदिग्गजे ॥७८॥

पराशरः, "ऋतुस्नातान्तु यो भार्य्यां स्वस्थः सन्नोपगच्छति। बालगोघ्नापराधेन विध्यते नात्र संशयः॥" इति॥ ७६॥

अवजानासीति। यस्मात् कारणात् माम् अवजानासि तिरस्करोषि अतः कारणात् मत्प्रसूतिं मम सन्ततिम् अनाराध्य असेवयित्वा ते तव प्रजा न भविष्यतीति सा सुरभिः त्वां शशाप। शप आक्रोशे॥ ७७॥

कथं तदस्माभिर्न श्रुतमित्याह, स शाप इति। हे राजन् स शापः त्वया न श्रुतः, सारथिना च न श्रुतः। श्रु श्रवणे। हेतुमाह, क्रीड़ार्थम् आगताः उद्दामानः दाम्नः उद्गताः दिग्गजाः यस्मिन् तथोक्ते आकाशगङ्गायाः मन्दाकिन्याः स्रोतसि प्रवाहे नदति सति॥ ७८॥

---

(1) From the third region of the atmosphere which is the seat of Visnu, the river Ganges takes its rise from his foot, Dhruva receives and sustains her on his head; and thence the seven Rishis practise the exercises of austerity in her waters. The orb of the moon is encompassed by her waters, which issuing from it, alights on the summit of Meru and thence flows to the four quarters of the earth for its purification. The situation of the source of the Ganges of heaven identifies it with the milky-way. See Wilson's V. Purana vol. II. p. 272.

ईप्सितं तदवज्ञानात् विद्धि सार्गलमात्मनः।
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥ ७९ ॥
हविषे दीर्घसत्त्रस्य(१) सा चेदानीं प्रचेतसः।
भुजङ्गपिहितद्वारं पातालमधितिष्ठति ॥ ८० ॥

अस्तु प्रस्तुते किमायातमित्यत्राह, ईप्सितमिति। तदवज्ञानात् तस्याः धेनोः अवज्ञानात् अपमानात् आत्मनः स्वस्य आप्तुम् इष्टम् ईप्सितं मनोरथम्। आप्नोतेः सनन्तात् क्तः, ईकारश्च। सार्गलं सप्रतिबन्धं विद्धि जानीहि। तथाहि, पूज्यपूजायाः व्यतिक्रमः अतिक्रमणं श्रेयः प्रतिबध्नाति ॥ ७९ ॥

तर्हि गत्वा तामाराधयामि, सा वा कथञ्चिदागमिष्यतीत्याशा न कर्त्तव्येत्याह, हविष इति। सा च सुरभिः इदानीं दीर्घं सत्त्रं चिरकालसाध्यो यागविशेषः यस्य तस्य प्रचेतसः (वरुणस्य) हविषे दध्याज्यादिहविरर्थं भुजङ्गपिहितद्वारं भुजङ्गावरुद्धद्वारं ततः दुष्प्रवेशं पातालम् अधितिष्ठति पाताले तिष्ठति इत्यर्थः। अधिशीङ्स्थासां कर्मे ति कर्म्मत्वम् ॥ ८० ॥

(1) A Satra means a sacrifice which may be accomplished in one day, or in a thousand years. But from this general opinion, Katyayana dissents and argues that, human life according to the vedic doctrine "शतायुर्वै पुरुषः" consists on an average of a hundred years and that, it is impossible to prolong a sacrifice for a thousand years. Hence he concludes that, a year in this instance means a day, so that a sacrifice can, at most, extend over a period of a thousand days, but no farther.

"बहुभी दीयते यत्र बहुभिः सपर्यते ।
बर्णांरौ बहवी यत्र तत् सत्त्रमभिधीयते" इति।

सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः।
आराधय सपत्नीकः प्रीता कामदुघा हि सा ॥८१॥
इति वादिन एवास्य होतुराहुतिसाधनम्।
अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥८२॥
ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला।
बिभ्रती श्वेतरोमाङ्कं सन्ध्येव शशिनं नवम् ॥८३॥

तर्हि का गतिरित्यत आह, सुतामिति। तस्याः सुरभेः इयं तदीया, तां सुतां सुरभेः प्रतिनिधिं कृत्वा शुचिः शुद्धः, सह पत्न्या वर्त्तते इति सपत्नीकः सन्। नद्यृतश्चेति कप् प्रत्ययः, आराधय, हि यस्मात् कारणात् सा प्रीता तुष्टा सती कामान् दोग्धीति कामदुघा भवति। दुहः कप् घश्चेति कप् प्रत्ययः, घादेशश्च ॥ ८१ ॥

इतीति। इति वादिनः वदतः एव होतुः हवनशीलस्य, तृन्निति तृन्प्रत्ययः, अस्य मुनेः आहुतीनां साधनं कारणं नन्दयतीति व्युत्पत्त्या नन्दिनी नाम अनिन्द्या अगर्ह्या प्रशस्ता धेनुः वनात् आववृते प्रत्यागता। "अव्याक्षेपो भविष्यन्त्याः कार्य्यसिद्धेर्हि लक्षणम्" इति भावः (१) ॥८२॥

सम्प्रति धेनुं विशिनष्टि, ललाटेति। पल्लववत् स्निग्धा (२) चासौ पाटला च। सन्ध्यायामप्येतद्विशेषणं योज्यम्। ललाटे उदयः यस्य सः ललाटोदयः तम्, आभुग्नम् ईषद्वक्रम्। "आविद्धं

1. See Canto 10, stanza 9. of this poem.

(२) द्वयोरन्यतरस्य विशेषणविवक्षायां समानाधिकरणसमासः।

भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि(१)।
प्रस्रवेनाभिवर्षन्ती वत्सालोकप्रवर्त्तिना ॥ ८४ ॥
रजःकणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमन्तिकात्।
तीर्थाभिषेकजां शुद्धिम् आदधाना महीक्षितः॥८५॥

कुटिलं भुग्नं वेल्लितं वक्रमित्यपि" इत्यमरः। उदितश्चेति निष्ठा-तस्य नत्वम्। श्वेतरोमाणि एव चन्द्रः तं बिभ्रती नवं शशिनं बिभ्रती सन्ध्या इव स्थिता ॥ ८३ ॥

भुवमिति। कोष्णेन किञ्चित् उष्णेन। कवञ्चोष्णे इति चकारात् कादेशः। अवभृथात् अपि अवभृथस्नानात् अपि मेध्येन पवित्रेण। "पूतं पवित्रं मेध्यञ्च" इत्यमरः। वत्सस्य आलोकेन प्रदर्शनेन प्रवर्त्तिना प्रवहता प्रस्रवेन क्षीराभिस्यन्द-नेन भुवम् अभिवर्षन्ती सिञ्चन्ती, कुण्डम् इव ऊधः आपीनं यस्याः सा कुण्डोध्नी। "ऊधस्तु क्लीवमापीनम्" इत्यमरः। ऊधसोऽनङित्यनङादेशः। बहुव्रीहेरूधसोङीप् इति ङीप् ॥८४॥

रज इति। खुरोद्धूतैः अन्तिकात् समीपे गात्रं स्पृशद्भिः। दूरान्तिकार्थेभ्यो द्वितीया चेति चकारात् पञ्चमी। रजसां कणैः महीं क्षियति ईष्टे इति महीक्षित् तस्य तीर्थाभिषेकेण जातां तीर्थाभिषेकजां शुद्धिम् आदधाना कुर्वाणा। एतेन वायव्यं स्नानमुक्तम्। उक्तञ्च मनुना, "आग्नेयं भस्मना स्नानम् अव-गाह्यन्तु वारुणम्। आपोहिष्टेति च ब्राह्मं वायव्यं गोरजः-स्मृतम्।" इति ॥ ८५ ॥

(१) मधतेरभादेशात् यत्। मेध्यं यागाय यत्, अतः एतस्मिन्नर्थे।

तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः।
याज्यमाशंसितावन्ध्यप्रार्थनं पुनरब्रवीत् ॥ ८६ ॥
अदूरवर्त्तिनीं सिद्धिं राजन् विगणयात्मनः।
उपस्थितेयं कल्याणी नाम्नि कीर्त्तित एव यत् ॥८७॥
वन्यवृत्तिरिमां शश्वत् आत्मानुगमनेन गाम्।
विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ॥ ८८ ॥

तामिति। निमित्तज्ञः शकुनज्ञः तपोनिधिः वसिष्ठः पुण्यं दर्शनं यस्याः तां, तां धेनुं दृष्ट्वा आशंसितं मनोरथः। नपुंसके भावे क्तः। तत्र अवन्ध्यं सफलं प्रार्थनं यस्य तम्, अवन्ध्यमनोरथम् इत्यर्थः। याजयितुं योग्यं याज्यं पार्थिवं पुनः अब्रवीत् ॥ ८६ ॥

अदूरेति। हे राजन् आत्मनः कार्य्यस्य सिद्धिम् अदूरवर्त्तिनीं शीघ्रभाविनीं विगणय विद्धि, यत् यस्मात् कारणात् कल्याणी मङ्गलमूर्त्तिः। बह्वादिभ्यश्चेति ङीप्। इयं धेनुः नाम्नि कीर्त्तिते कथिते सति एव उपस्थिता ॥ ८७ ॥

वन्येति। वने भवं वन्यं कन्दमूलादिकं वृत्तिः आहारः यस्य तथाभूतः सन् इमां गां शश्वत् सदा आप्रसादात् अविच्छेदेन इत्यर्थः। आत्मनः तव कर्त्तुः अनुगमनेन अनुसरणेन अभ्यसनेन अनुष्ठातुः अभ्यासेन विद्याम् इव प्रसादयितुं प्रसन्नां कर्त्तुम् अर्हसि ॥ ८८ ॥

प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः।
निषसायां निषीदास्यां पीताम्भसि पिबेरपः ॥८९॥
वधूर्भक्तिमती चैनाम् अर्चिताम् आतपोवनात्।
प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ॥ ९० ॥
इत्याप्रसादादस्यास्त्वं परिचर्य्यापरो भव।
अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम् ॥९१॥

गवानुसरणप्रकारमाह, प्रस्थितेति। अस्यां नन्दिन्यां प्रस्थितायां प्रतिष्ठेथाः प्रयाहि। "समवप्रविभ्यः स्थः" इत्यात्मनेपदम्। स्थितायां निवृत्तगतिकायां स्थितिम् आचरेः स्थितिं कुरु तिष्ठे-त्यर्थः। निषस्रायाम् उपविष्टायां निषीद उपविश। विध्यर्थे लोट्। पीतम् अम्भः यया तस्यां पीताम्भसि सत्याम् अपः पिबेः पिब ॥ ८९॥

वधूरिति। वधूः जाया च (तवेति शेषः) भक्तिमती प्रयता सती गन्धादिभिः अर्चिताम् एनां गां प्रातः आ तपोवनात् तपो-वनपर्य्यन्तम्। आङ्मर्य्यादायां पदद्वयञ्चैतत्। अन्वेतु अनुगच्छतु सायम् अपि प्रत्युद्व्रजेत् प्रत्युद्गच्छेत्। (अत्रापि आतपोवना-दिति वक्तव्यम्)। विध्यर्थे लिङ् ॥ ९० ॥

इतीति। इत्यनेन प्रकारेण त्वम् आ प्रसादात् प्रसादपर्य्यन्तम्। आङ्मर्य्यादाभिविध्योरित्यस्य वैभाषिकत्वात् असमासत्वम्। अस्याः धेनोः परिचर्य्यापरः शुश्रूषापरः भव, ते तव अविघ्नं विघ्नस्य अभावः अस्तु। अव्ययं विभक्तीत्यादिना अर्थाभावेऽव्ययी-

तथेति प्रतिजग्राह प्रीतिमान् सपरिग्रहः ।
आदेशं देशकालज्ञः शिष्यः शासितुरानतः ॥ ९२ ॥
अथ प्रदोषे दोषज्ञः संवेशाय विशाम्पतिम्(१) ।
सूनुः सूनृतवाक् स्रष्टुः विससर्ज्जोदितश्रियम् ॥९३॥

भावः । पित्रेव पुत्रिणां सत्पुत्रवताम् । प्रशंसायामिनिप्रत्ययः । धुरि अग्रे स्थेयाः तिष्ठेः । आशीरर्थे लिङ्, एर्लिङीत्याकारस्यै-कारादेशः । त्वत्सदृशो भवत्पुत्रोऽस्त्वितिभावः ॥ ९१ ॥

तथेति । देशकालज्ञः देशः अग्निसन्निधिः, कालः अग्नि-होत्रावसानसमयः विशिष्टदेशकालोत्पन्नमार्षं ज्ञानमव्याहतम् इति जानन् अत एव प्रीतिमान् शिष्यः अन्तेवासी राजा सपरिग्रहः सपत्नीकः । "पत्नीपरिजनादानमूलशापाः परि-ग्रहाः" इत्यमरः । आनतः विनयनम्रः सन् शासितुः गुरोः आदेशम् आज्ञां तथेति प्रतिजग्राह स्वीचकार ॥ ९२ ॥

अथेति । अथ प्रदोषे रात्रौ दोषज्ञः विद्वान् । "विद्वान् विपश्चिद् दोषज्ञः" इत्यमरः । सूनृतवाक् सत्यप्रियवाक् । "प्रियं सत्यञ्च सूनृतम्" इति हलायुधः । स्रष्टुः सूनुः ब्रह्मपुत्रः मुनिः । अनेन प्रकृतकार्य्यनिर्वाहकत्वं सूचयति । उदितश्रियं(२) विशा-

(1) In vedic hymns the epithet विशांपति, or विश्पति, is applied to the god of fire signifying a nourisher of all creatures, especially of sacrificers, as is found in "मिथो नीषस् विश्पतिर्होता" &c Ri 1 26 7 and again in the hymn "विशांत्वा विशां पतिं हवामहे" & Ri v 22 8

(२) प्रीतिमत्त्वात् विवर्द्धितश्रीभमित्यर्थः ।

सत्यामपि तपःसिद्धौ नियमापेक्षया मुनिः ।
कल्पवित् कल्पयामास वन्यामेवास्य संविधाम् ॥६४॥
निर्दिष्टां कुलपतिना(१)स पर्णशालाम्
अध्यास्य प्रयतपरिग्रहद्वितीयः ।

ध्यतिं मनुजेश्वरम् । "द्वौ विशौ वैश्यमनुजौ" इत्यमरः । संवेशाय निद्रायै । "स्याविद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि" इत्यमरः । विससर्ज आज्ञापयामास ॥ ९३ ॥

सत्यामपीति । कल्पवित् व्रतप्रयोगाभिज्ञः मुनिः तपःसिद्धौ सत्याम् अपि तपसा एव राजयोग्याहारसम्पादनसामर्थ्ये सत्यपि इत्यर्थः । नियमापेक्षया तदाप्रभृति एव व्रतचर्यापेक्षया अस्य राज्ञः वन्याम् एव संविधीयते अनयेति संविधां कुशादिशयनसामग्रीम् । आतश्चोपसर्गे इति कप्रत्ययः । अकर्त्तरि च कारके संज्ञायामिति कर्म्मादार्थत्वम् । कल्पयामास सम्पादयामास ॥९४॥

निर्दिष्टामिति । स राजा कुलपतिना मुनिकुलेश्वरेण वसिष्ठेन निर्दिष्टां पर्णशालाम् अध्यास्य अधिष्ठानं कृत्वा इत्यर्थः । अधिशीङ्स्थासां कर्म्म इत्यादिना आधारस्य कर्म्मत्वं कर्म्मणि द्वितीया । प्रयतः नियतः परिग्रहः पत्नी द्वितीयः यस्येति सः तथोक्तः, कुशानां शयने संविष्टः सुप्तः सन् तस्य वसिष्ठस्य शिष्याणाम् अध्ययनेन अपररात्रे वेदपाठेन निवेदितम् अवसानं यस्याः तां

(१) "मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् ।
अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः" इति ।

तच्छिष्याध्ययननिवेदितावसानां
संविष्टः कुशशयने निशां निनाय ॥ ८५ ॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ वसिष्ठाश्रमगमनो नाम प्रथमः सर्गः।

---

निशां निनाय गमयामास। अपररात्रे अध्ययने मनुः, "निशान्ते न परिश्रान्तः ब्रह्माधीत्य पुनः स्वपेत्"। "न चापररात्रमधीत्य पुनः स्वपेत्" इति गौतमश्च। महर्षिणोवृत्तमेतत्। तदुक्तम्, "श्रौतीगस्त्रिदशयतिः महर्षिणीयम्" ॥ ८५ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
रघुवंशटीकायां सञ्जीवनीसमाख्यायां प्रथमः सर्गः।

---

## द्वितीयः सर्गः ।

---

अथ प्रजानामधिपः प्रभाते
जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां
यशोधनो धेनुमृषेर्मुमोच ॥ १ ॥

आयाम् रागीभवदङ्गवल्लीभासैव दासीकृतदुग्धसिन्धुम् ।
मन्दस्मितैर्निन्दितशारदेन्दुं वन्देऽरविन्दाननसुन्दरि त्वाम् ॥

अथेति । अथ निशानयनानन्तरं यशोधनः प्रजानाम् अधिपः प्रजेश्वरः प्रभाते प्रातःकाले जायया सुदक्षिणया प्रतिग्राहिते स्वीकारिते गन्धमाल्ये यया सा जायाप्रतिग्राहितगन्धमाल्या तां तथोक्तां पीतं पानम् अस्यास्तीति पीतः पीतवान् इत्यर्थः । अर्श आदिभ्योऽजिति अच्प्रत्ययः । "पीता गावो भुक्ता ब्राह्मणाः" इति महाभाष्ये दर्शनात् । पीतः प्रतिबद्धः वत्सः यस्याः ताम् ऋषेः धेनुं वनाय वनं गन्तुम् । क्रियार्थोपपदेत्यादिना चतुर्थी । मुमोच मुक्तवान् । जायापदसामर्थ्यात् सुदक्षिणायाः पुत्रजननयोग्यत्वमनुसन्धेयम् । तथाहि श्रुतिः, "पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते । तज्जाया जाया भवति यदस्यां जायते पुनः" इति ।

तच्छिष्याध्ययननिवेदितावसानां
संविष्टः कुशशयने निशां निनाय ॥ ९५ ॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ वसिष्ठाश्रमगमनो नाम प्रथमः सर्गः ।



निशां निनाय गमयामास। अपररात्रे अध्ययने मनुः, "निशान्ते न परिश्रान्तः ब्रह्माधीत्य पुनः स्वपेत्"। "न चापररात्रमधीत्य पुनः स्वपेत्" इति गौतमश्च। महर्षिणोह्यत्तमेतत्। तदुक्तम्, "श्रौत्रौगस्त्रिदशयतिः महर्षिणीयम्" ॥ ९५ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
रघुवंशटीकायां सञ्जीवनीसमाख्यायां प्रथमः सर्गः ।



## द्वितीयः सर्गः।

---

अथ प्रजानामधिपः प्रभाते
जायाप्रतिग्राहितगन्धमाल्याम्।
वनाय पीतप्रतिबद्धवत्सां
यशोधनो धेनुमृषेर्मुमोच ॥ १ ॥

आशासु राशीभवदङ्गवल्लीभासैव दासीकृतदुग्धसिन्धुम्।
मन्दस्मितैर्निन्दितशारदेन्दुं वन्देऽरविन्दासनसुन्दरि त्वाम् ॥

अथेति। अथ निशानयनानन्तरं यशोधनः प्रजानाम् अधिपः प्रजेश्वरः प्रभाते प्रातःकाले जायया सुदक्षिणया प्रतिग्राहिते स्वीकारिते गन्धमाल्ये यया सा जायाप्रतिग्राहितगन्धमाल्या तां तथोक्तां पीतं पानम् अस्यास्तीति पीतः पीतवान् इत्यर्थः। अर्श आदिभ्योऽजिति अच्प्रत्ययः। "पीता गावो भुक्ता ब्राह्मणाः" इति महाभाष्ये दर्शनात्। पीतः प्रतिबद्धः वत्सः यस्याः ताम् ऋषेः धेनुं वनाय वनं गन्तुम्। क्रियार्थोपपदेत्यादिना चतुर्थी। मुमोच मुक्तवान्। जायापदसामर्थ्यात् सुदक्षिणायाः पुनर्जननयोग्यत्वमनुसन्धेयम्। तथाहि श्रुतिः, "पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम्। तस्यां पुनर्नवो भूत्वा दशमे मासि जायते। तज्जाया जाया भवति यदस्यां जायते पुनः" इति।

निवर्त्त्य राजा दयितां दयालुः
तां सौरभेयीं सुरभिर्यशोभिः ।
पयोधरीभूतचतुःसमुद्रां
जुगोप गोरूपधरामिवोर्वीम् ॥ ३ ॥

श्रुतिक्षुण्णमेवार्थमनुसरति तथा सापि गोखुरक्षुण्णमेव मार्गमनुससार इत्यर्थः । धर्म्मपत्नीत्यत्र अश्वघासादिवत् तादर्थ्ये षष्ठीसमासः प्रकृतिविकाराभावात् (१) । पांशुलपथप्रवृत्तावप्यपांशुलानामिति विरोधालङ्कारो ध्वन्यते ॥ २ ॥

निवर्त्त्येति । दयालुः कारुणिकः । "स्यात् दयालुः कारुणिकः" इत्यमरः । स्पृहिगृहीत्यादिना आलुच्प्रत्ययः । यशोभिः सुरभिः मनोज्ञः । "सुरभिः स्यान्मनोज्ञेऽपि" इति विश्वः । राजा तां दयितां निवर्त्त्य सौरभेयीं कामधेनुसुतां नन्दिनीं, धरन्तीति धराः, पचाद्यच् । पयसां धराः पयोधराः स्तनाः । "स्त्रीस्तनौ द्वौ पयोधरौ" इत्यमरः । अपयोधराः पयोधराः सम्पद्यमानाः पयोधरीभूताः । अभूततद्भावे च्विः, कुगतिप्रादय इति समासः । पयोधरीभूताः चत्वारः समुद्राः यस्याः ताम् । "अनेकमन्यपदार्थे" इत्यनेकपदार्थग्रहणसामर्थ्यात् त्रिपदो बहुव्रीहिः । गोरूपधराम् उर्वीम् इव जुगोप ररक्ष, भूरक्षणप्रयत्नेनैव ररक्ष इति भावः । गोरूपत्वे पयसा दुग्धेन धरीभूताः चत्वारः समुद्राः यस्याः तां पयोक्तां दुग्धतिरस्कृतसागराम् इत्यर्थः (२) ॥ ३ ॥

---

(१) यूपदार्वादिवदत्र प्रकृतिविकृतिभावो न सम्भवति । See पाणिनि (२।
(१) Professor Tarkavachaspati's 2d Edition of सिद्धान्तकौमुदी p 342.
(२) पयोधरीभूतचतुःसमुद्रामित्यत्र समासः अन्वेषणीयः ।

व्रताय तेनानुचरेण धेनोः
न्यषेधि शेषोऽप्यनुयायिवर्गः ।
न चान्यतस्तस्य शरीररक्षा
स्ववीर्य्यगुप्ता हि मनोः प्रसूतिः ॥ ४ ॥
आस्वादवद्भिः कवलैस्तृणानां
कण्डूयनैर्दंशनिवारणैश्च ।
अव्याहतैः स्वैरगतैः(१) स तस्याः
सम्राट् समाराधनतत्परोभूत् ॥ ५ ॥

व्रतायेति । व्रताय धेनोः अनुचरेण न तु जीवनाय इति भावः । तेन दिलीपेन शेषः अवशिष्टोऽपि अनुयायिवर्गः अनुचरवर्गः न्यषेधि निवर्त्तितः । शेषत्वं सुदक्षिणापेक्षया । कथं तर्हि आत्मरक्षणम् ? अत आह, न चेति । तस्य दिलीपस्य शरीररक्षा च अन्यतः पुरुषान्तरात् न । कुतः ? हि यस्मात् कारणात् मनोः प्रसूयते इति प्रसूतिः सन्ततिः स्ववीर्य्यगुप्ता स्ववीर्य्येणैव रक्षिता । न हि स्वनिर्वाहकस्य परापेक्षा इति भावः ॥ ४ ॥

आस्वादवद्भिरिति । सम्राट् मण्डलेश्वरः । "येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्" इत्यमरः । स राजा आस्वादवद्भिः रसवद्भिः स्वादयुक्तैः इत्यर्थः तृणानां कवलैः ग्रासैः "ग्रासस्तु कवलार्थकः" इत्यमरः । कण्डू-

(१) स्व + ईर स्वैरं स्वेच्छामात्र ।

स्थितः स्थितामुच्चलितः प्रयातां
निषेदुषीमासनबन्धधीरः।
जलाभिलाषी जलमाददानां
छायेव तां भूपतिरन्वगच्छत् ॥ ६ ॥
स न्यस्तचिह्नामपि राजलक्ष्मीं
तेजोविशेषानुमितां दधानः।

यनैः खर्जनैः दंशानां वनमक्षिकानां निवारणैः। "दंशस्तु वनमक्षिका" इत्यमरः। अव्याहतैः अप्रतिहतैः स्वैरगतैः स्वच्छन्दगमनैश्च तस्याः धेन्वाः समाराधनतत्परः शुश्रूषासक्तः अभूत्। तदेव परं प्रधानं यस्य इति तत्परः। "तत्परौ प्रसितासक्तौ" इत्यमरः ॥ ५ ॥

स्थित इति। भूपतिः तां गां स्थितां सतीं स्थितः सन्, स्थितिः ऊर्द्ध्वावस्थानम्। प्रयातां प्रस्थिताम् उच्चलितः प्रस्थितः, निषेदुषीं निषण्णाम् उपविष्टाम् इत्यर्थः, "भाषायां सदवसश्रुवः" इति क्वसुप्रत्ययः, उगितश्चेति ङीप्, आसनबन्धे उपवेशने धीरः स्थिरः उपविष्टः सन् इत्यर्थः, जलम् आददानां पिबन्तीं जलाभिलाषी पिबन् इत्यर्थः, इत्थं छाया (प्रतिबिम्बम्) इव अन्वगच्छत् अनुसृतवान् ॥ ६ ॥

स इति। न्यस्तानि परिहृतानि चिह्नानि छत्रचामरादीनि यस्याः तां तथाभूताम् अपि तेजोविशेषेण प्रभावातिशयेन अनुमितां सर्वथा राजा एवायं भवेत् इति ऊहितां राजलक्ष्मीं

आसीदनाविष्कृतदानराजि-
रन्तर्मदावस्थ इव द्विपेन्द्रः (१)॥ ७॥
लताप्रतानोद्ग्रथितैः स केशै-
रधिज्यधन्वा विचचार दावम्।
रक्षापदेशान्मुनिहोमधेनो-
र्वन्यान् विनेष्यन्निव दुष्टसत्त्वान्॥ ८॥

दधानः सः राजा अनाविष्कृतदानराजिः बहिरप्रकटितमद-रेखः अन्तर्गता मदावस्था यस्य सः अन्तर्मदावस्थः तथाभूतः द्विपेन्द्रः इव आसीत्॥ ७॥

लतेति। लतानां वल्लीनां प्रतानैः कुटिलतन्तुभिः उद्ग्रथिताः उन्नमय्य ग्रथिताः ये केशाः तैः उपलक्षितः। इत्थम्भूत-लक्षणे तृतीया। स राजा अधिज्यम् आरोपितमौर्वीकं धनुः यस्य सः अधिज्यधन्वा सन्। धनुषश्चेत्यनङादेशः। मुनिहोम-धेनोः रक्षापदेशात् रक्षणव्याजात् वन्यान् वने भवान् दुष्टसत्त्वान् दुष्टजन्तून्। "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः। विनेष्यन् शिक्षयिष्यन् इव दावं वनम्। "वने च वनवह्नौ च दवो दाव इहेष्यते" इति यादवः। विचचार वने चचार इत्यर्थः। "देशकालाध्वगन्तव्या कर्मसंज्ञा ह्यकर्मणाम्" इति दावस्य कर्मत्वम्॥ ८॥

---

(१) "भद्रो मन्द्रो मृगश्चेति चतुर्धा वर्णिता गजाः।
उत्तमः कथितो तासां भद्रोऽन्तर्मदएव च"। इति वल्लभेनोक्तम्।

विसृष्टपार्श्वानुचरस्य तस्य
पार्श्वद्रुमाः पाशभृता समस्य ।
उदीरयामासुरिवोन्मदानाम्
आलोकशब्दं(१)वयसां विरावैः ॥ ९ ॥
मरुत्प्रयुक्ताश्च मरुत्सखाभं
तमर्च्यमारादभिवर्त्तमानम् ।

विसृष्टेत्यादिभिः षड्भिः श्लोकैस्तस्य महामहिमतया द्रुमादयोऽपि राजोपचारं चक्रुरित्याह, विसृष्टेति । विसृष्टाः पार्श्वानुचराः पार्श्ववर्त्तिनो जनाः येन तस्य पाशभृता वरुणेन समस्य तुल्यस्य । "प्रचेता वरुणः पाशी" इत्यमरः । अनुभावोऽनेन सूचितः । तस्य राज्ञः पार्श्वयोः द्रुमाः उन्मदानाम् उत्कटमदानां वयसां खगानाम् । "खगबाल्यादिनोर्वयः" इत्यमरः । विरावैः शब्दैः आलोकस्य शब्दं वाचकम् आलोकय इति शब्दं जयशब्दम् इत्यर्थः । "आलोको जयशब्दः स्यात्" इति विश्वः । उदीरयामासुरिव अवदन्निव, इत्युत्प्रेक्षा ॥९॥

मरुदिति । मरुत्प्रयुक्ताः वायुना प्रेरिताः बालखता आरात् समीपे अभिवर्त्तमानम् । "आरात् दूरसमीपयोः" इत्यमरः । मरुतः वायोः सखा मरुत्सखः अग्निः सः इव आभातीति मरुत्सखाभः । आतश्चोपसर्ग इति कप्रत्ययः । तं अर्च्यं पूज्यं दिलीपं

(१) आलोकन्तु दर्शनम् शब्द आलोकशब्दः । जय जीवेत्यालोकशब्दः । जय जय महाराज स्वामिन् पादमवधार्यतामिति आलोकशब्द इति वल्लभः ।

अवाकिरन् बाललताः प्रसूनै-
राचारलाजैरिव(१) पौरकन्याः ॥ १० ॥
धनुर्भृतोऽप्यस्य(२) दयार्द्रभावम्
आख्यातमन्तःकरणैर्विशङ्कैः ।
विलोकयन्त्यो वपुरापुरक्ष्णां
प्रकामविस्तारफलं हरिण्यः ॥ ११ ॥

प्रसूनैः पुष्पैः पौरकन्याः पौराश्च ताः कन्याः आचारार्थैः लाजैः आचारलाजैः इव अवाकिरन् तस्योपरि विक्षिप्तवत्यः इत्यर्थः। सखा हि सखायमागतमुपचरति इति भावः ॥ १० ॥

धनुर्भृत इति। धनुर्भृतोऽपि अस्य राज्ञः, एतेन भयसम्भावना दर्शिता, तथापि निर्भीकैः अन्तःकरणैः कर्तृभिः दयया कृपारसेन आर्द्रः भावः अभिप्रायः यस्य तत् दयार्द्रभावं तत् आख्यातं दयार्द्रभावमेतदित्याख्यातम् इत्यर्थः।(३)"भावः सत्त्वस्वभावाभिप्रायचेष्टात्मजन्मसु" इत्यमरः। तथाविधं वपुः विलोकयन्त्यः हरिण्यः अक्ष्णां प्रकामविस्तारस्य अत्यन्तविशालतायाः फलम् आपुः। "विमलं कलुषीभवच्च चेतः कथयत्येव हितैषिणं रिपुञ्च" इति न्यायेन स्वान्तःकरणप्रसन्नतामात्रादेव विश्रब्धं ददृशुः इत्यर्थः ॥ ११ ॥

---

(१) पुरप्रवेशे हि राजा कुमारीभिः (लाजैः) अवकीर्य्यते इत्याचार इति वल्लभः।

(२) धनति हिनस्ति धनेनेति धनुः। धनतिः हिंसार्थकत्वं वेदे प्रसिद्धं।

(३) "यस्मादपि मरक्षितं कर्तुं या हृदि जायते।
इच्छा भूमिसुरश्रेष्ठ सा दया परिकीर्त्तिता"। इति दयालक्षणम्।

स कीचकैर्मारुतपूर्णरन्ध्रैः
कूजद्भिरापादितवंशकृत्यम्।
शुश्राव कुञ्जेषु यशः स्वमुच्चैः
उद्गीयमानं वनदेवताभिः(१)॥ १२॥
पृक्तास्तुषारैर्गिरिनिर्झराणाम्
अनोकहा कम्पितपुष्पगन्धी(२)।

स इति। स दिलीपः मारुतपूर्णरन्ध्रैः अत एव कूजद्भिः स्वनद्भिः कीचकैः वेणुविशेषैः। "वेणवः कीचकास्ते स्युः ये स्वनन्त्यनिलोद्धताः" इत्यमरः। वंशः शुषिरवाद्यविशेषः। "वंशादिकन्तु शुषिरम्" इत्यमरः। आपादितं सम्पादितं वंशस्य कृत्यं कार्यं यस्मिन् कर्मणि तत् तथा, कुञ्जेषु लतागृहेषु। "निकुञ्जकुञ्जौ वा क्लीवे लतादिपिहितोदरे" इत्यमरः। वनदेवताभिः उद्गीयमानम् उच्चैः गीयमानं स्वं यशः शुश्राव श्रुतवान् ॥१२॥

पृक्त इति। गिरिषु निर्झराणां वारिप्रवाहाणाम्। "वारिप्रवाहो निर्झरो झरः" इत्यमरः। तुषारैः सीकरैः। "तुषारौ

(१) Compare—यः पूरयन् कीचकरन्ध्रभागान् दरीमुखोत्थेन समीरणेन।
उद्गास्यतामिच्छति किन्नराणां तानप्रदायित्वमिवोपगन्तुम्।
कुमारसम्भवम्, प्रथमः सर्गः।

अस्य व्याख्याने मल्लिनाथ आह—उद्गास्यतां देवयोनित्वात् उच्चैः गान्धारग्रामेण गानं करिष्यताम्। उक्तञ्च नारदेन षड्जमध्यमनामानौ ग्रामौ गायन्ति मानवाः। न तु गान्धारनामानं स लभ्यो देवयोनिभिः। तथा "यातो यं यं स्वरं गच्छेत् तं तं वंशेन तानयेत्" इति भरतः। तानो नाम स्वराणामवर्तकः रागाभिव्यक्तिहेत्वादिहेतुः षड्जादयस्तावद् वंशवाद्यमाध्यः प्रधानभूतः स्वरविशेषः।

(२) अमरः प्रकटस्य गर्व हर्षि इति कम—ड। इये।

तमातपक्लान्तमनातपत्रम्
आचारपूतं (१) पवनः सिषेवे ॥ १३ ॥
शशाम वृष्ट्यापि विना दवाग्निः
आसीत् विशेषा फलपुष्पवृद्धिः।
ऊनं न सत्त्वेष्वधिको बबाधे
तस्मिन् वनं गोप्तरि गाहमाने ॥ १४ ॥

हिमसीकरी" इति शाश्वतः। पृक्ताः संपृक्ताः अनोकहानां वृक्षाणाम् आकम्पितानि ईषत्कम्पितानि पुष्पाणि तेषां यः गन्धः सः अस्यास्तीति आकम्पितपुष्पगन्धी ईषत् कम्पितपुष्पगन्धवान् एवं शीतः मन्दः सुरभिः पवनः वायुः अनातपत्रं व्रतार्थं परिहृतच्छत्रम् अत एव आतपक्लान्तम् आचारेण पूतं शुद्धं तं नृपं सिषेवे। आचारपूतत्वात् स राजा जगत्पावनस्यापि सेव्य आसीत् इति भावः ॥ १३ ॥

शशामेति। गोप्तरि तस्मिन् राज्ञि वनं गाहमाने प्रविशति सति वृष्ट्या विना अपि दवाग्निः वनाग्निः। "दवदावौ वनानले" इति हैमः। शशाम। फलानां पुष्पाणाञ्च वृद्धिः, विशिष्यत इति विशेषा अतिशयिता आसीत्। कर्मार्थे घञ्प्रत्ययः। सत्त्वेषु जन्तुषु मध्ये। "यतश्च निर्धारणम्" इति सप्तमी। अधिकः प्रबलः व्याघ्रादिः ऊनं दुर्बलं हरिणादिकं न बबाधे ॥ १४ ॥

---

(१) आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च।
तस्मादस्मिन् सदा युक्तो नित्यं स्यादात्मवान् द्विजः॥ मनु । १ । १०८ ।

सञ्चारपूतानि दिगन्तराणि
कृत्वा दिनान्ते निलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा
प्रभा पतङ्गस्य मुनेश्च धेनुः ॥ १५ ॥

तां देवतापित्रतिथिक्रियार्थाम् (१)
अन्वक् ययौ मध्यमलोकपालः ।
बभौ च सा तेन सतां मतेन
श्रद्धेव साक्षाद्विधिनोपपन्ना ॥ १६ ॥

सञ्चारपूतानीति । पल्लवस्य रागः वर्णः पल्लवरागः । "रागोऽनुरक्तौ मात्सर्ये क्लेशादौ लोहितादिषु" इति शाश्वतः । स इव ताम्रा पल्लवरागताम्रा पतङ्गस्य सूर्यस्य प्रभा कान्तिः । "पतङ्गः पक्षिसूर्ययोः" इति शाश्वतः । मुनेः धेनुश्च दिगन्तराणि दिशाम् अवकाशान्(२) । "अनन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये" इत्यमरः । सञ्चारेण पूतानि शुद्धानि कृत्वा दिनान्ते सायंकाले निलयाय अस्तमयाय धेनुपक्षे आलयाय गन्तुं प्रचक्रमे ॥ १५ ॥

तामिति । मध्यमलोकपालः भूपालः देवतापित्रतिथीनां क्रियाः यागश्राद्धदानानि ताः एव अर्थः प्रयोजनं यस्याः तां

स पल्वलोत्तीर्णवराहयूथा-
न्यावासवृक्षोन्मुखबर्हिणानि।
ययौ मृगाध्यासितशाद्वलानि
श्यामायमानानि(१) वनानि पश्यन्॥ १७॥

धेनुम् अन्वक् अनुपदं ययौ। "अन्वगन्वक्षमनुगेऽनुपदं क्लीवमव्ययम्" इत्यमरः। सतां मतेन सद्भिः मान्येन। मतिबुद्धीत्यादिना वर्तमाने क्तः, क्तस्य च वर्त्तमाने इति षष्ठी। तेन राज्ञा उपपन्ना युक्ता सा धेनुः सतां मतेन विधिना अनुष्ठानेन उपपन्ना युक्ता साक्षात्प्रत्यक्षा श्रद्धा (२) आस्तिक्यबुद्धिः इव बभौ च॥ १६॥

स इति। स राजा पल्वलेभ्यः अल्पजलाशयेभ्यः उत्तीर्णानि निर्गतानि वराहाणां यूथानि कुलानि येषु तानि बर्हाणि एषां सन्तीति बर्हिणाः मयूराः। "मयूरो बर्हिणो बर्ही" इत्यमरः। फलबर्हाभ्यामिनच्प्रत्ययो वक्तव्यः। आवासवृक्षाणाम् उन्मुखाः बर्हिणाः येषु तानि, श्यामायमानानि वराहबर्हिणादिमलिनित्वा अश्यामानि श्यामानि भवन्तीति श्यामायमानानि। लोहितादिडाज्भ्यः क्यषिति क्यष्प्रत्ययः, वा क्यष इत्यात्मनेपदे शानच्। मृगैः अध्यासिताः अधिष्ठिताः शाद्वलाः येषु तानि। शादाः शष्पाणि एषु देशेषु सन्तीति शाद्वलाः शष्पश्यामदेशाः।

(१) [illegible] इत्यर्थः। यत्तु वन-वराहमयूरादीनां सन्निवेशात् ग्रामत्वं टीकाकारैः व्याख्यातं तन्न समीचीनम् तस्य [illegible] इति अस्मदभिमतम्॥

(२) आस्तिक्ये दृढविश्वासः श्रद्धा।

आपीनभारोद्वहनप्रयत्नात्
गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः।
उभावलञ्चक्रतुरञ्चिताभ्यां(१)
तपोवनावृत्तिपथं गताभ्याम्॥ १८॥
वसिष्ठधेनोरनुयायिनं तम्(२)
आवर्त्तमानं वनिता वनान्तात्।

"शाद्वलः शादहरिते" इत्यमरः। "शादः कर्द्दमशष्पयोः" इति विश्वः। नड्शादाड्ड्वलजिति ड्वलच्प्रत्ययः। वनानि पश्यन् ययौ॥ १७॥

आपीनेति। गृष्टिः सकृत्प्रसूता गौः। "गृष्टिः सकृत् प्रसूता गौः" इति हलायुधः। नरेन्द्रश्च उभौ यथाक्रमम् आपीनम् ऊधः। "ऊधस्तु क्लीवमापीनम्" इत्यमरः। आपीनस्य भारोद्वहने प्रयत्नात् प्रयासात् वपुषः गुरुत्वात् आधिक्याच्च अञ्चिताभ्यां चारुभ्यां गताभ्यां गमनाभ्यां तपोवनात् आवृत्तेः पन्थाः तं तपोवनावृत्तिपथम्। ऋक्पूरित्यादिना समासान्तः अप्रत्ययः। अलञ्चक्रतुः भूषितवन्तौ॥ १८॥

वसिष्ठेति। वसिष्ठधेनोः अनुयायिनम् अनुचरं वनान्तात्

(१) आङ्पूर्वात् प्यायतेः क्तः। अञ्चिते पूजिते मनोज्ञे इति यावत्। पूजार्थकाञ्चतेः कर्मणि क्तः।

(२) वसुर्धनं नित्यं तद्योगात् वसिष्ठः, तदा वने चरामि वासं गार्हस्थ्यं गृहेषु दारनिर्मितम्, अतः वसिष्ठत्वात् वासात् अभिप्रायाभ्यां सम्भ्रमात् वसिष्ठ इति प्रसिद्धः।
"वसिष्ठोऽस्मि वरिष्ठोऽस्मि वने वासं गृहेष्वपि।
वसिष्ठत्वाच्च वासाच्च वसिष्ठ इति विद्धि माम्।" इति महाभारते।

पपौ निमेषालसपक्ष्मपङ्क्तिः
उपोषिताभ्यामिव लोचनाभ्याम् ॥ १९ ॥
पुरस्कृता वर्त्मनि पार्थिवेन
प्रत्युद्गता पार्थिवधर्मपत्न्या।
तदन्तरे सा विरराज धेनुः(१)
दिनक्षपामध्यगतेव सन्ध्या(२) ॥ २० ॥

आवर्त्तमानं प्रत्यागतं तं दिलीपं वनिता सुदक्षिणा निमेषेषु अलसा मन्दा पक्ष्मणां पङ्क्तिः यस्याः सा निर्निमेषा सतीत्यर्थः लोचनाभ्यां करणाभ्याम् उपोषिताभ्याम् इव उपवासः भोजननिवृत्तिः तद्वद्भ्यां इव। वसतेः कर्त्तरि क्तः। पपौ। यथोपोषितः अतितृष्णया जलमधिकं पिपासति तद्वदतितृष्णया अधिकं व्यलोकयत् इत्यर्थः ॥ १९ ॥

पुरस्कृतेति। वर्त्मनि पार्थिवेन पृथिव्याः ईश्वरेण। तस्येश्वर इत्यण्प्रत्ययः। पुरस्कृता अग्रतः कृता धर्मस्य पत्नी धर्मार्थपत्नी इत्यर्थः। अश्वघासादिवत् तादर्थ्ये षष्ठीसमासः। पार्थिवस्य धर्मपत्न्या प्रत्युद्गता सा धेनुः तदन्तरे तयोः दम्पत्योः मध्ये दिनक्षपयोः दिनरात्र्योः मध्यगता सन्ध्या इव रराज ॥ २० ॥

(१) नन्दिनी "पल्लवरागताम्रा" "पाटलदिव्यपाटला" चेति कविना वर्णिता। अरुणवर्णा: सन्ध्या सह उपमा युज्यते।

(२) "ओङ्कारोऽर्द्धं तु [illegible] तस्मात् [illegible],
तस्मात् [illegible] ॥" इति वायुपुराणम्।

गुरोः सदारस्य निपीड्य पादौ
समाप्य सान्ध्यञ्च विधिं दिलीपः।
दोहावसाने पुनरेव दोग्ध्रीं
भेजे भुजोच्छिन्नरिपुर्निषण्णाम्॥ २३॥

तामन्तिकन्यस्तबलिप्रदीपाम्
अन्वास्य गोप्ता गृहिणीसहायः।
क्रमेण सुप्तामनु संविवेश
सुप्तोत्थितां(१) प्रातरनूदतिष्ठत्॥ २४॥

गुरोरिति। भुजोच्छिन्नरिपुः दिलीपः सदारस्य दारैः अरुन्धत्या सह वर्त्तमानस्य गुरोः उभयोरपि इत्यर्थः। "भार्य्या जायाथ पुंभूम्नि दाराः" इत्यमरः। पादौ निपीड्य अभिवन्द्य सान्ध्यं सन्ध्यायां विहितं विधिम् अनुष्ठानं च समाप्य दोहावसाने निषण्णाम् आसीनां दोग्ध्रीं दोहनशीलाम्। तृन्निति तृन्प्रत्ययः। धेनुम् एव पुनः भेजे सेवितवान्। दोग्ध्रीमिति निरुपपदप्रयोगात् कामधेनुत्वं गम्यते॥ २३॥

तामिति। गोप्ता रक्षकः गृहिणीसहायः पत्नीद्वितीयः सन् उभावपि इत्यर्थः अन्तिके न्यस्ताः बलयः प्रदीपाश्च यस्याः तां तथोक्तां तां निषण्णां धेनुम् अन्वास्य अनूपविश्य क्रमेण सुप्ताम् अनु पश्चात् संविवेश सुष्वाप, प्रातः सुप्तोत्थिताम् अनु उदतिष्ठत् उत्थितवान्। अथ अनुगम्येन धे[illegible]

(१) पादौ इत्थं पदार्द्धमिदं सुप्तोत्थिता। "क्तञ्च पूर्व्वार्द्ध" इत्यनेन

इत्थं व्रतं धारयतः प्रजार्थं
समं महिष्या महनीयकीर्त्तेः।
सप्त व्यतीयुस्त्रिगुणानि तस्य
दिनानि दीनोद्धरणोचितस्य ॥ २५ ॥
अन्येद्युरात्मानुचरस्य भावं
जिज्ञासमाना मुनिहोमधेनुः।

पौर्वापर्य्यमुच्यते, क्रमशब्देन धेनुव्यापाराणामेव इति अपौनरुक्त्यम्। कर्म्मप्रवचनीययुक्ते इति द्वितीया ॥ २४ ॥

इत्थमिति। इत्थम् अनेन प्रकारेण प्रजार्थं सन्तानाय महिष्या समम् अभिषिक्तपत्न्या सह। "कृताभिषेका महिषी" इत्यमरः। व्रतं धारयतः, महनीया पूज्या कीर्त्तिः यस्य तस्य दीनानाम् उद्धरणं दैन्यविमोचनं तत्र उचितस्य परिचितस्य तस्य नृपस्य त्रयः गुणाः आवृत्तयः येषां तानि त्रिगुणानि त्रिरावृत्तानि सप्तदिनानि एकविंशतिदिनानि व्यतीयुः ॥ २५ ॥

अन्येद्युरिति। अन्येद्युः अन्यस्मिन् दिने द्वाविंशे दिने। सद्यः परुत्परार्य्यैषमादिना निपातनात् अव्ययम्। "अद्यात्राह्नय पूर्व्वेऽह्नीत्यादौ पूर्व्वोत्तरापरात्। तथाधरान्यान्यतरेतरात्पूर्व्वेद्युरादयः" इत्यमरः। मुनिहोमधेनुः आत्मानुचरस्य भावम् अभिप्रायं दृढभक्तित्वम्। "भावोऽभिप्राय आशयः" इति यादवः। जिज्ञासमाना ज्ञातुमिच्छन्ती। "ज्ञाश्रुस्मृदृशां सनः" इत्यात्मनेपदे शानच्। प्रपतति अस्मिन् इति प्रपातः पतनप्रदेशः गङ्गायाः प्रपातः तस्य अन्ते समीपे निरूढ़ानि जातानि शष्पाणि बाल-

गङ्गाप्रपातान्तविरूढशष्पं
गौरीगुरोर्गह्वरमाविवेश ॥ २६ ॥
सा दुष्प्रधर्षा मनसापि हिंस्रै-
रित्यद्रिशोभाप्रहितेक्षणेन ।
अलक्षिताभ्युत्पतनो नृपेण
प्रसह्य सिंहः(१)किल तां चकर्ष ॥ २७ ॥
तदीयमाक्रन्दितमार्त्तसाधो-
र्गुहानिबद्धप्रतिशब्ददीर्घम् ।
रश्मिष्विवादाय नगेन्द्रसक्तां
निवर्त्तयामास नृपस्य दृष्टिम् ॥ २८ ॥

तृणानि यस्मिन् तत् । "शष्पं बालतृणं घासः" इत्यमरः । गौरीः गुरोः पार्वतीपितुः गह्वरं गुहाम् आविवेश ॥ २६ ॥

सेति । सा धेनुः हिंस्रैः व्याघ्रादिभिः मनसा अपि दुष्प्रधर्षा दुर्धर्षा इति हेतोः अद्रिशोभायां प्रहितेक्षणेन दत्तदृष्टिना नृपेण अलक्षितम् अभ्युत्पतनम् आभिमुख्येन उत्पतनं यस्य सः सिंहः तां धेनुं प्रसह्य हठात् । "प्रसह्य तु हठार्थकम्" इत्यमरः । चकर्ष, किलेत्यलीके ॥ २७ ॥

तदीयमिति । गुहानिबद्धेन प्रतिशब्देन प्रतिध्वनिना दीर्घं तस्याः इदं तदीयम् आक्रन्दितम् आर्त्तघोषणम् आर्त्तेषु आपन्नेषु साधोः हितकारिणः नृपस्य नगेन्द्रसक्तां दृष्टिं रश्मिषु

(१) सिंहः—हिनस्ति—अच्, वर्णविपर्ययः ।

स पाटलायां गवि तस्थिवांसं
धनुर्धरः केशरिणं (१) ददर्श।
अधित्यकायामिव धातुमय्यां
लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥ २९॥
ततो मृगेन्द्रस्य मृगेन्द्रगामी
वधाय वध्यस्य शरं शरण्यः।

प्रग्रहेषु। "किरणप्रग्रहौ रश्मी" इत्यमरः। आदाय इव गृहीत्वा इव निवर्त्तयामास ॥ २८ ॥

स इति। धनुर्धरः स नृपः पाटलायां रक्तवर्णायां गवि तस्थिवांसं स्थितम्। क्वसुश्चेति क्वसुप्रत्ययः। केशरिणं सिंहं सानुमतः अद्रेः धातोः गैरिकस्य विकारः धातुमयी तस्याम् अधित्यकायाम् ऊर्द्ध्वभूमौ। "उपत्यकाद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका" इत्यमरः। उपाधिभ्यां त्यकन्नासन्नारूढयोरिति त्यकन् प्रत्ययः। प्रफुल्लः विकसितः तम्। फुल्ल विकसने इति धातोः पचाद्यच्। लोध्राख्यं द्रुमम् इव ददर्श। प्रफुल्तमिति तकारपाठे ञि फला विशरणे इति धातोः कर्त्तरि क्तः, उत्परस्यात इत्युकारादेशः ॥ २९ ॥

तत इति। ततः सिंहदर्शनानन्तरं मृगेन्द्रगामी सिंहगामी शरणं रक्षणम्। "शरणं रक्षणे गृहे" इति यादवः। शरणे साधुः शरण्यः। तत्र साधुरिति यत्प्रत्ययः। प्रसभेन बलात्कारेण

(१) "केशरिपदेन प्रफुल्लत्वात् साम्यम्" इति दिनकरः।

जाताभिषङ्गो नृपतिर्निषङ्गात्
उद्धर्त्तुमैच्छत् प्रसभोद्धृतारिः ॥ ३० ॥
वामेतरस्तस्य करः प्रहर्त्तुः
नखप्रभाभूषितकङ्कपत्रे (१) ।
सक्ताङ्गुलिः सायकपुङ्ख एव
चित्रार्पितारम्भ इवावतस्थे ॥ ३१ ॥
बाहुप्रतिष्टम्भविवृद्धमन्युः
अभ्यर्णमागस्कृतमस्पृशद्भिः ।

उद्धृताः अरयः येन सः नृपतिः राजा जाताभिषङ्गः जातपराभवः सन् । "अभिषङ्गः पराभवः" इत्यमरः । बध्यस्य बधार्हस्य । दण्डादिभ्यो यदिति यत्प्रत्ययः । मृगेन्द्रस्य बधाय निषङ्गात् तूणीरात् । "तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः" इत्यमरः । शरम् उद्धर्त्तुम् ऐच्छत् ॥ ३० ॥

वामेति । प्रहर्त्तुः तस्य वामेतरः दक्षिणः करः नखप्रभाभिः भूषितानि विच्छुरितानि कङ्कस्य पक्षिविशेषस्य पत्त्राणि (पक्षाः) यस्य तस्मिन् । "कङ्कः पक्षिविशेषे स्यात् गुप्ताकारे युधिष्ठिरे" इति विश्वः । सायकस्य पुंखे एव कर्त्तर्य्यांख्ये मूलप्रदेशे । "कर्त्तरी पुंखे" इति यादवः । सक्ताङ्गुलिः सन् चित्रार्पितारम्भः चित्रलिखितशरोद्धरणोद्योगः इव अवतस्थे ॥ ३१ ॥

बाह्विति । बाह्वोः प्रतिष्टम्भेन प्रतिबन्धेन । "प्रतिबन्धः

(१) शराणां शतिपातनार्थे पुङ्खे कङ्कपत्राणि बध्यन्ते इति प्रसिद्धिः ॥

राजा स्वतेजोभिरदह्यतान्तः
भोगीव मन्त्रौषधिरुद्धवीर्य्यः ॥ ३२ ॥
तमार्य्यगृह्यं निगृहीतधेनुः
मनुष्यवाचा मनुवंशकेतुम् ।
विस्माययन् विस्मितमात्मवृत्तौ
सिंहोरुसत्त्वं निजगाद सिंहः ॥ ३३ ॥

प्रतिष्टम्भः” इत्यमरः। विहतमन्युः प्रहतरोषः राजा मन्त्रौषधिभ्यां रुद्धवीर्य्यः प्रतिबद्धशक्तिः भोगी सर्प इव। “भोगी राजभुजङ्गयोः” इति शाश्वतः। अभ्यर्णम् अन्तिकम्। “उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्” इत्यमरः। आगस्कृतम्(१) अपराधकारिणम् अस्पृशद्भिः स्वतेजोभिः अन्तः अदह्यत। “अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपि” इति यादवः ॥ ३२ ॥

तमिति। निगृहीता पीड़िता धेनुः येन स सिंहः आर्य्याणां सतां गृह्यं पक्ष्यम्। पदास्वैरिवाह्यापक्ष्येषु चेति क्यप्। मनुवंशस्य केतुं चिह्नं केतुवत् व्यावर्त्तकम् (२)। सिंह इव उरुसत्त्वः महाबलः तम्, आत्मनः वृत्तौ बाहुस्तम्भरूपे व्यापारे अभूतपूर्वत्वात् विस्मितम्। कर्त्तरि क्तः। तं दिलीपं मनुष्यवाचा करणेन पुनः विस्माययन् विस्मयम् आश्चर्यं प्रापयन् निजगाद। स्मिङ्‌ ईषद्धसन इति धातोर्णिचि हेतौ आयादेशे

(१) आगः अपराधं करोतीति आगस्कृत् तं तथोक्तम्। (२) व्यावर्त्तकं व्यावृत्तिकारकं इतरेभ्यो राजवंशेभ्यः मनुवंशस्य विशेषीकृत्यकारणमित्यर्थः।

अलं महीपाल तव श्रमेण
प्रयुक्तमप्यस्त्रमितो वृथा स्यात्।
न पादपोन्मूलनशक्ति रंहः
शिलोच्चये मूर्च्छति मारुतस्य ॥ ३४ ॥
कैलासगौरं(१)वृषमारुरुक्षोः
पादार्पणानुग्रहपूतपृष्ठम्।

शत्रप्रत्यये च सति विस्मापयन्निति रूपं सिद्धम्। विस्मापयन्निति पाठे पुगागममात्रं वक्तव्यं तच्च चिन्त्यं नित्यं स्मयतेरिति हेतुभयविवक्षायामेवेति भीस्म्योर्हेतुभय इत्यात्मनेपदे विस्मापयमान इति स्यात् तस्मात् मनुष्यवाचा विस्मापयन्निति रूपं सिद्धं करणविवक्षायां न कश्चित् दोषः ॥ ३३ ॥

अलमिति। हे महीपाल तव श्रमेण अलं साध्याभावात् श्रमो न कर्त्तव्यः इत्यर्थः। अत्र गम्यमानसाधनक्रियापेक्षया श्रमस्य करणत्वात् तृतीया। उक्तञ्च, न्यासोद्योते "न केवलं श्रूयमाणैव क्रिया निमित्तं करणभावस्य अपि तर्हि गम्यमानापि" इति। "अलं भूषणपर्याप्तिशक्तिवारणवाचकम्" इत्यमरः। इतः अस्मिन् मयि। सार्व्वविभक्तिकस्तसिः। प्रयुक्तम् अपि अस्त्रं वृथा स्यात्। तथाहि, पादपोन्मूलने शक्तिः यस्य तत् तथोक्तं मारुतस्य रंहः वेगः शिलोच्चये पर्व्वते न मूर्च्छति न प्रसरति ॥ ३४ ॥

कैलासमिति। कैलास इव गौरः शुभ्रः तम्। "चामी-

(१) कैलासगौरम् उपततं च व्यमती।

अवेहि मां किङ्करमष्टमूर्त्तेः
कुम्भोदरं नाम निकुम्भमित्रम्(१) ॥ ३५ ॥
अमुं पुरः पश्यसि देवदारुं
पुत्रीकृतोऽसौ वृषभध्वजेन।
यो हेमकुम्भस्तननिःसृतानां
स्कन्दस्य मातुः पयसां रसज्ञः ॥ ३६ ॥

करच शुभ्रच गौरमाहुर्मनीषिणः" इति शाश्वतः। वृषं वृषभम् आरुरुक्षोः आरोढुम् इच्छोः स्वस्योपरि पदं निक्षिप्य वृषमारोहति इत्यर्थः। अष्टौ मूर्त्तयः यस्य सः तस्य अष्टमूर्त्तेः शिवस्य पादार्पणं पादन्यासः तत् एव अनुग्रहः प्रसादः तेन पूतं पृष्ठं यस्य तं तथोक्तं निकुम्भमित्रं कुम्भोदरं नाम किङ्करं माम् अवेहि विद्धि। "पृथिवी सलिलं तेजो वायुराकाशमेव च। सूर्याचन्द्रमसौ सोमयाजी चेत्यष्टमूर्त्तयः" इति यादवः ॥ २५ ॥

अमुमिति। पुरः अग्रतः अमुं देवदारुं पश्यसि इति काकुः (२)। असौ देवदारुः वृषभः ध्वजे यस्य सः तेन शिवेन पुत्रीकृतः पुत्रत्वेन स्वीकृतः। अभूततद्भावे च्विः। यः देवदारुः

(१) निकुम्भेन पार्वतीवाहनेन सिंहेन तुल्यः तमिति वल्लभः। यद्वा निकुम्भस्य कुम्भकर्णपुत्रस्य मित्रमिति मल्लः। But according to Kasikhanda, Siva and Parvati, desirous of occupying Kasi, which Divodasa (a king of the lunar dynasty) possessed, sent Nikumbha, one of the Ganas of the former, to lead the prince to the adoption of Buddhist doctrines; in consequence of which, he was expelled from the sacred city. See V. P. Book IV chap VIII.

(२) शोकभीत्यादिभिः भिन्नकण्ठध्वनिः काकुः।

कण्डूयमानेन कटं कदाचित्
वनद्विपेनोन्मथिता त्वगस्य ।
अथैनमद्रेस्तनया शुशोच
सेनान्यमालीढमिवासुरास्त्रैः ॥ ३७ ॥

तदाप्रभृत्येव वनद्विपानां
त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।

स्कन्दस्य मातुः गौर्याः हेम्नः कुम्भः एव स्तनः तस्मात् निःसृतानां पयसाम् अम्बूनां रसज्ञः स्वादज्ञः । स्कन्दपक्षे हेमकुम्भः इव स्तनः इति विग्रहः । पयसां क्षीराणाम् । "पयः क्षीरं पयोऽम्बु च" इत्यमरः । स्कन्दसमानप्रेमास्पदम् इति भावः ॥ ३६ ॥

कण्डूयमानेनेति । कदाचित् कटं कपोलं कण्डूयमानेन कर्षता । कण्ड्वादिभ्यो यगिति यक्, ततः शानच् । वन्यद्विपेन अस्य देवदारोः त्वक् उन्मथिता । अथ अद्रेः तनया गौरी असुरास्त्रैः आलीढं क्षतं, सेनां नयतीति सेनानीः स्कन्दः । "पार्वतीनन्दनः स्कन्दः सेनानीः" इत्यमरः । सत्सूद्विषेत्यादिना क्विप् । तम् इव एनं देवदारुं शुशोच ॥ ३७ ॥

तदेति । तदा तत्कालः प्रभृतिः आदिः यस्मिन् कर्मणि(१) तत् तथा तदाप्रभृति एव वनद्विपानां त्रासार्थं भयार्थं शूलभृता शिवेन अङ्कं समीपम् आगताः प्राप्ताः सत्त्वाः प्राणिनः वृत्तिः यस्मिन् तत् । "अङ्कः समीप उत्सङ्गे चिह्ने स्थानापराधयोः"

(१) यदा शब्दस्य दा प्रत्ययः अव्ययानुप्रयोगः सप्तम्या पञ्चम्यर्थकत्वं प्रभृतियोगे पञ्चमीनियमात् ।

व्यापारितः शूलभृता विधाय
सिंहत्वमङ्कागतसत्त्ववृत्ति ॥ ३८ ॥
तस्यालमेषा क्षुधितस्य तृप्त्यै
प्रदिष्टकाला परमेश्वरेण।
उपस्थिता शोणितपारणा मे
सुरद्विषश्चान्द्रमसी सुधेव (१) ॥ ३९ ॥
स त्वं निवर्त्तस्व विहाय लज्जां
गुरोर्भवान् दर्शितशिष्यभक्तिः।

इति केशवः। सिंहत्वं विधाय अस्मिन् अद्रिकुक्षौ गुहायाम् अहं व्यापारितः नियुक्तः ॥ ३८ ॥

तस्येति। परमेश्वरेण प्रदिष्टः निर्दिष्टः कालः भोजनवेला यस्याः सा उपस्थिता प्राप्ता एषा गोरूपा शोणितपारणा रुधिरस्य व्रतान्तभोजनं सुरद्विषः राहोः चन्द्रमसः इयं चान्द्रमसी सुधा इव क्षुधितस्य बुभुक्षितस्य तस्य अङ्कागतसत्त्ववृत्तेः मे मम सिंहस्य तृप्त्यै अलं पर्य्याप्ता। नमःस्वस्तीत्यादिना चतुर्थी ॥३९॥

स इति। स एवम् उपायशून्यः त्वं लज्जां विहाय निवर्त्तस्व। भवान् त्वं गुरोः दर्शिता प्रकाशिता शिष्यस्य कर्त्तव्या भक्तिः येन सः तथोक्तः असि। ननु गुरुधनं विनाश्य कथं तत्समीपं गच्छेयमत आह शस्त्रेणेति। यत् रक्ष्यं धनं शस्त्रेण आयुधेन। "शस्त्रमायुधलोहयोः" इत्यमरः। अशक्या रक्षा

(१) अत्र अस्य क्षुधितस्य मे एषा उपस्थिता इति क्रमेण व्याख्यातं।

शस्त्रेण रक्ष्यं यदशक्यरक्षं
न तद्यशः शस्त्रभृतां क्षिणोति ॥ ४० ॥
इति प्रगल्भं पुरुषाधिराजः
मृगाधिराजस्य वचो निशम्य।
प्रत्याहतास्त्रो गिरिशप्रभावात्
आत्मन्यवज्ञां शिथिलीचकार ॥ ४१ ॥
प्रत्यब्रवीच्चैनमिषुप्रयोगे
तत्पूर्वभङ्गे वितथप्रयत्नः।

यस्य तत् अशक्यरक्षं रक्षितुमशक्यम् इत्यर्थः तत् रक्ष्यं नष्टम् अपि शस्त्रभृतां यशः न क्षिणोति न हिनस्ति अशक्यार्थेष्वप्रतिविधानं न दोषाय इति भावः ॥ ४० ॥

इतीति। पुरुषाणाम् अधिराजः नृपः इति प्रगल्भं मृगाधिराजस्य वचः निशम्य श्रुत्वा गिरिशस्य ईश्वरस्य प्रभावात् प्रत्याहतास्त्रः कुण्ठितास्त्रः सन् आत्मनि विषये अवज्ञाम् अपमानं शिथिलीचकार तत्याज इत्यर्थः अवज्ञातोऽहमिति निर्वेदं न प्राप इत्यर्थः। समानेषु हि क्षत्रियाणामभिमानो न सर्वेश्वरं प्रति इति भावः ॥ ४१ ॥

प्रतीति। स एव पूर्वः प्रथमः भङ्गः प्रतिबन्धः यस्य तस्मिन् तत्पूर्वभङ्गे इषुप्रयोगे वितथप्रयत्नः विफलप्रयासः अतएव मघ्यं कुलिशं मुमुक्षन् मोक्तुम् इच्छन् अम्बकं लोचनम्। "दृग्-दृष्टिनेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि" इति हलायुधः।

जड़ीकृतस्त्र्यम्बकवीचणेन
वज्रं मुमुचन्निव वज्रपाणिः ॥ ४२ ॥
संरुद्धचेष्टस्य मृगेन्द्र कामं
हास्यं वचस्तद्यदहं विवक्षुः ।
अन्तर्गतं प्राणभृतां हि वेद
सर्व्वं भवान् भावमतोऽभिधास्ये ॥ ४३ ॥

त्रीणि अम्बकानि यस्य सः त्र्यम्बकः हरः तस्य वीचणेन जड़ीकृतः निष्पन्दीकृतः वज्रं पाणौ यस्य सः वज्रपाणिः इन्द्रः । प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः इति वक्तव्यमिति पाणेः सप्तम्यन्तस्योत्तरनिपातः । स इव स्थितः नृपः एनं सिंहं प्रत्यब्रवीत् । "बाहुं सवज्रं शक्रस्य क्रुद्धस्यास्तम्भयत् प्रभुः" इति महाभारते ॥ ४२ ॥

संरुद्धेति । हे मृगेन्द्र संरुद्धचेष्टस्य प्रतिबद्धव्यापारस्य मम तत् वचः वाक्यं कामं हास्यं परिहसनीयं यत् वचः सः त्वं मदीयेनेत्यादिकम् अहं विवक्षुः वक्तुम् इच्छुः अस्मि । तर्हि तूष्णीं स्थीयतामित्याशङ्क्य ईश्वरकिङ्करत्वात् सर्व्वज्ञं त्वां प्रति न हास्यमित्याह, अन्तरिति । हि यतः भवान् प्राणभृताम् अन्तर्गतं हृद्गतं वाग्वृत्त्या वहिरप्रकाशितम् एव सर्व्वं भावं वेद वेत्ति। विदो लटो वेति णलादेशः । अतः अहम् अभिधास्ये वक्ष्यामि, वच इति प्रकृतं कर्म्म सम्बध्यते । अन्ये लौटम्वचनमाकर्ण्य सम्भावितार्थमेतदित्युपहसन्ति अतस्तु मौनमेव भूषणं । त्वं तु

मान्यः स मे स्थावरजङ्गमानां
सर्गस्थितिप्रत्यवहारहेतुः।
गुरोरपीदं धनमाहिताग्नेः (१)
नश्यत् पुरस्तादनुपेक्षणीयम् ॥ ४४ ॥
स त्वं मदीयेन शरीरवृत्तिं
देहेन निर्वर्त्तयितुं प्रसीद।

वाङ्मनसयोरेकविध एवायमिति जानासि अतोऽभिभाषे यद्वचोऽहं विवक्षुः इत्यर्थः ॥ ४३ ॥

मान्य इति। प्रत्यवहारः प्रलयः। स्थावराणां तरुशैलादीनां जङ्गमानां मनुष्यादीनां सर्गस्थितिप्रत्यवहारेषु हेतुः सः ईश्वरः मे मम मान्यः पूज्यः अलङ्घ्यशासनः इत्यर्थः। शासनञ्च सिंहत्वमङ्कागतसत्त्ववृत्तीत्युक्तरूपम्। तर्हि विसृज्य गम्यतां नेत्याह, गुरोरपीति। पुरस्तात् अग्रे नश्यत् इदम् आहिताग्नेः गुरोः धनम् अपि गोरूपम् अनुपेक्षणीयम्। आहिताग्नेरिति विशेषणेनानुपेक्षाकारणं हविःसाधनत्वं सूचयति ॥ ४४ ॥

स इति। सः अङ्कागतसत्त्ववृत्तिः त्वं मदीयेन देहेन शरीरस्य वृत्तिं जीवनं निवर्त्तयितुं सम्पादयितुं प्रसीद। दिनाव-

(१) "पाणिग्रहणादि गृह्यं परिचरेत् स्वयं पत्न्यपि वा पुत्रः कुमार्यन्तेवासी वा" इति नियमेन पाणिग्रहणादारभ्य येनाग्निराहितः स एवाहिताग्निः। तथाचोक्तं— "योऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते। अन्नं तस्य न भोक्तव्यं वृथापाको हि सः स्मृतः" इति अत्र कल्पान्तरमपि दृश्यते तथाहि "अपि वैवाहिको येन न गृहीतः प्रमादिना। पितर्युपरते तेन ग्रहीतव्यः प्रयत्नतः" इति।

दिनावसानोत्सुकबालवत्सा
विसृज्यतां धेनुरियं महर्षेः ॥ ४५ ॥
अथान्धकारं गिरिगह्वराणां
दंष्ट्रामयूखैः शकलानि कुर्व्वन्।
भूयः स भूतेश्वरपार्श्ववर्त्ती
किञ्चिद्विहस्यार्थपतिं बभाषे ॥ ४६ ॥
एकातपत्रं जगतः प्रभुत्वं
नवं वयः कान्तमिदं वपुश्च।
अल्पस्य हेतोर्बहु हातुमिच्छन्
विचारमूढः प्रतिभासि मे त्वम् ॥ ४७ ॥

साने उत्सुकः माता समागमिष्यतीत्युत्कण्ठितः बालवत्सः यस्याः सा महर्षेः इयं धेनुः विसृज्यताम् ॥ ४५ ॥

अथेति। अथ भूतेश्वरस्य पार्श्ववर्त्ती अनुचरः स सिंहः गिरेः गह्वराणां गुहानाम्। "देवखातबिले गुहा गह्वरम्" इत्यमरः। अन्धकारं ध्वान्तं दंष्ट्रामयूखैः शकलानि खण्डानि कुर्व्वन् निरस्यन् इत्यर्थः, किञ्चित् विहस्य अर्थपतिं नृपं भूयः बभाषे। हासकारणम् अल्पस्य हेतोर्बहु हातुमिच्छन्निति वक्ष्यमाणं द्रष्टव्यम् ॥ ४६ ॥

एकेति। एकातपत्रम् एकच्छत्रं जगतः प्रभुत्वं स्वामित्वं, नवं वयः यौवनम्, इदं कान्तं रम्यं वपुश्च, इत्येवं बहु अल्पस्य हेतोः अल्पेन कारणेन अल्पफलाय इत्यर्थः। "षष्ठी हेतु-

भूतानुकम्पा तव चेदियं गौः
एका भवेत् स्वस्तिमती त्वदन्ते ।
जीवन् पुनः शश्वदुपप्लवेभ्यः
प्रजाः प्रजानाथ पितेव पासि ॥ ४८ ॥
अथैकधेनोरपराधचण्डात्
गुरोः कृशानुप्रतिमाद्बिभेषि ।

प्रयोगे" इति षष्ठी। हातुं त्यक्तुम् इच्छन् त्वं विचारे कार्याकार्यविमर्शे मूढः मूर्खः मे मम प्रतिभासि ॥ ४७ ॥

भूतेति। तव भूतेषु अनुकम्पा कृपा चेत्। "कृपा दयाऽनुकम्पा स्यात्" इत्यमरः। कृपैव वर्त्तते चेत् इत्यर्थः, तर्हि त्वदन्ते तव नाशे सति इयम् एका गौः स्वस्ति क्षेमम् अस्याः अस्तीति स्वस्तिमती भवेत् जीवेत् इत्यर्थः। "स्वस्त्याशीःक्षेमपुण्यादौ" इत्यमरः। हे प्रजानाथ जीवन् पुनः पिता इव प्रजाः उपप्लवेभ्यः विघ्नेभ्यः शश्वत् सदा। "पुनःसदार्थयोः शश्वत्" इत्यमरः। पासि रक्षसि। स्वप्राणव्ययेनैकधेनुरक्षणादरं जीवितेनैव शश्वदखिलजगद्रक्षणम् इत्यर्थः॥ ४८ ॥

न धर्मलोपादियं प्रवृत्तिः किन्तु गुरुभयादित्यत आह, अथेति। अथेति पक्षान्तरे अथवा एका एव धेनुः यस्य तस्मात्। अयं कोपकारणोपन्यास इति ज्ञेयम्। अत एव अपराधे गवोपेक्षालक्षणे सति चण्डात् अतिकोपनात्। "चण्डस्त्वत्यन्तकोपनः" इत्यमरः। अत एव कृशानुः प्रतिमा उपमा

शक्योऽस्य मन्युर्भवता विनेतुं
गाः कोटिशः स्पर्शयता घटोध्नीः ॥ ४९ ॥
तदृक्ष कल्याणपरम्पराणां
भोक्तारमूर्जस्वलमात्मदेहम्।
महीतलस्पर्शनमात्रभिन्नम्
ऋद्धं हि राज्यं पदमैन्द्रमाहुः ॥ ५० ॥

यस्य तस्मात् अग्निकल्पात् गुरोः बिभेषि इति काकुः। भीतार्थानां भयहेतुरित्यपादानात् पञ्चमी। अल्पवित्तस्य धनहानिः अतिदुःसहा इति भावः। अस्य गुरोः मन्युः क्रोधः। "मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः। घटाः इव ऊधांसि यासां ताः घटोध्नीः। ऊधसोऽनङित्यनङादेशः, बहुव्रीहेरूधसोङीषिति ङीप्। कोटिशः गाः स्पर्शयता प्रतिपादयता। "विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्" इत्यमरः। भवता विनेतुम् अपनेतुं शक्यः ॥ ४९ ॥

तदिति। तत् तस्मात् कारणात् कल्याणपरम्पराणां भोक्तारम्। कर्मणि षष्ठी। ऊर्जः बलम् अस्य अस्तीति ऊर्जस्वलम्। ज्योत्स्नातमिस्रेत्यादिना वलच्प्रत्ययान्तो निपातः। आत्मदेहं रक्ष। ननु गामुपेक्ष्य आत्मदेहरक्षणे स्वर्गहानिः स्यात्, नेत्याह, महीतलेति। ऋद्धं समृद्धं राज्यं महीतलस्पर्शनमात्रेण भूतलसम्बन्धमात्रेण भिन्नम् ऐन्द्रम् इन्द्रसम्बन्धि पदं स्थानम् आहुः स्वर्गान्न भिद्यते इत्यर्थः ॥ ५० ॥

एतावदुक्त्वा विरते मृगेन्द्रे
प्रतिस्वनेनास्य गुहागतेन।
शिलोच्चयोऽपि चितिपालमुच्चैः
प्रीत्या तमेवार्थमभाषतेव ॥ ५१ ॥

निशम्य देवानुचरस्य वाचं
मनुष्यदेवः पुनरप्युवाच।
धेन्वा तदध्यासितकातराच्या(१)
निरीच्यमाणः सुतरां दयालुः ॥ ५२ ॥

एतावदिति। मृगेन्द्रे (सिंहे) एतावत् उक्त्वा विरते सति गुहागतेन अस्य सिंहस्य प्रतिस्वनेन (प्रतिध्वनिना) शिलोच्चयः शैलोऽपि प्रीत्या तम् एव अर्थं चितिपालम् उच्चैः अभाषत इव इत्युत्प्रेचा। भाषिरयं ब्रुविसमानार्थत्वात् द्विकर्म्मकः, ब्रुविस्तु द्विकर्म्मकेषु पठितः। तदुक्तम्, "दुहियाचिरुधिप्रच्छिभिचिचित्रा-मुपयोगनिमित्तमपूर्वविधौ। ब्रुविशासिगुणेन च यत् सचते तदकीर्त्तितमाचरितं कविना" इति ॥ ५१ ॥

निशम्येति। देवानुचरस्य ईश्वरकिङ्करस्य सिंहस्य वाचं निशम्य मनुष्यदेवः राजा पुनः अपि उवाच। किम्भूतः सन्, तेन सिंहेन यत् अध्यासितं व्याक्रमणम्। नपुंसके भावे क्तः।

(१) "तदध्यासनकातराच्या" इति वल्लभेन पठितम्। "तस्य सिंहस्य अध्यासने तेन कातरे अचिणी यस्याः सा तया सिंहाक्रमेण चुभितनेत्रया" इति वल्लभः। तदध्यासिता अतएव कातराची इति मल्लः।

क्षतात् किल त्रायत इत्युदग्रः (१)
क्षत्रस्य शब्दो भुवनेषु रूढः ।
राज्येन किं तद्विपरीतवृत्तेः
प्राणैरुपक्रोशमलीमसैर्वा ॥ ५३ ॥

तेन कातरे अक्षिणी यस्याः तया । "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षजिति षच्" षिद्गौरादिभ्यश्चेति ङीष् । किं वा वक्ष्यतीति भीत्येवं स्मितया इत्यर्थः, धेन्वा निरीक्ष्यमाणः अत एव सुतरां (अत्यर्थं) दयालुः सन् । सुतरामित्यत्र द्विवचनविभज्येत्यादिना सुशब्दात् तरप्, किमेत्तिङव्ययेत्यादिना आम्प्रत्ययः, तद्धितश्चासर्व्वविभक्तिरित्यव्ययसंज्ञा ॥ ५२ ॥

किमुवाचेत्याह, क्षतादिति । क्षणु हिंसायामिति धातोः सम्पदादित्वात् क्विप्, गमादीनामिति वक्तव्यादनुनासिकलोपे तुगागमे च क्षदिति रूपं सिद्धम् । क्षतः नाशात् त्रायते इति क्षत्त्रः सुपीति योगविभागात् कः । तामेतां व्युत्पत्तिं कविरर्थतोऽनुक्रामति क्षतादित्यादिना । उदग्रः उन्नतः क्षत्त्रस्य क्षत्त्रवर्णस्य शब्दः वाचकः क्षत्त्रशब्दः इत्यर्थः, क्षतात् त्रायते इति

(1) The derivation of the word क्षत्र as given in the text is rather fanciful. The proper derivation seems to be from meaning strength; hence he, who is noted for deeds of strength, came also to be called क्षत्र or क्षत्रिय। In the following hymn the word क्षत्र is used in the sense of strength "नहि ते क्षत्रं, न सहो, न मन्युं वयश्चनामी पतयन्त आपुः।" Translate—"these birds, flying in the air, have not attained thy strength, nor thy power; nor are they up to thy wrath." Rig i.24.6.

कथं नु शक्योऽनुनयो महर्षेः
विश्राणनाच्चान्यपयस्विनीनाम्।
इमामनूनां (१) सुरभेरवेहि
रुद्रौजसा तु प्रहृतं त्वयास्याम्॥ ५४॥

व्युत्पत्त्या भुवनेषु रूढः किल प्रसिद्धः खलु, नाखकर्णादिवत् केवलरूढः किन्तु पङ्कजादिवत् योगरूढः इत्यर्थः। ततः किमित्यत आह, तस्य चत्रशब्दस्य विपरीतवृत्तेः विरुद्धव्यापारस्य चतः त्राणम् अकुर्वतः पुंसः राज्येन किम्। उपक्रोशमलीमसैः निन्दामलिनैः। "उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे" इत्यमरः। ज्योत्स्नातमिस्रेत्यादिना मलीमसशब्दो निपातितः। "मलीमसं तु मलिनं कच्चरं मलदूषितम्" इत्यमरः। प्राणैर्वा किं, निन्दितस्य सर्व्वं व्यर्थम् इत्यर्थः। एतेनैकातपत्रमित्यादिना श्लोकद्वयेनोक्तं प्रत्युक्तमिति वेदितव्यम्॥ ५३॥

अथैकधेनोरित्यस्योत्तरमाह, कथमिति। अनुनयः क्रोधापनयः (प्रसादनमित्यर्थः)। चकारो वाकारार्थः। महर्षेः अनुनयः वा अन्यासां पयस्विनीनां दोग्ध्रीणां गवां विश्राणनात् दानात्। "त्यागो वितरणं दानमुत्सर्जनविसर्जने। विश्राणनं वितरणम्" इत्यमरः। कथं नु शक्यः, न शक्यः इत्यर्थः। अत्र हेतुमाह, इमां गां सुरभेः कामधेनोः। पञ्चमी विभक्ते इति पञ्चमी। अनूनाम् अन्यूनाम् अवेहि जानीहि। तर्हि कथमस्याः परिभवोऽ-

(१), न ऊना न हीना अनूना सदृशी ताम्।

सेयं स्वदेहार्पणनिष्क्रयेण(१)
न्याय्या मया मोचयितुं भवत्तः।
न पारणा स्याद्विहता तवैवं
भवेदलुप्तश्च मुनेः क्रियार्थः ॥ ५५ ॥

भूदित्याह, रुद्रौजसेति। अस्यां गवि त्वया कर्त्ता प्रहृतं तु प्रहारस्तु। नपुंसके भावे क्तः। रुद्रौजसा ईश्वरसामर्थ्येन, न तु तव इत्यर्थः। सप्तम्यधिकरणे चेति सप्तमी ॥ ५४ ॥

तर्हि किं चिकीर्षितमित्यत्राह, सेयमिति। सा इयं गौः मया, निष्क्रीयते प्रत्याक्रियते अनेन, परगृहीतम् इति निष्क्रयः प्रतिशीर्षकम्। एरजिति अच्प्रत्ययः। स्वदेहार्पणम् एव निष्क्रयः, तेन भवत्तः त्वत्तः। पञ्चम्यास्तसिल्। मोचयितुं न्याय्या न्यायात् अनपेता युक्ता इत्यर्थः। धर्मपथ्यर्थेत्यादिना यत्प्रत्ययः। एवं सति तव पारणा भोजनं विहता न स्यात्, मुनेः क्रिया होमादिः(२)स एव अर्थः प्रयोजनं स च अलुप्तः भवेत्। स्वप्राणव्ययेनापि स्वामिगुरुधनं संरक्ष्यम् इति भावः ॥ ५५ ॥

---

(१) स्वदेहार्पणं अर्पितस्वदेहः तदेव निष्क्रयः प्रतिमूल्यं तेन, "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति नियमात्।

(२) होमस्य पञ्चयज्ञानामन्तःपातित्वात् नित्यकर्मत्वेन न कथञ्चिदपि हापनीयत्वं। यदुक्तं— "ब्रह्मयज्ञो नृयज्ञश्च दैवयज्ञश्च सत्तम।
पितृयज्ञो भूतयज्ञः पञ्च यज्ञाः प्रकीर्त्तिताः"। इति पद्मपुराणम्।
"अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणं। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनं। पञ्चैतान् यो महायज्ञान् न हापयति शक्तितः। स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते" इति। सूना मांसविक्रये।

भवानपीदं परवानवैति
महान् हि यत्नस्तव देवदारौ ।
स्थातुं नियोक्तुर्न हि शक्यमग्रे
विनाश्य रक्ष्यं स्वयमक्षतेन ॥ ५६ ॥
किमप्यहिंस्यस्तव चेन्मतोऽहं
यशःशरीरे भव मे दयालुः ।

अथ भवानेव प्रमाणमित्याह, भवानिति । परवान् स्वामिपरतन्त्रः भवान् अपि । "परतन्त्रः पराधीनः परवान् नाथवानपि" इत्यमरः । इदं वक्ष्यमाणम् अवैति, भवता अनुभूयते एव इत्यर्थः । शेषे प्रथम इति प्रथमपुरुषः । किमित्यत आह, हि यस्मात् हेतोः । "हि हेताववधारणे" इत्यमरः । तव देवदारौ विषये महान् यत्नः महता यत्नेन रक्ष्यते इत्यर्थः । इदंशब्दोक्तमर्थं दर्शयति, स्थातुमिति । रक्ष्यं वस्तु विनाश्य विनाशं गमयित्वा स्वयम् अक्षतेन अव्रणेन, नियुक्तेन इति शेषः नियोक्तुः स्वामिनः अग्रे स्थातुं शक्यं न हि ॥ ५६ ॥

सर्व्वथा चैतदप्रतिहार्य्यमित्याह, किमिति । किम् अपि किंवा अहं तव अहिंस्यः अवध्यः मतः चेत् तर्हि मे यशः एव शरीरं तस्मिन् दयालुः कारुणिकः भव । "स्याद्दयालुः कारुणिकः" इत्यमरः । ननु मुख्यमुपेक्ष्यामुख्यशरीरे कोऽभिनिवेशः, अत आह, एकान्तेति । मद्विधानां मादृशानां विवेकिनाम् एकान्तविध्वंसिषु अवश्यविनाशिषु भौतिकेषु पृथिव्यादिभूत-

एकान्तविध्वंसिषु मद्विधानां
पिण्डेष्वनास्था खलु भौतिकेषु ॥ ५७ ॥
सम्बन्धमाभाषणपूर्वमाहुः (१)
वृत्तः स नौ सङ्गतयोर्वनान्ते (२)
तद्भूतनाथानुग नार्हसि त्वं
सम्बन्धिनो मे प्रणयं विहन्तुम् ॥ ५८ ॥

विकारेषु पिण्डेषु शरीरेषु अनास्था खलु अनपेक्षा एव। "आस्था त्वालम्बनास्थानयत्नापेक्षासु कथ्यते" इति विश्वः ॥ ५७ ॥

सौहार्द्दादहमनुसरणीयोऽस्मीत्याह, सम्बन्धमिति। सम्बन्धं सख्यम् आभाषणम् आलापः पूर्वं कारणं यस्य तम् आहुः। "स्यादाभाषणमालापः" इत्यमरः। सः तादृक् सम्बन्धः वनान्ते सङ्गतयोः नौ आवयोः वृत्तः जातः तत् ततः हेतोः हे भूतनाथानुग शिवानुचर एतेन तस्य महत्त्वं सूचयति, अत एव सम्बन्धिनः मित्रस्य मे प्रणयं याञ्चाम्। "प्रणयास्त्वमी विश्रम्भयाञ्चाप्रेमाणः" इत्यमरः। विहन्तुं न अर्हसि ॥ ५८ ॥

---

(१) Compare :- "यतः सतां सन्नतगात्रि सङ्गतं, मनीषिभिः साप्तपदीनमुच्यते"। इति कुमारसम्भवम् Canto v. As also "न त्वां करोम्यहं मन्ये क्रोधतीव्रेण वह्निना। सतां साप्तपदं मैत्रमुषितोऽहं त्वया सह"॥ इति विष्णुपुराणम्।

(२) वनस्य अन्तं स्वरूपं वनान्तं वनमित्यर्थः, मृतावसिते रम्ये स्वरूपे चान्तिकेऽपि चेति अभिधानात्।

तथेति गामुक्तवते दिलीपः
सद्यः प्रतिष्टम्भविमुक्तबाहुः ।
स न्यस्तशस्त्रो हरये स्वदेहम्
उपानयत् पिण्डमिवामिषस्य ॥ ५९ ॥

तस्मिन् क्षणे पालयितुः प्रजानाम्
उत्पश्यतः सिंहनिपातमुग्रम् ।
अवाङ्मुखस्योपरि पुष्पवृष्टिः
पपात विद्याधरहस्तमुक्ता ॥ ६० ॥

उत्तिष्ठ वत्सेत्यमृतायमानं
वचो निशम्योत्थितमुत्थितः सन् ।

तथेति । तथा इति गाम् उक्तवते हरये सिंहाय । "कपौ सिंहे सुवर्णे च वर्णे विष्णौ हरिं विदुः" इति शाश्वतः । सद्यः तत्क्षणे प्रतिष्टम्भात् प्रतिबन्धात् विमुक्तः बाहुः यस्य स दिलीपः न्यस्तशस्त्रः त्यक्तायुधः सन् स्वदेहम् आमिषस्य मांसस्य । "पललं क्रव्यमामिषम्" इत्यमरः । पिण्डं कवलम् इव उपानयत् समर्पितवान् । एतेन निर्ममत्वमुक्तम् ॥ ५९ ॥

तस्मिन्निति । तस्मिन् क्षणे उग्रं सिंहनिपातम् उत्पश्यतः उत्प्रेक्षमाणस्य तर्कयतः अवाङ्मुखस्य अधोमुखस्य । "स्यादवाङप्यधोमुखः" इत्यमरः । प्रजानां पालयितुः राज्ञः उपरि उपरिष्टात् । उपर्युपरिष्टादिति निपातः । विद्याधराणां देवयोनिविशेषाणां हस्तैः मुक्ता पुष्पवृष्टिः पपात ॥ ६० ॥

ददर्श राजा जननीमिव स्वां
गामग्रतः प्रस्रविणीं न सिंहम्॥ ६१ ॥
तं विस्मितं धेनुरुवाच साधो
मायां मयोद्भाव्य परीक्षितोऽसि।
ऋषिप्रभावान्मयि नान्तकोऽपि
प्रभुः प्रहर्त्तुं किमुतान्यहिंस्राः॥ ६२ ॥
भक्त्या गुरौ मय्यनुकम्पया च
प्रीतास्मि ते पुत्र वरं वृणीष्व।

उत्तिष्ठेति। राजा, अमृतमिव आचरतीति अमृतायमानं तत्। उपमानादाचार इति क्यङ्, ततः शानच्। उत्थितम् उत्पन्नं हे वत्स उत्तिष्ठ इति वचः निशम्य श्रुत्वा उत्थितः सन्। अस्तेः शतृप्रत्ययः। अग्रतः अग्रे प्रस्रवः क्षीरस्रावः अस्ति यस्याः सा तां प्रस्रविणीं गां स्वां जननीम् इव ददर्श सिंहं न ददर्श॥ ६१ ॥

तमिति। विस्मितम् आश्चर्यं गतम्। कर्त्तरि क्तः। तं दिलीपं धेनुः उवाच। किमित्याह, हे साधो मया मायाम् उद्भाव्य कल्पयित्वा परीक्षितः असि, ऋषिप्रभावात् मयि अन्तकः यमः अपि प्रहर्त्तुं न प्रभुः न समर्थः, अन्ये हिंस्राः घातुकाः। "शरारुर्घातुको हिंस्रः" इत्यमरः। नमिकम्पीत्यादिना रप्रत्ययः। किमुत सुष्ठु न प्रभवः इति योज्यम्। "बलवत् सुष्ठु किमुत स्वत्यतीव च निर्भरः" इत्यमरः॥ ६२ ॥

न केवलानां पयसां प्रसूतिम्
अवेहि मां कामदुघां प्रसन्नाम् ॥ ६३ ॥
ततः समानीय स मानितार्थी
हस्तौ स्वहस्तार्जितवीरशब्दः।
वंशस्य कर्त्तारमनन्तकीर्त्तिं
सुदक्षिणायां तनयं ययाचे ॥ ६४ ॥
सन्तानकामाय तथेति कामं
राज्ञे प्रतिश्रुत्य पयस्विनी सा।

भक्त्येति। हे पुत्र गुरौ भक्त्या मयि अनुकम्पया च ते तुभ्यं प्रीता अस्मि। क्रियाग्रहणमपि कर्त्तव्यमिति चतुर्थी। वरं देवेभ्यो वरणीयम् अर्थम्। "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवे मनाक् प्रिये" इत्यमरः। वृणीष्व स्वीकुरु। तथाहि, मां केवलानां पयसां प्रसूतिं कारणं न अवेहि न विद्धि किन्तु प्रसन्नां मां कामान् दोग्धीति कामदुघा ताम् अवेहि। दुहः कप् घश्चेति कप्प्रत्ययः ॥ ६३ ॥

तत इति। ततः मानितार्थी स्वहस्तार्जितः वीरः इति शब्दः येन सः। एतेनास्य 'दातृत्वं' दैन्यराहित्यं चोक्तम्। स राजा हस्तौ समानीय सन्धाय अञ्जलिं बद्ध्वा इत्यर्थः वंशस्य कर्त्तारं प्रवर्त्तयितारम् अत एव रघुकुलमिति प्रसिद्धिः। अनन्तकीर्त्तिं स्थिरयशसं तनयं सुदक्षिणायां ययाचे ॥ ६४ ॥

सन्तानेति। सा पयस्विनी गौः, सन्तानं कामयते इति

दुग्ध्वा पयः पत्रपुटे मदीयं
पुत्रोपभुङ्क्ष्वेति तमादिदेश ॥ ६५ ॥
वत्सस्य होमार्थविधेश्च शेषम्
ऋषेरनुज्ञामधिगम्य मातः।
औधस्यमिच्छामि तवोपभोक्तुं
षष्ठांशमुर्व्या इव रक्षितायाः ॥ ६६ ॥
इत्थं क्षितीशेन वसिष्ठधेनुः
विज्ञापिता प्रीततरा बभूव।

सन्तानकामः। कर्म्मणि अण्। तस्मै राज्ञे तथेति काम्यते इति कामः वरः। कर्म्मार्थे घञ्प्रत्ययः। तं प्रतिश्रुत्य प्रतिज्ञाय हे पुत्र, मदीयं पयः पत्रपुटे पत्रनिर्मिते पात्रे दुग्ध्वा उपभुङ्क्ष्व पिब इति, उपयुङ्क्ष्व इति वा पाठः। तम् आदिदेश आज्ञापितवती ॥ ६५ ॥

वत्सस्येति। हे मातः वत्सस्य वत्सपीतस्य शेषं वत्सपीतावशिष्टम् इत्यर्थः, होमः एव अर्थः तस्य विधिः अनुष्ठानं तस्य शेषं होमावशिष्टम् इत्यर्थः। तव ऊधसि भवम् औधस्यं क्षीरम्। शरीरावयवाच्चेति यत्प्रत्ययः। रक्षितायाः उर्व्याः षष्ठांशं षष्ठभागम् इव ऋषेः अनुज्ञाम् अधिगम्य उपभोक्तुम् इच्छामि ॥ ६६ ॥

इत्थमिति। इत्थं क्षितीशेन विज्ञापिता वसिष्ठस्य धेनुः प्रीततरा पूर्वं शुश्रूषया प्रीता सम्प्रति एनया विज्ञापनया प्रीततरा अतिसन्तुष्टा बभूव, तदन्विता तेन दिलीपेन अन्विता

तदन्विता हैमवताच्च कुक्षेः
प्रत्याययावाश्रममश्रमेण ॥ ६७ ॥

तस्याः प्रसन्नेन्दुमुखः प्रसादं
गुरुर्नृपाणां गुरवे निवेद्य ।
प्रहर्षचिह्नानुमितं प्रियायै
शशंस वाचा पुनरुक्तयेव ॥ ६८ ॥

स नन्दिनीस्तन्यमनिन्दितात्मा
सद्वत्सलो वत्सहुतावशेषम् ।
पपौ वसिष्ठेन कृताभ्यनुज्ञः
शुभ्रं यशो मूर्त्तमिवातितृष्णः ॥ ६९ ॥

हैमवतात् हिमवत्सम्बन्धिनः कुक्षेः गुहायाः सकाशात् अश्रमेण अनायासेन आश्रमं प्रत्याययौ आगता च ॥ ६७ ॥

तस्या इति । प्रसन्नेन्दुरिव मुखं यस्य सः नृपाणां गुरुः दिलीपः प्रहर्षचिह्नैः मुखरागादिभिः अनुमितम् ऊहितं तस्याः धेनोः प्रसादम् अनुग्रहं प्रहर्षचिह्नैरेव ज्ञातत्वात् पुनरुक्तया इव वाचा गुरवे निवेद्य विज्ञाप्य पश्चात् प्रियायै शशंस। कथितस्यैव कथनं पुनरुक्तिः, न चेह तदस्ति किन्तु चिह्नैः कथितत्वात् पुनरुक्तयेव स्थितया इत्युत्प्रेक्षा ॥ ६८ ॥

स इति । अनिन्दितात्मा अगर्हितस्वभावः सत्सु वत्सलः प्रेमवान् सद्वत्सलः। वत्सांसाभ्यां कामवले इति लच्प्रत्ययः।

प्रातर्यथोक्तव्रतपारणान्ते
प्रास्थानिकं स्वस्त्ययनं प्रयुज्य ।
तौ दम्पती स्वां प्रति राजधानीं
प्रस्थापयामास वशी वसिष्ठः ॥ ७० ॥

प्रदक्षिणीकृत्य हुतं हुताशम्
अनन्तरं भर्त्तुररुन्धतीञ्च ।
धेनुं सवत्साञ्च नृपः प्रतस्थे
सन्मङ्गलोदग्रतरप्रभावः(१) ॥ ७१ ॥

वसिष्ठेन कृताभ्यनुज्ञः कृतानुमतिः स राजा वत्सस्य हुतस्य च अवशेषं पीतहुतावशिष्टं नन्दिन्याः स्तन्यं क्षीरं शुभ्रं मूर्त्तं परिच्छिन्नं यशः इव अतितृष्णः सन् पपौ ॥ ६८ ॥

प्रातरिति । वशी वसिष्ठः प्रातः यथोक्तस्य पूर्वोक्तस्य व्रतस्य गोसेवारूपस्य अङ्गभूता या पारणा तस्याः अन्ते प्रास्थानिकं प्रस्थानकाले भवं तत्कालोचितम् इत्यर्थः । कालाट्ठञिति ठञ्-प्रत्ययः । "यथाकथञ्चित् गुणवृत्त्यापि काले वर्त्तमानात् तत्-प्रत्यय इष्यते" इति वृत्तिकारः । ईयते प्राप्यते अनेनेति अयनं स्वस्त्ययनं शुभावहम् आशीर्वादं प्रयुज्य तौ दम्पती स्वां राजधानीं पुरीं प्रति प्रस्थापयामास ॥ ७० ॥

प्रदक्षिणीकृत्येति । नृपः हुतं तर्पितम् । हुतम् अश्ना-

(१) सतां मङ्गलेन प्रीतवह्निगोब्राह्मणप्रदक्षिणीकरणेन महीयान् प्रभावो यस्य इति दिनकरः । सन्मङ्गलैः प्रस्थानकाले अनुकूलैः पक्षिभिरन्यैश्च निमित्तैः भाविशुभसूचनैस् इति वल्लभः ।

श्रोत्राभिरामध्वनिना रथेन
स धर्म्मपत्नीसहितः सहिष्णुः।
ययावनुद्घातसुखेन मार्गं
स्वेनेव पूर्णेन मनोरथेन ॥ ७२ ॥
तमाहितौत्सुक्यमदर्शनेन
प्रजाः प्रजार्थव्रतकर्शिताङ्गम्।

तीति हुताशः अग्निः। कर्म्मणि अण्। तं भर्त्तुः मुनेः अनन्तरं प्रदक्षिणानन्तरम् इत्यर्थः। अरुन्धतीञ्च सवत्सां धेनुञ्च प्रदक्षिणीकृत्य। प्रगतो दक्षिणं प्रदक्षिणम्। तिष्ठद्गुप्रभृतीनि च इत्यव्ययीभावः, ततः च्विः। अप्रदक्षिणं प्रदक्षिणं सम्पद्यमानं कृत्वा प्रदक्षिणीकृत्य सद्भिः मङ्गलैः प्रदक्षिणादिभिः मङ्गलाचारैः उदग्रतरप्रभावः सन् प्रतस्थे ॥ ७१ ॥

श्रोत्रेति। धर्म्मपत्नीसहितः सहिष्णुः व्रतादिदुःखसहनशीलः स नृपः श्रोत्राभिरामध्वनिना कर्णाह्लादकरस्वनेन अनुद्घातः पाषाणादिप्रतिघातरहितः अत एव सुखयतीति सुखः तेन रथेन स्वेन पूर्णेन सफलेन मनोरथेन इव मार्गम् अध्वानं ययौ। मनोरथपक्षे अनुद्घातः प्रतिबन्धनिवृत्तिः ॥ ७२ ॥

तमिति। अदर्शनेन प्रवासनिमित्तेन आहितौत्सुक्यं जनितदर्शनोत्कण्ठं प्रजार्थेन सन्तानार्थेन व्रतेन नियमेन कर्शितं कृशीकृतम् अङ्गं यस्य तं नवोदयं नवाभ्युदयं प्रजाः रक्षितुम् अनाप्नुवद्भिः अतिस्पृहुभिः नेत्रैः ओषधीनां नाथं सोमम्

नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिः
नवोदयं (१) नाथमिवौषधीनाम् ॥ ७३ ॥
पुरन्दरश्रीः (२) पुरमुत्पताकं
प्रविश्य पौरैरभिनन्द्यमानः ।
भुजे भुजङ्गेन्द्रसमानसारे
भूयः स भूमेर्धुरमाससञ्ज ॥ ७४ ॥

इव तं राजानं पपुः अत्यास्थया ददृशुः इत्यर्थः। चन्द्रपक्षे अदर्शनं कलाक्षयनिमित्तं प्रजार्थं लोकहितार्थं व्रतं देवताभ्यः कलादाननियमः। "तञ्च सोमं पपुर्देवाः पर्य्यायेणानुपूर्वशः" इति व्यासः। उदयः आविर्भावः अन्यत् समानम् ॥ ७३ ॥

पुरन्दरेति। पुरः पुरीः असुराणां दारयतीति पुरन्दरः शक्रः। "पूःसर्व्वयोर्दारिसहोः" इति खच्प्रत्ययः, "वाचंयमपुरन्दरौच" इति मुमागमो निपातितः। तस्य श्रीरिव श्रीः यस्य स नृपः पौरैः अभिनन्द्यमानः उत्पताकम् उच्छ्रितध्वजम्। "पताका वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम्" इत्यमरः। पुरं प्रविश्य

(१) यज्ञानां प्रधानसाधनतया औषधिपतिपदेन सोमलताभिधीयते, तत्साहचर्य्यात् चन्द्रोऽपि इति शङ्करः। यद्वा नक्तमौषधीनां प्रकाशात् नियामकत्वात् तत्पतिरेव औषधीनां नाथ इति कथ्यते इत्यनुसन्धेयं।

(२) ऋग्वेदमन्त्रेषु इन्द्रः भूयोभूयः पुरनाशकत्वेन वर्ण्यते तद्यथा—

"पुरां भिन्दुर्युवा कविरमितौजा अजायत। इन्द्रो विश्वस्य कर्म्मणो धर्त्ता वज्री पुरुष्टुतः"। Ri. IXI. 4.

Translate—"Indra was born to be the destroyer of Asura's towns, who is ever young, learned, of immense strength, the upholder of all ceremonies, the thunderbolt-holder and much praised".

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम्।
नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः(१) ॥७५॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ नन्दिनी-
वरप्रदानो नाम द्वितीयः सर्गः।

भुजङ्गेन्द्रेण समानसारे तुल्यबले। "सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु" इत्यमरः। भुजे भूयः भूमेः धुरम् आससञ्ज स्थापितवान् ॥ ७४ ॥

अथेति। अथ द्यौः सुरवर्त्म। "द्यौः स्वर्गसुरवर्त्मनोः" इति विश्वः। अत्रेः महर्षेः नयनयोः समुत्थम् उत्पन्नं नयनसमुत्थम्। "आतश्चोपसर्गे" इति कप्रत्ययः। ज्योतिः इव चन्द्रमिव इत्यर्थः। "अत्रिदृशः स्यादत्रिनेत्रप्रसूतः" इति हलायुधः। चन्द्रस्यात्रिनेत्रोद्भूतत्वमुक्तं हरिवंशे, "नेत्राभ्यां वारि सुस्राव दशधा द्योतयद्दिशः। तं गर्भं दशधा हृष्टा दिशो देव्यो दधुस्ततः। समेत्य धारयामासुर्न च ताः समशक्नुवन्। स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः। पपात भासयन् लोकान्

(१) इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः॥
यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः।
तस्मादभिभवत्येष सर्वभूतानि तेजसा"। इति मनुः। ७।०४।
"इन्द्रात् प्रभुत्वं ज्वलनात् प्रतापं क्रोधं यमाद्वैश्रवणाच्च वित्तम्।
सत्त्वस्थिती रामजनार्दनाभ्यामादाय राज्ञः क्रियते शरीरम्"। इत मतभेन उद्धृतम्।

शीतांशुः सर्व्वभावनः” इति । सुरसरित् गङ्गा वह्निना निष्ठ्यूतं विक्षिप्तम् । ष्ठीवः शूड्नुनासिकेचेत्यनेन निपूर्वात् ष्ठीवतेवै कारस्य ऊट् । “निरस्तास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः” इत्यमरः । ऐशं तेजः स्कन्दम् इव । अत्र रामायणम्, “ते गत्वा पर्व्वतं राम कैलासं धातुमण्डितम् । अग्निं नियोजयामासुः पुत्रार्थं सर्वदेवताः । देवकार्य्यमिदं देव समाधत्स्व हुताशन । शैलपुत्र्यां महातेजो गङ्गायां तेज उत्सृज । देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः । गर्भं धारय वै देवि देवतानामिदं प्रियम् । इत्येतद्वचनं श्रुत्वा दिव्यं रूपमधारयत् । स तस्या महिमां दृष्ट्वा समन्तादवकीर्य्य च । समन्ततस्तु तां देवीमभ्यसिञ्चत पावकः । सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन” इति । राज्ञी सुदक्षिणा नरपतेः दिलीपस्य कुलमूलं(१)सन्ततिलक्षणायै गुरुभिः महद्भिः लोकपालानाम् अनुभावैः तेजोभिः अभिनिविष्टम् अनुप्रविष्टं गर्भम् आधत्त दधौ इत्यर्थः । अत्र मनुः, “अष्टानां लोकपालानां वपुर्धारयते नृपः” इति । अत्र आधत्त इत्यनेन स्त्रीकर्त्तृकधारणमात्रमुच्यते, तथा मन्त्रे च दृश्यते, “यथेयं पृथिवी मह्युत्तानगर्भमादधे एवं त्वं गर्भमाधेहि दशमे मासि सूतये” इत्याश्वलायनानां सीमन्तमन्त्रे स्त्रीव्यापारधारणे आधानशब्दप्रयोगदर्शनादिति । मालिनीवृत्तमेतत् । तदुक्तम्, “ननमयययुतेयं मालिनी भोगिलोकैः” इति लक्षणात् ॥ ७५ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशटीकायां सञ्जीवनीसमाख्यायां द्वितीयः सर्गः ।

---

(१) सन्ततिलक्षणायै कुलस्य मूलाय इत्यर्थः । “मूलमाद्यन्ति सम्पदि” इत्यमरः ।

# तृतीयः सर्गः ।

---

अथेप्सितं (१) भर्त्तुरुपस्थितोदयं
सखीजनोद्वीक्षणकौमुदीमुखम् ।
निदानमिक्ष्वाकुकुलस्य सन्ततेः
सुदक्षिणा दौहृदलक्षणं दधौ ॥ १ ॥

उपाधिगम्योऽप्यनुपाधिगम्यः समावलोक्योऽप्यसमावलोक्यः ।
भवोऽपि योऽभूदभवः शिवोऽयं जगत्यपायादपि नः स पायात्

राज्ञी गर्भमाधत्त इत्युक्तं, सम्प्रति गर्भलक्षणानि वर्णयितुं प्रस्तौति, अथेति । अथ गर्भधारणानन्तरं सुदक्षिणा उपस्थितोदयं(२)प्राप्तकालं भर्त्तुः दिलीपस्य ईप्सितं मनोरथम् । भावे क्तः । पुनः सखीजनस्य उद्वीक्षणानां दृष्टीनां कौमुदीमुखं चन्द्रिकाप्रादुर्भावम् । यद्वा, कौमुदी नाम दीपोत्सवतिथिः । तदुक्तं भविष्योत्तरे, "कौ मोदन्ते जना यस्यां तेनासौ कौमुदी मता" इति । तस्या मुखं प्रारम्भम् अतएव केचित् कौमुदीमहमिति पाठं पठन्ति । इक्ष्वाकुकुलस्य सन्ततेः अविच्छेदस्य निदानं मूलकारणम् । "निदानं त्वादिकारणम्" इत्यमरः । एवंविधं दौहृदलक्षणं गर्भचिह्नं वक्ष्यमाणं दधौ । स्वहृदयेन गर्भहृदयेन च

---

(१) भर्त्तुरीप्सितं कामाभिमतमिति भावः ।

(२) उदय इति [illegible] अधिकरणवाचि अच्प्रत्ययात् उदयशब्दः उदयकालपर्यन्तं । यद्वा [illegible] उदयपदेन उदयकालो बोध्यते ।

418

शरीरसादादसमग्रभूषणा
मुखेन सालक्ष्यत लोध्रपाण्डुना।
तनुप्रकाशेन विचेयतारका
प्रभातकल्पा शशिनेव शर्व्वरी ॥ २ ॥

द्विहृदया गर्भिणी। यथाह वाभटः, "मातृजन्यस्य हृदयं मातुश्च हृदयञ्च यत्। सम्बद्धं तेन गर्भिण्याः श्रेष्ठं श्रद्धाभिमाननम् ॥" इति। तत्सम्बन्धित्वाद्गर्भो दौहृदमित्युच्यते, सा च तद्योगात् दौहृदिनीति, तदुक्तं संग्रहे, "द्विहृदयां नारीं दौहृदिनीमाचक्षते" इति। अत्र दौहृदलक्षणस्येप्सितत्वेन कौमुदीमुखत्वेन चानिरूपणात् रूपकालङ्कारः। अस्मिन् सर्गे वंशस्थं वृत्तम्, "जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात् ॥ १ ॥

सम्प्रति क्षामताख्यं गर्भलक्षणं वर्णयति, शरीरेति। शरीरस्य सादात् कार्श्यात् असमग्रभूषणा परिमिताभरणा लोध्रपुष्पेण इव पाण्डुना मुखेन उपलक्षिता सा सुदक्षिणा विचेयाः मृग्याः तारकाः यस्यां सा तथोक्ता विरलनक्षत्रा इत्यर्थः। तनुप्रकाशेन अल्पकान्तिना शशिना उपलक्षिता ईषदसमाप्तप्रभाता प्रभातकल्पा प्रभातादीषदूना इत्यर्थः। "तसिलादिष्वाकृत्वसुचः" इति प्रभातशब्दस्य पुंवद्भावः। शर्व्वरी रात्रिः इव अलक्ष्यत। शरीरसादादि गर्भलक्षणमाह वाभटः, "क्षामता गरिमा कुक्षेः मूर्च्छा च्छर्दिररोचकम्। जृम्भा प्रसेकः सदनं रोमराज्याः प्रकाशनम्" इति ॥ २ ॥

418

तदाननं मृत्सुरभि क्षितीश्वरो
रहस्युपाघ्राय न तृप्तिमाययौ ।
करीव सिक्तं पृषतैः पयोमुचां
शुचिव्यपाये वनराजिपल्वलम् ॥ ३ ॥

दिवं मरुत्वानिव (२) भोक्ष्यते भुवं
दिगन्तविश्रान्तरथो हि तत्सुतः ।

तदिति । क्षितीश्वरः रहसि मृत्सुरभि मृदा (२) सुगन्धि तस्याः आननं तदाननं सुदक्षिणामुखम् उपाघ्राय तृप्तिं न आययौ । कः कमिव, शुचिव्यपाये ग्रीष्मावसाने । "शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोः सिते । ग्रीष्मे हुतवहेऽपि स्यात् उपधौ शुद्धमन्त्रिणि" ॥ इति विश्वः । पयोमुचां मेघानां पृषतैः बिन्दुभिः । "पृषन्ति बिन्दुपृषताः" इत्यमरः । सिक्तम् उक्षितं वनराज्याः पल्वलम् उपाघ्राय करी गजः इव । अत्र करिवनराजिपल्वलानां कान्तकामिनीवदनसमाधिरनुसन्धेयः । गर्भिणीनां मृद्भक्षणं लोकप्रसिद्धमेव । एतेन दौहृदाख्यं गर्भलक्षणमुक्तम् ॥ ३ ॥

दोहदलक्षणे गर्भलक्षणे लिङ्गान्तरमुपक्षिपते, दिवमिति । हि यस्मात् दिगन्तविश्रान्तरथः चक्रवर्ती तस्याः सुतः तत्सुतः, मरुत्वान् इन्द्रः । "इन्द्रो मरुत्वान् मघवा" इत्यमरः । दिवं स्वर्गम् इव भुवं भोक्ष्यते । भुजोऽनवने इत्यात्मनेपदम् । अतः प्रथमं

(१) मरुतः देवाः प्राशस्त्येन सन्ति यस्य इति मरुत्वान् मरुत्पतिर्देवराजः ।
(२) मृदा कारणेन सुरभि । यद्वा मृदाधारविभक्तिमत्वात् सुगन्धि ।

अंतोऽभिलाषे प्रथमं तथाविधे
मनो ववन्धान्यरसान् विलङ्घ्य सा ॥ ४ ॥
न मे ह्रिया शंसति किञ्चिदीप्सितं
स्पृहावती वस्तुषु केषु मागधी ।
इति स्म पृच्छत्यनुवेलमादृतः
प्रियासखीरुत्तरकोशलेश्वरः (१) ॥ ५ ॥

सा सुदक्षिणा तथाविधे मृद्विकारे मृद्रूपे अभिलष्यते इति अभिलाषः भोग्यवस्तु तस्मिन् कर्म्मणि घञ्प्रत्ययः । रस्यन्ते स्वाद्यन्ते इति रसाः भोग्यार्थाः । अन्ये च ते रसाश्च तान् विलङ्घ्य विहाय मनः ववन्ध निदधौ इत्यर्थः । दोहदहेतुकस्य मृद्भक्षणस्य पुत्रभूभोगसूचनार्थत्वमुत्प्रेक्ष्यते ॥ ४ ॥

नेति । मगधस्य राज्ञः अपत्यं स्त्री मागधी सुदक्षिणा । द्व्यञ्मगधकलिङ्गसूरमसादण् इत्यण्प्रत्ययः । ह्रिया किञ्चित्

(1) In more ancient times, the name was applied to the country on the banks of the Sarayu, of which Ajodhya was the capital. In the Mahabharata, several Kosalas are referred to. The Puranas place the Kosala amongst the people on the back of the Vindhya. This is owing perhaps to the country of Kosala being divided into two provinces, Northern Kosala and Southern Kosala. The former comprehended the districts, now included under Oude, and the latter extended as far as the Vindhya mountain. See Wilson's Vishnupurana p 190 note 79.
"कुशस्य कोशलाराज्यं पुरीचापि कुशस्थली । रम्या निवेशिता तेन विन्ध्यपर्वतसानुषु ॥
उत्तरकोशले राज्यं लवस्य च महात्मनः । श्रावस्ती लोकविख्याता, कुशवंशं निबोधत" ।
These two couplets from the Bayu purana, make the point clear. श्रावस्ती is called धर्मपत्तन being holy in the estimation of the Buddhists and nearly in the site of Fyzabad in Oude.

तदाननं मृत्सुरभि क्षितीश्वरो
रहस्युपाघ्राय न तृप्तिमाययौ ।
करीव सिक्तं पृषतैः पयोमुचां
शुचिव्यपाये वनराजिपल्वलम् ॥ ३ ॥
दिवं मरुत्वानिव (१) भोक्ष्यते भुवं
दिगन्तविश्रान्तरथो हि तत्सुतः ।

तदिति । क्षितीश्वरः रहसि मृत्सुरभि मृदा (२) सुगन्धि तस्याः आननं तदाननं सुदक्षिणामुखम् उपाघ्राय तृप्तिं न आययौ । कः कमिव, शुचिव्यपाये ग्रीष्मावसाने । "शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोः सिते । ग्रीष्मे हुतवहेऽपि स्यात् उपधौ शुद्धमन्त्रिणि" ॥ इति विश्वः । पयोमुचां मेघानां पृषतैः बिन्दुभिः । "पृषन्ति बिन्दुपृषताः" इत्यमरः । सिक्तम् उक्षितं वनराज्याः पल्वलम् उपाघ्राय करी गजः इव । अत्र करिवनराजिपल्वलानां कान्तकामिनीवदनसमाधिरनुसन्धेयः । गर्भिणीनां मृद्भक्षणं लोकप्रसिद्धमेव । एतेन दोहदाख्यं गर्भलक्षणमुक्तम् ॥ ३ ॥

दोहदलक्षणे मृद्भक्षणे हेत्वन्तरमुत्प्रेक्षते, दिवमिति । हि यस्मात् दिगन्तविश्रान्तरथः चक्रवर्ती तस्याः सुतः तत्सुतः, मरुत्वान् इन्द्रः । "इन्द्रो मरुत्वान् मघवा" इत्यमरः । दिवं स्वर्गम् इव भुवं भोक्ष्यते । भुजोऽनवने इत्यात्मनेपदम् । अतः प्रथमं

(१) मरुत: देवा: पाल्यत्वेन सन्ति अस्य इति मरुत्वान् मरुत्पतिर्देवराज: ।
(२) मृदा कारणेन सुरभि । मृदा गन्धवत्त्वगुणविकारात् सुगन्धि ।

अंतोऽभिलाषे प्रथमं तथाविधे
मनो बबन्धान्यरसान् विलङ्घ्य सा ॥ ४ ॥
न मे क्रिया शंसति किञ्चिदीप्सितं
स्पृहावती वस्तुषु केषु मागधी ।
इति स्म पृच्छत्यनुवेलमादृतः
प्रियासखीरुत्तरकोशलेश्वरः (१) ॥ ५ ॥

सा सुदक्षिणा तथाविधे भूविकारे मृद्रूपे अभिलष्यते इति अभिलाषः भोग्यवस्तु तस्मिन् कर्म्मणि घञ्प्रत्ययः। रस्यन्ते स्वाद्यन्ते इति रसाः भोग्यार्थाः। अन्ये च ते रसाश्च तान् विलङ्घ्य विहाय मनः बबन्ध निदधौ इत्यर्थः। दोहदहेतुकस्य मृद्भक्षणस्य पुत्रभूभोगसूचनार्थत्वमुत्प्रेक्ष्यते ॥ ४ ॥

नेति। मगधस्य राज्ञः अपत्यं स्त्री मागधी सुदक्षिणा। द्व्यञ्मगधकलिङ्गशूरमसादण् इत्यण्प्रत्ययः। क्रिया किञ्चित्

(1) In more ancient times, the name was applied to the country on the banks of the Sarayu, of which Ajodhya was the capital. In the Mahabharata, several Kosalas are referred to. The Puranas place the Kosala amongst the people on the back of the Vindhya. This is owing perhaps to the country of Kosala being divided into two provinces, Northern Kosala and Southern Kosala. The former comprehended the districts, now included under Oude, and the latter extended as far as the Vindhya mountain. See Wilson's Vishnupurana p 190 note 79. "कुशस्य कोशलाराज्यं पुरीचापि कुशस्थली। रम्या निवेशिता तेन विन्ध्यपर्वतसानुषु॥ उत्तरकोशले राज्यं लवस्य च महात्मनः। श्रावस्ती लोकविख्याता, कुशवंशं निबोधत"। These two couplets from the Bayu purana, make the point clear. श्रावस्ती is called धर्मपत्तन being holy in the estimation of the Buddhists and nearly in the site of Fyzabad in Oude.

उपेत्य सा दोहददुःखशीलतां (१)
यदेव वव्रे तदपश्यदाहृतम्।
न हीष्टमस्य त्रिदिवेऽपि भूपते-
रभूदनासाद्यमधिज्यधन्वनः॥ ६॥

किमपि ईप्सितम् इष्टं मे मह्यं न शंसति न आचष्टे, केषु वस्तुषु स्पृहावती इति अनुवेलम् अनुक्षणम् आदृतः (२) आदृतवान्, कर्त्तरि क्तः। "आदृतौ सादरार्चितौ" इत्यमरः। प्रियायाः सखीः सहचरीः उत्तरकोशलेश्वरः दिलीपः पृच्छतिस्म पप्रच्छ। "लट् स्मे" इत्यनेन भूतार्थे लट्। सखीनां विश्रम्भभूमित्वात् इति भावः॥ ५॥

उपेत्येति। दोहदं गर्भिणीमनोरथः। "दोहदं दौर्हृदं श्रद्धा लालसञ्च समं स्मृतम्" इति हलायुधः। सा सुदक्षिणा दोहदेन गर्भिणीमनोरथेन दुःखशीलतां दुःखस्वभावताम् उपेत्य प्राप्य यत् वस्तु वव्रे आचकाङ्क्ष तत् आहृतम् आनीतं, भर्त्रा इति शेषः, अपश्यत् एव अलभत इत्यर्थः। कुतः हि यस्मात् अस्य भूपतेः त्रिदिवे अपि स्वर्गे अपि इष्टं वस्तु अनासाद्यम् अनवाप्यं न अभूत्। किं याञ्चया नेत्याह, अधिज्यधन्वन इति। न हि वीरपत्नीनामलभ्यं नाम किञ्चिदस्ति इति भावः। अथ

(१) दौर्हं चाकर्षं ददातीति दोहदः। इति वाचस्पतिः।
The word is a Prakrita form of दौर्हृद। See William's Dic.

(२) आदृत, स्मृत कर्म च अविवक्षातः अकर्मकः आद्रियतेः कर्त्तरि क्त। यद्वा आदृतमिति भावे क्तः, ततः अर्श आदित्वादच्स्वार्थे अप्रत्ययः।

क्रमेण निस्तीर्य्य च दोहदव्यथां
प्रचीयमानावयवा रराज सा ।
पुराणपत्रापगमादनन्तरं
लतेव सन्नद्धमनोज्ञपल्लवा ॥ ७ ॥

दिनेषु गच्छत्सु नितान्तपीवरं
तदीयमानीलमुखं स्तनद्वयम् ।
तिरश्चकार भ्रमराभिलीनयोः(१)
सुजातयोः पङ्कजकोशयोः श्रियम् ॥ ८ ॥

वाभटः, "भादयोफी विदाहोऽन्ते यद्वा च विविधात्मिका" इति। एतच्च पत्नीमनोरथपूरणाकरणे दृष्टदोषसम्भवात्, न तु राज्ञः स्त्रीलौल्यात्। तदुक्तम्, "देयमप्यहितं तस्यै हिताय, हितमल्पकम्। श्रद्धाविघाते गर्भस्य विकृतिश्च्युतिरेव वा" ॥ अन्यत्र च, "दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात्" इति ॥ ६ ॥

क्रमेणेति। सा सुदक्षिणा क्रमेण दोहदव्यथाञ्च निस्तीर्य्य प्रचीयमानावयवा पुष्यमाणावयवा सती पुराणपत्राणाम् अपगमात् नाशात् अनन्तरं सन्नद्धाः सञ्जाताः प्रत्यग्रत्वात् मनोज्ञाः पल्लवाः यस्याः सा लता इव रराज ॥ ७ ॥

लक्षणान्तरं वर्णयति, दिनेष्विति। दिनेषु दोहददिवसेषु

(१) लीनाशीरेकशब्दकत्वात् समासान्तरं कल्पनीयं तथाहि,—भ्रमरौ अभिलीनौ ययो स्ताहशयोः। भ्रमराभ्यां पङ्कजभ्रमौ नाभिभ्यामौ, किन्तु तौ पङ्कजमलयोरुपरि समासीनौ इति टीकाकारकृतं व्याख्यानं न समीचीनतया प्रतिभाति।

निधानगर्भामिव सागराम्बरां
शमीमिवाभ्यन्तरलीनपावकाम्(१) ।
नदीमिवान्तःसलिलां सरस्वतीं(२)
नृपः ससत्त्वां महिषीममन्यत ॥ ९ ॥

गच्छतु नितान्तपीवरम् अतिस्थूलम् आ समन्तात् नीले मुखे चूचुके यस्य तत् तदीयं स्तनद्वयं भ्रमरैः अभिलीनयोः अभिव्याप्तयोः सुजातयोः सुन्दरयोः पङ्कजकोशयोः पद्ममुकुलयोः श्रियं तिरश्चकार । अत्र वाभटः, "अश्लिष्टता (३) स्तनौ पीनौ श्वेताल्पौ कृष्णचूचुकौ" इति ॥ ८ ॥

निधानेति । नृपः ससत्त्वाम् आपन्नसत्त्वां गर्भिणीम् इत्यर्थः । "आपन्नसत्त्वा स्याद् गुर्व्विण्यन्तर्वत्नी च गर्भिणी" इत्यमरः । महिषीं निधानं निधिः गर्भे यस्याः तां सागराम्बरां समुद्रवसनां भूमिमिव इत्यर्थः । "भूतधात्री रत्नगर्भा विपुला सागराम्बरा" इति कोषः । अभ्यन्तरे लीनः पावकः यस्याः तां शमीम् इव । शमीतरौ वह्निरस्ति इत्यत्र लिङ्गं शमीगर्भादग्निं जनयतीति । अन्तःसलिलाम् अन्तर्गतजलां सरस्वतीं नदीम् इव

(१) यज्ञादिसाधनाय हि शमीकाष्ठात् घर्षणेन अग्निरुत्पाद्यते ।

(२) "सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरं । तं ब्रह्मनिर्मितं देशं ब्रह्मावर्त्तं विदुर्बुधाः" इत्येव निर्दिष्टा नदी । "म्लेच्छदेशेषु सा यस्मादीय भूयः पुण्यप्रदेशेषूद्भवतीति पुराणवार्त्ता" इति मल्लिः । The modern Sarasvati or Kagar near Thanesvara which loses itself in the sandy desert.

(३) अश्लिष्टता अप्रविरलत्वं ।

प्रियानुरागस्य मनःसमुन्नतेः
भुजार्ज्जितानाञ्च दिगन्तसम्पदाम्।
यथाक्रमं पुंसवनादिकाः(१) क्रियाः
धृतेश्च धीरः सदृशीर्व्यधत्त सः॥ १०॥

अमन्यत। एतेन गर्भस्य भाग्यवत्त्वतेजस्वित्वपावनत्वानि विवक्षितानि॥ ९॥

प्रियेति। धीरः स राजा प्रियायाम् अनुरागस्य स्नेहस्य मनसः समुन्नतेः औदार्य्यस्य भुजेन भुजबलेन करेण वा अर्ज्जितानाम् न तु वाणिज्यादिना दिगन्तेषु सम्पदां धृतेः पुत्रो मे भविष्यतीति सन्तोषस्य च। "धृतिर्योगान्तरे धैर्य्ये धारणाध्वरतुष्टिषु" इति विश्वः। सदृशीः अनुरूपाः पुमान् सूयते अनेनेति पुंसवनं तत् आदिर्यासां ताः क्रियाः यथाक्रमं क्रममनतिक्रम्य व्यधत्त कृतवान्। आदिशब्देन अनवलोभनसीमन्तोन्नयनी गृह्येते। अत्र मासि द्वितीये तृतीये वा पुंसवनं, यदाह "पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्"(२) इति पारस्करः। "चतुर्थेऽनवलोभनम्"

---

(१) "यदि नाधीयात्, तृतीये गर्भमासे तिष्येणोपयितायाः (गर्भिण्याः), सरूपवत्सायां गो र्दधनि द्वौ द्वौ माषौ यवञ्च दधिप्रसृतेन (प्रसृताञ्जलिना) प्राशयेत्" इति पुंसवनं। अथास्ये मण्डलागारच्छायायां दक्षिणस्यां नासिकायां अजितामोषधीं (दुर्व्वां) नस्तःकरोतीति अनवलोभनं। नस्तःकरणं नासिकायां रसनिषेचनं। पुमांस्तु सन् येन नावलुप्यते तदनवलोभनं। वर्णविकारो द्रष्टव्यः। पृषोदरादित्वादिति ना' ख्यणः। आश्वलायनव्याख्यायाम्। एतद्विस्तारस्तु गृह्यसूत्रे द्रष्टव्यः।

(२) पुंसा नक्षत्रेण तिष्यहस्तश्रवणादिना।

सुरेन्द्रमात्राश्रितगर्भगौरवात्

प्रयत्नमुक्तासनया गृहागतः ।

तयोपचाराञ्जलिखिन्नहस्तया

ननन्द पारिप्लवनेत्रया नृपः ॥ ११ ॥

कुमारभृत्याकुशलैरनुष्ठिते

भिषग्भिराप्तैरथ गर्भभर्मणि ।

इति आश्वलायनः । "षष्ठेऽष्टमे वा सीमन्तः"(१) इति याज्ञवल्क्यः ॥ १० ॥

सुरेन्द्रमात्रेति । गृहागतः नृपः सुरेन्द्राणां लोकपालानां मात्राभिः अंशैः आश्रितस्य अनुप्रविष्टस्य गर्भस्य गौरवात् भारात् प्रयत्नेन मुक्तासनया आसनादुत्थितया इत्यर्थः । उपचारस्य अञ्जलौ अञ्जलिकरणे खिन्नहस्तया पारिप्लवनेत्रया तरलाक्ष्या । "चञ्चलं तरलं चैव पारिप्लवपरिप्लवे" इत्यमरः । तया सुदक्षिणया ननन्द । सुरेन्द्रमात्राश्रितेत्यत्र मनुः, "अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः" इति ॥ ११ ॥

कुमारेति । अथ कुमारभृत्या बालचिकित्सा । संज्ञायां समजनिषदेत्यादिना क्यप् । तस्यां कुशलैः क्षतिभिः । "क्षती कुशलः" इत्यमरः । आप्तैः हितैः भिषग्भिः वैद्यैः । "भिषग्वैद्यौ

---

(१) "अथास्यै युग्मेन शलाटुग्लप्सेन त्रेण्या शलल्या त्रिभिश्च कुशपिञ्जूलैरूर्ध्वं सीमन्तं व्यूहति भूर्भुवः स्वरोमिति त्रिः"। शलाटुग्लप्सेन तरुणफलसंघातेन, शलल्या शल्लकीशीला एतेनिकोक्तीः ललाटकेशयोः सन्धिमारभ्य ऊर्द्ध्वं सीमन्तं व्यूहति, मध्ये केशान् प्रदेशात् केशान् पृथक् करोतीत्यर्थः इति नारायणः । सीमन्त. गर्भाधिके षष्ठे अष्टमे वा मासि कर्तव्य. संस्कारभेदः सीमन्तकेशान् शल्लकीशीला पृथक् क्रियते यस्मिन्निति संस्कारस्य सीमन्त इति संज्ञा ।

पतिः प्रतीतः प्रसवोन्मुखीं प्रियां
ददर्श काले दिवमभ्रितामिव ॥ १२ ॥
ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैः
असूर्य्यगैः सूचितभाग्यसम्पदम्(१)।

चिकित्सके" इत्यमरः। गर्भस्य भर्म्मणि भरणे। "भरणे पोषणे भर्म्म" इति हैमः। "भृतिर्भर्म्म" इति शाश्वतः। भृञो मनिच्प्रत्ययः। अनुष्ठिते कृते सति काले दशमे मासि अन्यत्र ग्रीष्मावसाने प्रसवस्य गर्भमोचनस्य उन्मुखीम् आसन्नप्रसवाम् इत्यर्थः। "स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने" इत्यमरः। प्रियां भार्य्याम् अभ्राणि अस्याः सञ्जातानि अभ्रिता ताम्। "तदस्य सञ्जातं तारकादिभ्यइतच्" इति इतच्प्रत्ययः। दिवम् इव पतिः, भर्त्ता प्रतीतः हृष्टः सन्। "ख्याते हृष्टे प्रतीतः" इत्यमरः। ददर्श दृष्टवान्। गर्भकर्म्मणीति पाठे गर्भाधान-प्रतीतावौचित्यभङ्गः ॥ १२ ॥

ग्रहैरिति। ततः शच्या इन्द्राण्या समा। "पुलोमजा शचीन्द्राणी" इत्यमरः। सा सुदक्षिणा समये प्रसूतिकाले सति दशमे मासि इत्यर्थः। "दशमे मासि जायते" इति श्रुतेः। उच्चसंश्रयैः उच्चसंस्थैः तुङ्गस्थानगैः असूर्य्यगैः अनस्तमितैः कैश्चित् यथासम्भवं पञ्चभिः ग्रहैः सूचिता भाग्यसम्पत् यस्य तं पुत्रं त्रीणि प्रभावमन्त्रोत्साहात्मकानि साधनानि उत्पादकानि यस्याः

(१) एकेन (एकैव) सुखी द्वाभ्यां भोगिभिरस्त्रिभिः पतुरस्त्यचतुर्भिर्नृपः पञ्चभिर्देवतुल्यः इति दिनकरः।

असूत पुत्रं समये शचीसमा
त्रिसाधना शक्तिरिवार्थमक्षयम्॥ १३॥

सा त्रिसाधना शक्तिः। "शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः" इत्यमरः। अक्षयम् अर्थम् इव असूत। "षुङ् प्राणिगर्भविमोचने" इत्यात्मनेपदिषु पठ्यते, तस्माद्धातोः कर्त्तरि लङ्। अत्रेदमनुसन्धेयम्। "अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः। दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः"। इति सूर्य्यादीनां सप्तानां ग्रहाणां मेषवृषभाद्यो राशयः श्लोकोक्तक्रमविशिष्टाः, उच्चस्थानानि। स्वस्वतुङ्गापेक्षया सप्तमस्थानानि च नीचानि। तत्रोच्चेष्वपि दशमाद्योराशित्रिंशांशाः यथाक्रमम् उच्चेषु परमोच्चा नीचेषु परमनीचा इति जातकश्लोकार्थः। अत्रांशस्त्रिंशो भागः। यथाह नारदः,"त्रिंशद्भागात्मकं लग्नम्" इति। सूर्य्यप्रत्यासत्तिग्रं हाणामस्तमयो नाम। तदुक्तं लघुजातके, "रविणास्तमयो योगो वियोगस्तूदयो भवेत्" इति ते च स्वोच्चस्थाः फलन्ति नास्तगा नापि नीचगाः। तदुक्तं राजमृगाङ्के, "स्वोच्चे पूर्णं स्वर्क्षे केऽर्द्धं सुहृद्भे पादं द्विड्भेऽल्पं शुभं खेचरेन्द्रः। नीचस्थायी नास्तगो वा न किञ्चित् पादं नूनं स्वत्रिकोणे ददाति॥" इति। तदिदमाह कविः, उच्चसंस्थैरसूर्य्यगैः इति च। एवं सति यस्य जन्मकाले पञ्चप्रभृतयो ग्रहाः स्वोच्चस्थाः स एव तुङ्गोभयति। तदुक्तं कूटस्थीये, "उत्कृष्टाः स्वोच्चस्थितैः प्रकटकार्य्या राजप्रतिरूपकाश्च राजानः। एकद्वित्रिचतुर्भिर्जायन्तेऽतः परं दिव्याः"इति तदिदमाह पञ्चभिरिति॥ १३॥

दिशः प्रसेदुर्मरुतो ववुः सुखाः
प्रदक्षिणार्च्चिर्हविरग्निराददे।
बभूव सर्व्वं शुभशंसि तत्क्षणं
भवो हि लोकाभ्युदयाय तादृशाम्॥ १४॥
अरिष्टशय्यां परितो विसारिणा
सुजन्मनस्तस्य निजेन तेजसा।
निशीथदीपाः सहसा हतत्विषः
बभूवुरालेख्यसमर्पिता इव॥ १५॥

दिश इति। तत्क्षणं तस्मिन् क्षणे। "कालाध्वनोरत्यन्तसंयोगे द्वितीया।" दिशः प्रसेदुः प्रसन्नाः बभूवुः, मरुतः वाताः सुखाः(१) मनोहराः ववुः (वान्ति स्म), अग्निः प्रदक्षिणार्च्चिः(२) सन् हविः आददे स्वीचकार, इत्थं सर्व्वं शुभशंसि शुभसूचकं बभूव। तथाहि, तादृशां रघुप्रकाराणां भवः जन्म लोकाभ्युदयाय भवति इति शेषः, ततो देवा अपि सन्तुष्टाः इत्यर्थः॥ १४॥

अरिष्टेति। "अरिष्टं सूतिकागृहम्" इत्यमरः। अरिष्टे सूतिकागृहे शय्यां तल्पं परितः अभितः। "परितःसमया-निकषाहाप्रतियोगेषु दृश्यते" इति द्वितीया। विसारिणा सुजन्मनः शोभनोत्पत्तेः। "जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः" इत्यमरः। तस्य शिशोः निजेन नैसर्गिकेण तेजसा सहसा

(१) शैत्यसौरभ्यमान्द्यास्त्रगुणत्रययुक्ताः इति यावत्।

(२) भगतं दक्षिणं प्रदक्षिणं अर्च्चिः यस्य तथोक्तः।

जनाय शुद्धान्तचराय शंसते
कुमारजन्मामृतसम्मिताक्षरम्।
अदेयमासीत् त्रयमेव भूपतेः
शशिप्रभं छत्रमुभे च चामरे ॥ १६ ॥
निवातपद्मस्तिमितेन चक्षुषा
नृपस्य कान्तं पिबतः सुताननम्।

हृतत्विषः क्षीणकान्तयः निशीथदीपाः अर्धरात्रप्रदीपाः। "रात्र्याह्राहाः पुंसि" "अर्धरात्रनिशीथौ द्वौ" इत्यमरः। आलेख्यसमर्पिताः चित्रार्पिताः इव बभूवुः। निशीथशब्दो दीपानां प्रभावाधिक्यसम्भावनार्थः ॥ १५ ॥

जनायेति। भूपतेः दिलीपस्य अमृतसम्मिताक्षरम् अमृतसमानाक्षरम्। "सरूपसमसंमिताः" इत्याह दण्डी। कुमारजन्म पुत्रोत्पत्तिं शंसते कथयते शुद्धान्तचराय अन्तःपुरचारिणे जनाय त्रयम् एव अदेयम् आसीत्। किं तत् शशिप्रभम् उज्ज्वलं छत्रम्, उभे चामरे च। छत्रादीनां राज्ञः प्रधानाङ्गत्वात् इति भावः ॥ १६ ॥

निवातेति। निवातः निर्वातप्रदेशः। "निवातावाश्रयावातौ" इत्यमरः। तत्र यत् पद्मं तद्वत् स्तिमितेन निष्पन्देन चक्षुषा नेत्रेण कान्तं सुन्दरं सुताननं पुत्रमुखं पिबतः तृष्णया पश्यतः नृपस्य गुरुः उत्कटः महान् कर्त्ता इन्दुदर्शनात् गुरुः महोदधेः पूरः जलौघः इव आत्मनि शरीरे न प्रबभूय स्वात्

महोदधेः पूर इवेन्दुदर्शनात्
गुरुः प्रहर्षः प्रबभूव (१) नात्मनि ॥ १७ ॥
स जातकर्म्मण्यखिले(२) तपस्विना
तपोवनादेत्य पुरोधसा कृते।
दिलीपसूनुर्म्मणिराकरोद्भवः
प्रयुक्तसंस्कार इवाधिकं बभौ ॥ १८ ॥

न शशाक, अन्तः न माति स्म इति यावत्, नह्यल्पाधारे अधिकं मीयते इति भावः। यद्वा हर्षः आत्मनि स्वस्मिन् विषये न प्रबभूव आत्मानं नियन्तुं न शशाक किन्तु वहिर्निर्जगाम इत्यर्थः ॥ १७ ॥

स इति। स दिलीपसूनुः तपस्विना पुरोधसा पुरोहितेन "पुरोधास्तु पुरोहितः" इत्यमरः। ("पूर्व्वशब्दादसुप्रत्ययः पुरादेशश्च" इति ऋग्वेदव्याख्याने सायणाचार्य्यः।) वसिष्ठेन। तपस्वित्वात् तदनुष्ठितं कर्म्म सवीर्य्यं स्यात् इति भावः। तपोवनात् एत्य आगत्य अखिले समग्रे जातकर्म्मणि जातस्य कर्त्तव्यसंस्कारविशेषे कृते सति, प्रयुक्तः संस्कारः शाणोल्लेखनादिः यस्य सः तथोक्तः आकरोद्भवः खनिप्रभवः। "खनिः स्त्रियामाकरः स्यात्"

(१) Compare "भवत्सम्भावनोत्थाय परितोषाय मूर्च्छते। अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे।" कुमारसम्भवम्। ६ सर्गः।

(२) "कुमारं जातं पुरान्यैरालम्भात् सर्पिर्मधुनी हिरण्यनिकषं हिरण्येन" (समन्त्रं पिता) प्राशयेत्; ततस्तत् कर्णयोरुपनिधाय कुमारस्य मेधाजननार्थं सविद्दरमन्त्रमिमोकुमारादीन् प्रार्थयेत, ततश्च कुमारस्य अंसौ च हा "अश्मा भव परशुर्भव"

सुखश्रवा मङ्गलतूर्य्यनिस्वनाः
प्रमोदनृत्यैः सह वारयोषिताम्।
न केवलं सद्मनि मागधीपतेः
पथि व्यजृम्भन्त दिवौकसामपि(१) ॥ १९ ॥
न संयतस्तस्य बभूव रक्षितुः
विसर्ज्जयेद् यं सुतजन्महर्षितः (२)

इत्यमरः। मणिः इव, अधिकं बभौ (अत्यर्थं दिदीपे) वसिष्ठमन्त्र-प्रभावात् तेजिष्ठोऽभूत् इत्यर्थः। अत्र मनुः, "प्राङ्नाभिवर्द्धनात् पुंसो जातकर्म्म विधीयते" इति ॥ १८ ॥

सुखश्रवा इति। सुखः सुखकरः श्रवः श्रवणं येषां ते सुखश्रवाः श्रुतिसुखाः इत्यर्थः मङ्गलतूर्य्यनिस्वना मङ्गलवाद्य-ध्वनयः वारयोषितां वेश्यानाम्। "वारस्त्री गणिका वेश्या रूपा-जीवा" इत्यमरः। प्रमोदनृत्यैः हर्षनर्त्तनैः सह मागधीपतेः दिलीपस्य सद्मनि केवलं गृहे एव न व्यजृम्भन्त, किन्तु द्यौः(१) ओकः येषां ते दिवौकसः देवाः। पृषोदरादित्वात् साधु। तेषां पथि आकाशेऽपि व्यजृम्भन्त। तस्य देवांशत्वात् देवोप-कारित्वाच्च देवदुन्दुभयोऽपि नेदुः इति भावः ॥ १९ ॥

नेति। रक्षितुः सम्यक्पालनशीलस्य तस्य दिलीपस्य अतएव

(१) यद्वा दिवं स्वर्गं, ओकः गृहं (वासस्थानं) येषामिति दिवौकसाम्। दिवं स्वर्गेऽ-न्तरीक्षे च इति विश्वप्रकाशनिर्देशात् अकारान्तदिवशब्दस्य सम्भवात् पृषोदरादित्वात् निपातनं गौरवमित्यनुसन्धेयम्।

(२) "युवराजाभिषेके च परचक्रावमर्द्दने। पुत्रजन्मनि वा मोक्षो बद्धस्य हि विधी-यते" इति वल्लभः।

ऋणाभिधानात् स्वयमेव केवलं
तदा पितॄणां मुमुचे स बन्धनात् ॥ २० ॥
श्रुतस्य यायादयमन्तमर्भकः
तथा परेषां युधि चेति पार्थिवः ।
अवेक्ष्य धातोर्गमनार्थमर्थवित्
चकार नाम्ना रघुमात्मसम्भवम्(१) ॥ २१ ॥

चौराद्यभावात् संयतः बद्धः (कोऽपि) न बभूव न अभूत्। किं तेनात आह, विसर्जयेदिति। सुतजन्मना हर्षितः तोषितः सन् स यं बद्धं विसर्जयेत् विमोचयेत्। किन्तु स राजा तदा पितॄणाम् ऋणाभिधानात् बन्धनात् केवलम् एकं यथा तथा स्वयम् एव एक एव इत्यर्थः। "केवलः कृत्स्न एकश्च केवलश्चावधारितः" इति शाश्वतः। मुमुचे। कर्म्मकर्त्तरि लिट्। स्वयमेव मुक्तः इत्यर्थः। अस्मिन्नर्थे "एष वा अनृणो यः पुत्री" इति श्रुतिः प्रमाणम् ॥ २० ॥

श्रुतस्येति। अर्थवित् शब्दार्थज्ञः पार्थिवः पृथिवीश्वरः दिलीपः अयम् अर्भकः बालकः श्रुतस्य शास्त्रस्य अन्तं पारं यायात्, तथा युधि परेषां शत्रूणाम् अन्तं पारञ्च यायात् यातु गच्छ्यात् इत्यर्थः। शकि लिङ् चेति शक्यर्थे लिङ्। इति हेतोः, धातोः अघि वघि लघि गत्यर्थाः इति लघिधातोः गमनार्थम्

(१) नामकरणप्रकारश्च शास्त्रान्तरानुक्तेः जातकर्मानन्तरं कार्य्यमिति है। दशमे तु शास्त्रान्तरोक्तकालविशेषं स्मराद्वः। यथा च मनुना "नामधेयं दशम्यां तु द्वादश्यां वापि कारयेत्। पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते"। इति नारायणः।

पितुः प्रयत्नात् स समग्रसम्पदः
शुभैः (१)शरीरावयवैर्दिने दिने।
पुपोष वृद्धिं हरिदश्वदीधितेः
अनुप्रवेशादिव (२) बालचन्द्रमाः ॥ २२ ॥

अर्थम् अर्थवित्त्वात् अवेक्ष्य आलोक्य आत्मसम्भवं पुत्रं नाम्ना रघुं चकार। लङ्घिवह्योर्नलोपश्चेत्युप्रत्यये बालमूललघुलमङ्गुलीनां वा लोरत्वमापद्यते इति वैकल्पिके रेफादेशे रघुरिति रूपं सिद्धम्। अत्र शङ्खः, "अशौचे तु व्यतिक्रान्ते नामकर्म विधीयते" इति ॥ २१ ॥

पितुरिति। स रघुः समग्रसम्पदः पूर्णलक्ष्मीकस्य पितुः दिलीपस्य प्रयत्नात् शुभैः मनोहरैः शरीरावयवैः हरिदश्वदीधितेः सूर्यरश्मेः। "भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः" इत्यमरः। अनुप्रवेशात् बालचन्द्रमाः इव दिने दिने प्रतिदिनम्। नित्यवीप्सयोरिति द्विवचनम्। वृद्धिं पुपोष। अत्र वराहसंहितावचनम्, "सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम्। क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः ॥" इति ॥ २२ ॥

(१) शोभन्ते ये ते शुभाः मनोज्ञैः। कर्त्तरि कः।

(२) श्रीसूर्यस्य सुषुम्ना नाम कला, तस्याः प्रवेशात्—चन्द्रमाः किल सूर्यस्य सुषुम्ना नाम नाडिकामनुप्रविश्य वर्द्धते इति वल्लभः। "सुषुम्ना सूर्यरश्मिस्तु दक्षिणा राशि मिष्यम्। न्यग्भौमः प्रचारोऽस्य सुषुम्नः परिकीर्त्तितः। दक्षिणा राशिं चन्द्ररूपा" इति। See Wilson's V. Purana Vol.2.page 211.

उमावृषाङ्कौ शरजन्मना यथा
यथा जयन्तेन शचीपुरन्दरौ।
तथा नृपः सा च सुतेन मागधी
ननन्दतुस्तत्सदृशेन तत्समौ ॥ २३ ॥
रथाङ्गनाम्नोरिव भावबन्धनं (१)
बभूव यत् प्रेम परस्पराश्रयम्।

उमेति। उमावृषाङ्कौ पार्व्वतीवृषभध्वजौ शरजन्मना कार्त्तिकेयेन। "कार्त्तिकेयो महासेनः शरजन्मा षडाननः" इत्यमरः। यथा ननन्दतुः, शचीपुरन्दरौ जयन्तेन पाकशासनिना जयन्ताख्येन सुतेन। "जयन्तः पाकशासनिः" इत्यमरः। यथा ननन्दतुः, तथा तत्समौ ताभ्याम् उमावृषाङ्काभ्यां शचीपुरन्दराभ्यां च समौ समानौ सा मागधी नृपश्च तत्सदृशेन ताभ्यां कुमार-जयन्ताभ्यां सदृशेन सुतेन ननन्दतुः। मागधी प्राक् व्याख्याता ॥ २३ ॥

रथाङ्गेति। रथाङ्गनाम्नी च रथाङ्गनामा च रथाङ्गनामानौ चक्रवाकौ। पुमान् स्त्रियेत्येकशेषः तयोः इव, तयोः दम्पत्योः भावबन्धनं हृदयाकर्षकं परस्पराश्रयम् अन्योन्यविषयं यत् प्रेम बभूव तत् एकेन केवलेन ताभ्याम् अन्येन वा। "एके मुख्यान्यकेवलाः" इत्यमरः। सुतेन विभक्तम् अपि कृतविभागम्

(१) चेतोऽभिबन्धनमिति पाठः।

विभक्तमप्येकसुतेन तत् तयोः
परस्परस्योपरि पर्य्यचीयत ॥ २४ ॥
उवाच धात्र्या प्रथमोदितं वचः
ययौ तदीयामवलम्ब्य चाङ्गुलिम् ।
अभूच्च नम्रः प्रणिपातशिक्षया
पितुर्मुदं तेन ततान सोऽर्भकः ॥ २५ ॥
तमङ्कमारोप्य शरीरयोगजैः (१)
सुखैर्निषिञ्चन्तमिवामृतं त्वचि ।

अपि परस्परस्योपरि पर्य्यचीयत वव्रधे । कर्म्मकर्त्तरि लङ् । अक्षविमत्वात् स्वयमेव उपचितम् इत्यर्थः । यदेकाकारं वस्तु तदाधारद्वये विभज्यमानं हीयते, अत्र तु तयोः प्रागेकैककर्त्तृकर्मैकैकविषयं प्रेम सम्प्रति द्वितीयविषयलाभेऽपि नाहीयत प्रत्युतोपचितमेवाभूत् इति भावः ॥ २४ ॥

उवाचेति । सः अर्भकः शिशुः । "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः । धात्र्या उपमात्रा । "धात्री जनन्यामलकीवसुमत्युपमातृषु" इति विश्वः । प्रथमम् उदितम् उपदिष्टं वचः उवाच, तदीयाम् अङ्गुलिम् अवलम्ब्य ययौ च, प्रणिपातस्य शिक्षया उपदेशेन नम्रः अभूत् च, इति यत् तेन पितुः मुदं ततान ॥ २५ ॥

तमिति । शरीरयोगजैः सुखैः त्वचि त्वगिन्द्रिये अमृतं

(१) शरीरस्य [illegible]

उपान्तसंमीलितलोचनो नृपः (१)
चिरात् सुतस्पर्शरसज्ञतां ययौ ॥ २६ ॥
अमंस्त चानेन परार्द्ध्यजन्मना
स्थितेरभेत्ता स्थितिमन्तमन्वयम् ।
स्वमूर्त्तिभेदेन (२) गुणाग्र्यवर्त्तिना
पतिः प्रजानामिव सर्गमात्मनः ॥ २७ ॥

निषिञ्चन्तं वर्षन्तम् इव तं पुत्रम् अङ्कम् आरोप्य मुदाविर्भावात् उपान्तयोः प्रान्तयोः सम्मीलितलोचनः सन् नृपः चिरात् सुतस्पर्शरसज्ञतां ययौ। रसः स्वादः ॥ २६ ॥

अमंस्तेति। स्थितेः अभेत्ता, मर्य्यादापालकः सः नृपः परार्द्ध्यजन्मना उत्कृष्टजन्मना अनेन रघुणा अन्वयं वंशं, प्रजानां पतिः ब्रह्मा, गुणाः सत्त्वादयः तेषु अग्र्ये ण मुख्येन सत्त्वेन वर्त्तते व्याप्रियते इति गुणाग्र्यवर्त्ती तेन स्वस्य मूर्त्तिभेदेन अवतारविशेषेण विष्णुना आत्मनः सर्गं सृष्टिम् इव, स्थितिमन्तं

(१) अतिशयितसुखसंवेदनया नेत्रान्तौ निमील्येते इति प्रसिद्धिः ; यद्वा नेत्रनिमीलनेन बाह्यवस्तूनामदर्शनात् तादात्म्यस्य परा काष्ठा सूच्यते। यथा कुमारसम्भवे "तौ दम्पती त्रिः परिणीय वह्निमन्योन्यसंस्पर्शनिमीलिताक्षौ। स कारयामास वधूं पुरोधास्तस्मिन् समिद्धार्चिषि लाजमोक्षम्" ॥

(२) "ब्रह्मत्वे सृजते लोकान् विष्णुत्वे पालयत्यपि। रुद्रत्वे संहरत्येव, तिस्रोऽवस्थाः स्वयम्भुवः" इत्युक्तत्वात् मूर्त्तिभेद इति दिनकरः। पुत्रोऽपि स्वमूर्त्तिभेदः, "आत्मा वै जायते पुत्रः" इति श्रुतेः। तद्वत् नृपोऽपि प्रजानां जनानां पतिः पालयिता। तथा विष्णुरपि परार्द्ध्यजन्मा इति इतरेतरविशेषणानि पृथक् योज्यानि।

स(१)वृत्तचूलश्चलकाकपक्षकैः(२)
अमात्यपुत्रैः(३) सवयोभिरन्वितः।
लिपेर्यथावद् ग्रहणेन वाङ्मयं
नदीमुखेनेव समुद्रमाविशत् ॥ २८ ॥

प्रतिष्ठावत्त्वम् अमंस्त मन्यते स्म। मन्यतेः अनुदात्तत्वात् इट्प्रतिषेधः। अत्र उपमानोपमेययोरितरेतरविशेषणानीतरेतरत्र योज्यानि, तत्र रघुपक्षे गुणाः विद्याविनयादयः। "गुणोऽप्रधाने रूपादौ मौर्व्यां सूदे वृकोदरे। स्वम्बे सत्त्वादि-सन्ध्यादि-विद्यादि-हरितादिषु ॥" इति विश्वः। शेषं सुगमम् ॥ २७ ॥

स इति। "चूड़ा कार्य्या द्विजातीनां सर्वेषामेव धर्म्मतः। प्रथमेऽब्दे तृतीये वा कर्त्तव्या श्रुतिचोदनात् ॥" इति मनुस्मरणात् तृतीये वर्षे वृत्तचूलः निष्पन्नचूड़ाकर्म्मा सन्। डलयोरभेदः। स रघुः। "प्राप्ते तु पञ्चमे वर्षे विद्यारम्भञ्च कारयेत्" इति वचनात् पञ्चमे वर्षे चलकाकपक्षकैः चञ्चलशिखण्डकैः। "बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डकः" इति हलायुधः। सवयोभिः स्निग्धैः। "स्निग्धो वयस्यः सवयाः" इत्यमरः। अमात्यपुत्रैः अन्वितः सन् लिपेः पञ्चाशद्वर्णात्मिकायाः मातृकायाः यथावत् ग्रहणेन सम्यक् बोधेन उपायभूतेन वाङ्मयं शब्दजातं नद्याः मुखं द्वारम्। "मुखं तु वदने मुख्यारम्भे द्वारे-

(१) "तृतीये वर्षे चौलं, यथा कुलधर्मं वा" इति आश्वलायनः।

(२) काकस्य पक्षवत् शिरसः पार्श्वयोर्लम्बमानत्वात् शिखण्डकः काकपक्षशब्देनाभिधीयते।

(३) अमा सह, समीपे वा, भवतीति अमात्यः। अमाशब्दस्य सहार्थत्वं वेदे प्रसिद्धम्।

अथोपनीतं विधिवद् विपश्चितः
विनिन्युरेनं गुरवो गुरुप्रियम् ।
अवन्ध्ययत्नाश्च बभूवुरत्र ते
क्रिया हि वस्तूपहिता प्रसीदति(१) ॥ २९ ॥

धियः समग्रैः स गुणैरुदारधीः
क्रमाच्चतस्रश्चतुरर्णवोपमाः(२) ।

म्युपाययोः" इति यादवः, तेन कश्चित् मकरादिः समुद्रम् इव, आविशत् प्रविष्टः ज्ञातवान् इत्यर्थः ॥ २८ ॥

अथेति । "गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञः गर्भाच्च द्वादशे विशः ॥" इति मनुस्मरणात् अथ गर्भैकादशे अब्दे विधिवत् उपनीतं गुरुप्रियम् एनं रघुं विपश्चितः विद्वांसः गुरवः विनिन्युः शिक्षितवन्तः । ते गुरवः अत्र अस्मिन् रघौ अवन्ध्ययत्नाश्च बभूवुः । तथाहि, क्रिया शिक्षा । "क्रिया तु निष्कृतौ शिक्षा-चिकित्सोपायकर्म्मसु" इति यादवः । वस्तुनि पात्रभूते उपहिता प्रयुक्ता प्रसीदति फलति । "क्रिया हि द्रव्यं विनयति नाद्रव्यम्" इति कौटिल्यः ॥ २८ ॥

धिय इति । अत्र कामन्दकः, "शुश्रूषा श्रवणञ्चैव ग्रहणं धारणं तथा । ऊहापोहार्थविज्ञानं(३) तत्त्वज्ञानञ्च धीगुणाः ॥"

(१) क्रिया एवर्द्धितक्रिया आराधिता देवता इव प्रसीदति प्रसन्ना भूत्वा फलं ददाति ; प्रसन्ना भवति इति यावत् ।

(२) क्रमात् क्रममनुसृत्य इति ल्यबर्थे पञ्चमी ।

(३) आगममार्गविरोधिना तर्केण आगमार्थस्य संशयपूर्वपक्षनिरसनेन उत्तरपक्ष-स्थापनेन निर्णयकरणं ऊहोऽपोहश्च । वादिप्रयुक्तविरुद्धतर्कनिरासादिकः प्रतिवादिप्र-युक्तविरुद्धतर्कभेदः अपोहः ।

ततार विद्याः पवनातिपातिभिः
दिशो हरिद्भिर्हरितामिवेश्वरः ॥ ३० ॥
त्वचं स मेध्यां परिधाय रौरवीम्
अशिक्षतास्त्रं पितुरेव मन्त्रवत् ।
न केवलं तद्गुरुरेकपार्थिवः
क्षितावभूदेकधनुर्धरोऽपि सः ॥ ३१ ॥

इति "आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती । एता विद्याश्चतस्रस्तु लोकसंस्थितिहेतवः ॥" इति च । उदारधीः उत्कृष्टबुद्धिः स रघुः समग्रैः धियः गुणैः चत्वारः अर्णवाः उपमा यासां ताः चतुरर्णवोपमाः । "तद्धितार्थोत्तरपदसमाहारे च" इति उत्तरपदसमासः । चतस्रः विद्याः, हरितां दिशाम् ईश्वरः सूर्यः पवनातिपातिभिः(१) हरिद्भिः निजाश्वैः । "हरित् ककुभि वर्णे च तृणवाजिविशेषयोः" इति विश्वः । चतस्रः दिशः इव, क्रमात् ततार । चतुरर्णवोपमत्वं दिशामपि द्रष्टव्यम् ॥ ३० ॥

त्वचमिति । स रघुः, "कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः । वसीरन्नानुपूर्व्येण शाणक्षौमादिकानि च ॥" इति मनुस्मरणात् मेध्यां शुद्धां रौरवीं रुरुसम्बन्धिनीम् । "रुरु-र्महाकृष्णसारः" इति यादवः । त्वचं चर्म परिधाय वसित्वा मन्त्रवत् समन्त्रकम् अस्त्रम् आग्नेयादिकं पितुः एव उपाध्यायात् अशिक्षत अभ्यस्तवान् । "आख्यातोपयोगे" इत्यपादानसंज्ञा । पितुरेवेत्यवधारणमुपपादयति, नेति । तद्गुरुः

१ पवनं अतिपतन्ति वेगेन अतिक्रामन्तीति पवनातिपातिनः तैः ।

महोक्षतां वत्सतरः स्पृशन्निव
द्विपेन्द्रभावं कलभः श्रयन्निव ।
रघुः क्रमाद् यौवनभिन्नशैशवः
पुपोष गाम्भीर्य्यमनोहरं वपुः ॥ ३२ ॥

अथास्य गोदानविधेरनन्तरं
विवाहदीक्षां निरवर्त्तयद् गुरुः ।

एकः अद्वितीयः पार्थिवः केवलं पृथिवीश्वरः एव न अभूत् किन्तु क्षितौ स दिलीपः एकः धनुर्धरः अपि अभूत् ॥ ३१ ॥

महोक्षतामिति। रघुः क्रमात् यौवनेन भिन्नशैशवः निरस्त-शिशुभावः सन् महान् उक्षा महोक्षः महर्षभः। अचतुरादि-सूत्रेण निपातनात् अकारान्तत्वम्। तस्य भावः तत्ता, तां स्पृशन् गच्छन् वत्सतरः दम्यः इव। "दम्यवत्सतरौ समौ" इत्य-मरः। द्विपेन्द्रभावं महागजत्वं श्रयन् व्रजन् कलभः करिपोतः इव गाम्भीर्य्येण अचापलेन मनोहरं वपुः पुपोष ॥ ३२ ॥

अथेति। "गौर्नादित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः। स्त्री तु स्यादिशि भारत्यां भूमौ च सुरभावपि। पुंस्त्रियोः स्वर्गवज्राम्बु-रश्मिदृग्बाणलोमसु" इति केशवः। गावः लोमानि केशाः दीयन्ते खण्ड्यन्ते(१) अस्मिन् इति व्युत्पत्त्या गोदानं नाम ब्राह्मणादीनां षोड़शादिषु वर्षेषु कर्त्तव्यं केशान्ताख्यं कर्म्मोच्यते।

१ यद्वा गवां दानं इति गोदानं, "गोमिथुनं दक्षिणा" इति आश्वलायने उक्तत्वा-दिदमुक्तमिदम्। केशान्तस्य गन्धस्य विवक्षित: "केशान्तेषु गन्धमुपस्थानं कारयेदिति" श्रवणात्। See आश्वलायन १।१८।

नरेन्द्रकन्यास्तमवाप्य सत्पतिं
तमोनुदं दक्षसुता इवावभुः ॥ ३३ ॥
युवा युगव्यायतबाहुरंसलः
कपाटवक्षाः परिणद्धकन्धरः ।
वपुःप्रकर्षादजयद् गुरुं रघुः
तथापि नीचैर्विनयाददृश्यत ॥ ३४ ॥

तदुक्तं मनुना, "केशान्तः षोड़शे वर्षे ब्राह्मणस्य विधीयते। राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः॥" इति। अथ गुरुः पिता। "गुरुर्गीष्पतिपित्रादौ" इत्यमरः। अस्य गोदानविधेः अनन्तरं विवाहदीक्षां निरवर्त्तयत् कृतवान् इत्यर्थः। अथ नरेन्द्रकन्याः तं रघुं दक्षस्य सुताः रोहिण्यादयः(१) तमोनुदं चन्द्रम् इव। "तमोनुदोऽग्निचन्द्रार्काः" इति विश्वः। सत्पतिम् अवाप्य आबभुः। रघुरपि तमोनुत्। अत्र मनुः, "वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्। अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत्॥" इति ॥ ३३ ॥

सम्प्रति यौवराज्ययोग्यतामाह, युवेति। युवा, युगो नाम धुर्य्यस्कन्धगः सच्छिद्रमान्तो यानाङ्गभूतो दारुविशेषः। "यानाद्याङ्गे युगः पुंसि युगं युग्मे कृतादिषु" इत्यमरः। युगवत् व्यायतौ दीर्घौ बाहू यस्य सः। अंसौ अस्य स्तः इति अंसलः

(१) दक्षसुताः are the twentyseven तारकाः out of the whole number of fifty that are married to the moon according to our mythology. The twentyseven daughters of दक्षप्रजापति married to the moon are the twentyseven asterisms.

ततः प्रजानां चिरमात्मना धृतां
नितान्तगुर्वीं लघयिष्यता धुरम् ।
निसर्गसंस्कारविनीत इत्यसौ
नृपेण चक्रे युवराजशब्दभाक् ॥ ३५ ॥

बलवान् । मांसलश्चेति वृत्तिकारः । "बलवान् मांसलोंऽसलः" इत्यमरः । "वत्सांसाभ्यां कामबले" इति लच्प्रत्ययः । कपाटवक्षाः परिणद्धकन्धरः विशालग्रीवः । "परिणाहो विशालता" इत्यमरः । रघुः वपुषः प्रकर्षात् आधिक्यात् यौवनकृतात् गुरुं पितरम् अजयत् तथापि विनयात् नम्रत्वेन नीचैः अल्पकः अदृश्यत । अनौद्धत्यञ्च विवक्षितम् ॥ ३४ ॥

सम्प्रति तस्य यौवराज्यमाह, तत इति । ततः आत्मना चिरं धृतां नितान्तगुर्वीम् । "वोतो गुणवचनात्" इति ङीप् । प्रजानां धुरं पालनप्रयासं लघयिष्यता लघुं करिष्यता । तत्करोति तदाचष्टे इति लघुशब्दात् णिच्, ततः "लृटः सद्वा"(१) इति शतृप्रत्ययः । नृपेण दिलीपेन असौ रघुः निसर्गेण स्वभावेन संस्कारेण शास्त्राभ्यासजनितवासनया च विनीतः नम्रः इति हेतोः युवराजः इति शब्दं भजतीति तथोक्तः । भजोण्विरिति ण्विप्रत्ययः । चक्रे कृतः । "द्विविधो विनयः स्वाभाविकः कृत्रिमश्च" इति कौटिल्यः । तदुभयसम्पन्नत्वात् पुत्रं युवराजं चकार इत्यर्थः । अत्र कामन्दकः, "विनयोपग्रहान् भूत्यै कुर्व्वीत नृपतिः सुतान् । अविनीतकुमारं हि कुलमाशु विशीर्य्यते । विनीतमौरसं पुत्रं यौवराज्येऽभिषेचयेत्" ॥ ३५ ॥

(१) स्यस्मानशौ लृशेषे च ।

नरेन्द्रमूलायतनादनन्तरं
तदास्पदं श्रीर्युवराजसंज्ञितम्।
अगच्छदंशेन गुणाभिलाषिणी
नवावतारं कमलादिवोत्पलम् ॥ ३६ ॥

विभावसुः सारथिनेव वायुना
घनव्यपायेन गभस्तिमानिव।
बभूव तेनातितरां सुदुःसहः
कटप्रभेदेन करीव पार्थिवः ॥ ३७ ॥

नरेन्द्रेति। गुणान् विनयादीन् सौरभ्यादीन् च अभिलषतीति गुणाभिलाषिणी श्रीः राज्यलक्ष्मीः पद्माश्रया च नरेन्द्रः दिलीपः एव मूलायतनं प्रधानस्थानं तस्मात् अपादानात् अनन्तरं सन्निहितं युवराजः इति संज्ञा अस्य सञ्जाता युवराजसंज्ञितम्। तारकादित्वात् इतच् प्रत्ययः। आत्मनः पदं स्थानम् आस्पदम्। आस्पदं प्रतिष्ठायामिति निपातः। स रघुः इति आस्पदं तथास्पदं कमलात् चिरोत्पन्नात् नवावतारम् अचिरोत्पन्नम् उत्पलम् इव अंशेन अगच्छत्। स्त्रियो हि यूनि रज्यन्ते इति भावः ॥ ३६ ॥

विभावसुरिति। सारथिना सहायभूतेन। एतद्विशेषणमुत्तरवाक्येष्वपि अनुषञ्जनीयम्। वायुना विभावसुः अग्निः इव। "सूर्यवह्नी विभावसू" इत्यमरः। घनव्यपायेन(१) सार-

१ घनानां व्यपायो यस्मिन् तदीशेन शरत्कालेन इत्यर्थः।

नियुज्य तं होमतुरङ्गरचणे
धनुर्धरं राजसुतैरनुद्रुतम्।
अपूर्णमेकेन शतक्रतूपमः
शतं क्रतूनामपविघ्नमाप सः॥ ३८॥

घिना गभस्तिमान् सूर्यः इव, कटः गण्डः, "गण्डः कटो मदो दानम्" इत्यमरः। तस्य प्रभेदः स्फुटनं मदोदयः इत्यर्थः तेन करी इव, पार्थिवः दिलीपः तेन रघुणा अतितराम् अत्यन्तं सुदुःसहः सुष्टु असह्यः बभूव॥ ३७॥

नियुज्येति। शतक्रतुः इन्द्रः उपमा यस्य सः शतक्रतूपमः स दिलीपः "शतं वै तुल्या राजपुत्रा देवा आशापालाः" इत्यादिश्रुत्या। राजसुतैः अनुद्रुतम् अनुगतं धनुर्धरं तं रघुं होमतुरङ्गरचणे नियुज्य एकेन क्रतुना अपूर्णम् एकोनम् क्रतूनाम् अश्वमेधानां(१) शतम् अपविघ्नम् अपगतविघ्नं यथा तथा आप॥३८॥

(1) By the Asvamedha, a Raja was popularly supposed to have asserted his sovereignty over the whole earth; and by the successful performance of a hundred Asvamedhas, it was believed that a mortal Raja would at once become the ruler of the universe and the sovereign of the gods. This accounts for the myth, which represents the inveterate enmity of Indra to those, who attempted to perform a hundred Asvamemedhas. The horse was permitted to wander for one year into whatever territory, it pleased. Its entrance into foreign Raj, which was left entirely to chance, was virtually a challenge to the Raja of that country, who was bound to carry away the horse and offer battle; and when defeated, to restore it and swell the army of the invader. At the end of the year, the horse would be brought

ततः परं तेन मखाय यज्वना
तुरङ्गमुत्सृष्टमनर्गलं पुनः ।
धनुर्भृतामग्रत एव रक्षिणां
जहार शक्रः किल गूढविग्रहः ॥ ३९ ॥

तत इति । ततः परम् एकोनशतक्रतुप्राप्त्यनन्तरं यज्वना विधिनेष्टवता तेन दिलीपेन पुनः पुनः अपि मखाय मखं कर्त्तुम् । क्रियार्थोपपदस्येत्यादिना चतुर्थी । उत्सृष्टं मुक्तम् अनर्गलम् अप्रतिबन्धम् अव्याहतस्वैरगतिम् इत्यर्थः "अपर्य्यावर्त्तयन्तोऽश्वमनुचरन्तीति" आपस्तम्बस्मरणात् । तुरङ्गं धनु-

triumphantly home and sacrificed to the gods in the presence of the whole assembly of conquered Rajas ; and the Asvamedha would be brought to a close by a grand feast, at which the roasted flesh of the horse would be regarded as the imperial dish. The sacrifice of a horse was undoubtedly invested with a religious significance and associated with the worship of the sun, but subsequently it was connected with the worship of Indra, as is described in both the Ramayana and Mahabharata. The main idea of the Asvamedha, that it was undertaken to settle questions of supremacy, has been virtually set aside in favour of the later Brahmanical notion, that it was a sacrifice for the atonement of sin and the acquisition of religious merits, as is mentioned in the Mahabharata, or for the attainment of some worldly good, *i. e.* birth of a son, as is said in the Ramayana. This sacrifice is one of the most ancient rites of primeval India. It is described by two of the hymns of the Rigveda. In the Yajurveda the sacrifice was performed without any slaughter, the animal being tied to the post whilst the invocations were being chaunted and then let loose without injury. A legend is preserved in the Mahabharata of a similar bloodless Asvamedha having been performed by the sage Vrihaspati. See Wheeler's History of India vol. I. Ch. XVI.

अतीन्द्रियेष्वप्युपपन्नदर्शनः
बभूव भावेषु दिलीपनन्दनः ॥ ४१ ॥
स पूर्वतः पर्व्वतपक्षशातनं (१)
ददर्श देवं नरदेवसम्भवः ।
पुनः पुनः सूतनिषिद्धचापलं
हरन्तमश्वं रथरश्मिसंयतम् ॥ ४२ ॥
शतैस्तमक्ष्णामनिमेषवृत्तिभिः(२)
हरिं विदित्वा हरिभिश्च वाजिभिः ।

पुण्येन तस्याः नन्दिन्याः यत् अङ्ग तस्य निस्यन्दः द्रवः एव जलं मूत्रम् इत्यर्थः तेन लोचने प्रमृज्य शोधयित्वा अतीन्द्रियेषु इन्द्रियाणि अतिक्रान्तेषु। "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः, 'द्विगुप्राप्तापन्नालंपूर्व्वगतिसमासेषु परवल्लिङ्गताप्रतिषेधात् विशेष्यनिघ्नत्वम्। भावेषु वस्तुषु अपि उपपन्नदर्शनः सम्पन्नसाक्षात्कारशक्तिः बभूव ॥ ४१ ॥

स इति। नरदेवसम्भवः स रघुः पुनः पुनः सूतेन निषिद्धचापलं निवारितौद्धत्यं, रथस्य रश्मिभिः प्रग्रहैः। "किरणप्रग्रहौ रश्मी" इत्यमरः। संयतं बद्धम् अश्वं हरन्तं पर्व्वतपक्षाणां शातनं छेदकं देवम् इन्द्रं पूर्वतः पूर्व्वस्यां दिशि ददर्श ॥४२॥

शतैरिति। रघुः तम् अश्वहर्त्तारम् अनिमेषवृत्तिभिः

(१) शातयतीति शातनः, शीयतेः ण्यन्तात् कर्त्तरि ल्युट्।
(२) हरिं, हरयते: इन्द्रस्य सप्तपाद्यन्तादिश्यर्थः। अनिमेषशीलत्वं हि देवानां स्वाभाविकम्।

अवोचदेनं गगनस्पृशा रघुः
स्वरेण धीरेण निवर्त्तयन्निव ॥ ४३ ॥
मखांशभाजां प्रथमो मनीषिभि-
स्त्वमेव देवेन्द्र सदा निगद्यसे।
अजस्रदीक्षाप्रयतस्य मद्गुरोः
क्रियाविघाताय कथं प्रवर्त्तसे ॥ ४४ ॥
त्रिलोकनाथेन सदा मखद्विष-
स्त्वया नियम्या ननु दिव्यचक्षुषा।

निमेषव्यापारशून्यैः अक्ष्णां पतैः, हरिभिः हरिद्वर्णैः। "हरि-र्वाष्यवदाख्यातः हरित्कपिलवर्णयोः" इति विश्वः। वाजिभिः अश्वैश्च, हरिम् इन्द्रं विदित्वा। "हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्र-मरीचिषु" इति विश्वः। एनम् इन्द्रं गगनस्पृशा व्योमव्यापिना धीरेण गभीरेण स्वरेण ध्वनिना एव निवर्त्तयन् इव अवोचत् ॥ ४३ ॥

मखेति। हे देवेन्द्र मनीषिभिः (पण्डितैः) त्वम् एव मखांश-भाजां यज्ञभागभुजां (देवानां) प्रथमः सदा निगद्यसे कथ्यसे, तथापि अजस्रदीक्षायां नित्यदीक्षायां प्रयतस्य मद्गुरोः क्रिया-विघाताय क्रतुविघाताय क्रियां विहन्तुम् इत्यर्थः। "तुमर्थाच्च भाववचनात्" इति चतुर्थी। कथं प्रवर्त्तसे ॥ ४४ ॥

त्रिलोकेति। त्रयाणां लोकानां नाथः त्रिलोकनाथः। तद्धितार्थेत्यादिना उत्तरपदसमासः। तेन त्रैलोक्यनियामकेन

स चेत् स्वयं कर्म्मसु धर्म्मचारिणां
त्वमन्तरायो भवसि च्युतो विधिः ॥ ४५ ॥
तदङ्गमग्र्यं मघवन् महाक्रतोः
अमुं तुरङ्गं प्रतिमोक्तुमर्हसि ।
पथः (१)श्रुतेर्दर्शयितार ईश्वराः
मलीमसामाददते न पद्धतिम् ॥ ४६ ॥
इति प्रगल्भं(२)रघुणा समीरितं
वचो निशम्याधिपतिर्दिवौकसाम् ।

दिव्यचक्षुषा अतीन्द्रियार्थदर्शिना त्वया मखद्विषः क्रतुविघातकाः सदा नियम्याः (३)ननु शिक्ष्याः खलु। स त्वं धर्म्मचारिणां कर्म्मसु क्रतुषु स्वयम् अन्तरायः विघ्नः भवसि चेत्, विधिः अनुष्ठानं च्युतः हतः, लोके सत्कर्म कथैवास्तमियात् इत्यर्थः ॥ ४५ ॥

तदिति। हे मघवन् तत् तस्मात् कारणात् महाक्रतोः अश्वमेधस्य अग्र्यं श्रेष्ठम् अङ्गं साधनम् अमुं तुरङ्गं प्रतिमोक्तुं प्रतिदातुम् अर्हसि। तथाहि श्रुतेः पथः दर्शयितारः सन्मार्गप्रदर्शकाः ईश्वराः महान्तः मलीमसां मलिनां पद्धतिं मार्गं न आददते न स्वीकुर्व्वते असन्मार्गं नावलम्बन्ते इत्यर्थः। "मलीमसन्तु मलिनं कच्चरं मलदूषितम्" इत्यमरः ॥ ४६ ॥

इतीति। इति रघुणा समीरितं प्रगल्भं वचः निशम्य

(१) पथमत्र श्रुतेरिव दर्शयितार इति पठति, पथो निर्व्वाहस्य मार्गस्य इति व्याख्या च।
(२) प्रगल्भं चातुर्यरचितम्।
(३) शासनीया इति यावत्।

निवर्त्तयामास रथं सविस्मयः
प्रचक्रमे च प्रतिवक्तुमुत्तरम् ॥ ४७ ॥

यदात्थ राजन्यकुमार तत् तथा
यशस्तु रक्ष्यं परतो यशोधनैः ।
जगत्प्रकाशं तदशेषमिज्यया
भवद्गुरुर्लङ्घयितुं ममोद्यतः ॥ ४८ ॥

हरिर्यथैकः पुरुषोत्तमः स्मृतः
महेश्वरस्त्र्यम्बक एव नापरः (१) ।

आकर्ण्य दिवौकसः स्वर्गौकसः । "दिवं स्वर्गेऽन्तरिक्षे च" इति विश्वः । तेषाम् अधिपतिः देवेन्द्रः रघुप्रभावात् सविस्मयः सन् रथं निवर्त्तयामास, उत्तरं प्रतिवक्तुं प्रचक्रमे च ॥ ४७ ॥

यदिति । हे राजन्यकुमार क्षत्रियकुमार, "मूर्द्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्" इत्यमरः । यत् वाक्यम् आत्थ ब्रवीषि । ब्रुवः पञ्चानामित्यादिना आहादेशः । तत् तथा सत्यं, किन्तु यशोधनैः अस्मादृशैः परतः शत्रुतः यशः रक्ष्यम् । ततः किमत आह । भवद्गुरुः त्वत्पिता जगत्प्रकाशं लोकप्रसिद्धम् अशेषं सर्व्वं मम तत् यशः इज्यया यागेन लङ्घयितुं तिरस्कर्त्तुम् उद्यतः उद्युक्तः ॥ ४८ ॥

किं तत् यश इत्याह, हरिरिति । पुरुषेषु उत्तमः इति

(१) Compare:—"अणिमादिगुणोपेतमस्पृष्टपुरुषान्तरं शब्दमीश्वर इत्युच्चैः सार्द्धचन्द्रं विभर्त्ति यः" । कुमारसम्भवम् । Canto 6.

तथा विदुर्मां मुनयः शतक्रतुं (१)
द्वितीयगामी न हि शब्द एष नः ॥ ४९ ॥
अतोऽयमश्वः कपिलानुकारिणा (२)
पितुस्त्वदीयस्य मयापहारितः ।

सप्तमीसमासः, "न निर्धारणे" इति षष्ठीसमासनिषेधात्, कर्मधारये तु "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इत्युत्तमपुरुष इति स्यात्, यथा हरिः विष्णुः एकः एव पुरुषोत्तमः स्मृतः, यथा च त्र्यम्बकः शिवः एव महेश्वरः स्मृतः, न अपरः, अपरः पुमान् न। तथा मां मुनयः शतक्रतुं विदुः विदन्ति। "विदो लटो वा" इति झेर्जुसादेशः। नः अस्माकं हरिहरयोर्मम च इत्यर्थः, एषः त्रितयः अपि शब्दः द्वितीयगामी न हि। द्वितीयप्रकरणे गमिगम्यादीनामुपसंख्यानात् समासः ॥ ४९ ॥

अत इति। यतः अहम् एव शतक्रतुः अतः त्वदीयस्य पितुः अयं शततमः अश्वः कपिलानुकारिणा कपिलमुनितुल्येन मया

(1) Western scholars render the epithet "शतक्रतु" into "possessed of one hundred (many) intellects" It is quite possible, that post-vedic critics may have metaphorically interpreted it into a performer of a hundred sacrifices.

(2) The sixty thousand sons of Sagara were very wicked and obstructed the path of virtue and piety. Upon which, the gods repaired to the Muni Kapila, who was a portion of Visnu, and implored him to deliver the world from the oppression of Sagara's sons. At that period, Sagara commenced the sacrifice of a horse, Kapila stole and carried off the animal into a chasm in the earth. The sons of Sagara in quest of the horse dug

अलं प्रयत्नेन तवात्र मा निधाः
पदं पदव्यां सगरस्य सन्ततेः ॥ ५० ॥
ततः प्रहस्यापभयः पुरन्दरं
पुनर्बभाषे तुरगस्य रचिता।
गृहाण शस्त्रं यदि सर्ग (१) एष ते
न खल्वनिर्जित्य रघुं कृती भवान् ॥ ५१ ॥

अपहारितः अपहृतः। अपहारित इति स्वार्थे णिच् (२)। तव अत्र पथि प्रयत्नेन अलं, प्रयत्नो माकारि इत्यर्थः। निषिध्यस्य निषेधं प्रति करणत्वात् तृतीया। सगरस्य राज्ञः सन्ततेः सन्तानस्य पदव्यां पदं मा निधाः न निधेहि। निपूर्वात् धाञ्धातोः लुङ्, न माङ्योग इत्यडागमप्रतिषेधः। महदास्कन्दनं विनाशमूलं भवेत् इति भावः ॥ ५० ॥

तत इति। ततः तुरगस्य रचिता रघुः प्रहस्य प्रहासं कृत्वा अपभयः निर्भीकः सन् पुनः पुरन्दरं बभाषे। किमिति

---

downwards and came to Patala. They beheld the horse wandering freely about, and the Rishi Kapila absorbed in meditation. Then they rushed to kill him with uplifted weapons. The Muni slowly raised his eyes and for an instant looked upon them; and they were reduced to ashes by the sacred flame, that darted from his person. See Wilson's Visnu Purana, Vol III. Page 300.

(१) "सगरसुतपदवीं मिथ्यामोग्धेव रघुः सर्गः निश्चयः" इति दिनकरः। "सर्ग" इत्यत्र "मर्गः" इति पठति वल्लभः।

(२) ह्यताते: स्वार्थे णिच्प्रत्ययाभावादत्र प्रेरणार्थे एव णिच्। भयेति प्रयोज्यकर्त्तरि तृतीया ह्रक्रोरन्यतरस्यामिति विधानात्। तथाचात्र प्रयोजककर्त्तृपदं यथास्थानमूह्यमित्यनुसन्धेयम्।

स एवमुक्त्वा मघवन्तमुन्मुखः
करिष्यमाणः सशरं शरासनम्।
अतिष्ठदालीढ विशेषशोभिना(१)
वपुःप्रकर्षेण विडम्बितेश्वरः(२) ॥ ५२ ॥

हे देवेन्द्र यदि एषः अश्वामोचनरूपः ते तव सर्गः निश्चयः। "सर्गः स्वभावनिर्मोचनिश्चयाध्यायसृष्टिषु" इत्यमरः। तर्हि शस्त्रं गृहाण, भवान् रघुं माम् अनिर्जित्य, कृतमनेनेति कृती कृतकृत्यः न खलु। इष्टादिभ्यश्चेति इनिप्रत्ययः। रघुमित्यनेनात्मनो दुर्जयत्वं सूचितम् ॥ ५१ ॥

स इति। स रघुः उन्मुखः सन् मघवन्तम्, इन्द्रम् एवम् उक्त्वा शरासनं चापं, सशरं करिष्यमाणः आलीढेन आलीढाख्येन स्थानकभेदेन विशेषशोभिना अतिशयशोभिना वपुःप्रकर्षेण देहौन्नत्येन विडम्बितेश्वरः अनुकृतपिनाकी सन् अतिष्ठत्। आलीढलक्षणमाह यादवः, "स्थानानि धन्विनां पञ्च, तत्र वैशाखमस्त्रियाम्। वितस्त्यन्तरगौ पादौ मण्डलं तोरणाकृति। अन्वर्थं स्यात् समपदम् आलीढन्तु ततोऽग्रतः। दक्षिणे वाममाकुञ्च्य प्रत्यालीढं विपर्ययः" इति ॥ ५२ ॥

(१) Compare:-"स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम्"। कुमारसम्भवम्। Canto 3.

(२) विडम्बितः अनुकृतस्त्रिपुरदाहोद्युक्तः शम्भुर्येन स तादृशः इति दिनकरः। वल्लभस्तु "पुरा किल भगवान् त्रिपुरदिधक्षया दिव्यसर्वमतमालीढविशेषेण स्थानविशेषेण कृताद्भुतशोभोऽध्यतिष्ठत्" इत्याह।

रघोरवष्टम्भमयेन(१) पत्त्रिणा
हृदि क्षतो गोत्रभिदप्यमर्षणः ।
नवाम्बुदानीकमुहूर्त्तलाञ्छने
धनुष्यमोघं समधत्त सायकम् ॥ ५३ ॥
दिलीपसूनोः स बृहद्भुजान्तरं
प्रविश्य भीमासुरशोणितोचितः ।
पपावनास्वादितपूर्वमाशुगः
कुतूहलेनेव मनुष्यशोणितम् ॥ ५४ ॥

रघोरिति । रघोः अवष्टम्भमयेन स्तम्भरूपेण । "अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि" इति विश्वः । पत्त्रिणा बाणेन हृदि हृदये क्षतः विद्धः अत एव अमर्षणः असहनः क्रुद्धः इत्यर्थः, गोत्रभित् इन्द्रः अपि । "सम्भावनीये चौरेऽपि गोत्रः क्षोणीधरे मतः" इति विश्वः । नवाम्बुदानाम् अनीकस्य वृन्दस्य मुहूर्त्तं क्षणमात्रं लाञ्छने चिह्नभूते धनुषि दिव्ये धनुषि इत्यर्थः अमोघम् अवन्ध्यं सायकं बाणं समधत्त संहितवान् ॥ ५३ ॥

दिलीपेति । भीमानां भयङ्कराणाम् असुराणां शोणिते रुधिरे उचितः परिचितः स इन्द्रमुक्तः आशुगः सायकः

(१) अवष्टम्भमयेन स्तम्भमयेन स्तम्भवत् दृढता इति यावत् । अवष्टम्भमयेन काञ्चनमयेनेति दिनकरमिश्रादिसम्मतं व्याख्यानम् । "प्रथमं काञ्चनमयबाणप्रहारवर्णनं कविसमयविरुद्धमिति केचिदाचक्षते, तन्मते अवष्टम्भमयेन स्थैर्यरूपेण" इति दिनकरोक्तं । "अवष्टम्भधामीऽवष्टम्भमयः तेन रघोरभिमानमयेन पत्त्रिणा" इति वल्लभः ।

हरेः कुमारोऽपि कुमारविक्रमः
सुरद्विपास्फालनकर्कशाङ्गुलौ (१)।
भुजे शचीपत्रविशेषकाङ्किते
स्वनामचिह्नं निचखान सायकम् ॥ ५५ ॥
जहार चान्येन मयूरपत्रिणा(२)
शरेण शक्रस्य महाशनिध्वजम्।

दिलीपसूनोः रघोः वृहत् विशाल भुजान्तरं वक्षः प्रविश्य अनास्वादितपूर्वं पूर्वम् अनास्वादितम्। सुप्सुपेति समासः। मनुष्यशोणितं कुतूहलेन इव पपौ ॥ ५४ ॥

हरेरिति। कुमारस्य स्कन्दस्य विक्रमः इव विक्रमः यस्य सः तथोक्तः। "सप्तम्युपमानपूर्वस्य" इत्यादिना समासः। कुमार रघुः अपि सुरद्विपस्य ऐरावतस्य आस्फालनेन (३) कर्कशा अङ्गुलयः यस्य सः तस्मिन् शच्याः पत्रविशेषकैः अङ्किते शचीपत्र विशेषकाङ्किते (४) हरेः इन्द्रस्य भुजे स्वनामचिह्नं स्वनामाङ्कित सायकं निचखान निखातवान्। निष्कण्टकराज्ये तस्याय महानभिभवः इति भावः ॥ ५५ ॥

जहारेति। अन्येन मयूरपत्रिणा मयूरपत्रवता शरेण

(१) Compare "ऐरावतास्फालनकर्कशेन हस्तेन पस्पर्श तदङ्गमिन्द्रः"। कुमारसम्भवम्। Canto 2

(२) शरस्य गतिलाघवार्थं पुङ्खेषु कङ्कपत्रवत् मयूरपत्राणि बध्यन्ते। यथा कुमा "भागीरथीनिर्झरसीकराणां वोढा मुहुः कम्पितदेवदारुः। यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः"॥ इति।

(३) आस्फालनम् आस्फालनार्थं ताडनम्।

(४) शच्या कपोलादिषु अङ्किता ये पत्रविशेषकाः चन्दनादिभिर्या विशिष्टपत्ररच

चुकोप तस्मै स भृशं सुरश्रियः
प्रसह्य केशव्यपरोपणादिव ॥ ५६ ॥
तयोरुपान्तस्थितसिद्धसैनिकं(१)
गरुत्मदाशीविषभीमदर्शनैः।
बभूव युद्धं तुमुलं जयैषिणोः
अधोमुखैरूर्द्ध्वमुखैश्च पत्त्रिभिः ॥ ५७ ॥

शक्रस्य इन्द्रस्य महाशनिध्वजं महान्तम् अशनिरूपं ध्वजं जहार चिच्छेद च, स शक्रः सुरश्रियः प्रसह्य बलात्कृत्य केशानां व्यपरोपणात् अवतारणात् छेदनात् इव तस्मै रघवे भृशम् अत्यर्थं चुकोप तं हन्तुमियेष इत्यर्थः। क्रुधद्रुहेत्यादिना सम्प्रदानात् चतुर्थी ॥ ५६ ॥

तयोरिति। जयैषिणोः अन्योन्यजयकाङ्क्षिणोः तयोः इन्द्ररघ्वोः गरुत्मन्तः पक्षवन्तः। "गरुत्पक्षच्छदाः पत्त्रम्" इत्यमरः। आशीविषाः आशिषि दंष्ट्रायां विषं येषां ते आशीविषाः सर्पाः। पृषोदरादित्वात् साधु। "स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः" इत्यमरः ("आशीरुरगदंष्ट्रायाम्" इति वा)

तैः चहिते चिह्निते। पन्नः करतले कपोलं विन्यस्य शयानायाः शच्याः सुतरामेव इन्द्रस्य शचीपदविक्षेपदर्शितदरत्वम् इति बोद्धव्यम्।

(1) According to some, the Siddhas inhabit, together with the Munis, the *Bhuvarloka* or *middle region*, between the earth and the sun. According to the Visnupurana, eighty-eight thousand of them occupy the region of the sky, north of the sun and south of the seven Rishis. They are regarded as immortal, but only in the sense of living to the end of a Kalpa. See Wilson's. V. P.

अतिप्रबन्धप्रहितास्त्रवृष्टिभिः
तमाश्रयं दुष्प्रसहस्य तेजसः ।
शशाक निर्वापयितुं न वासवः
स्वतश्च्युतं वह्निमिवाद्भिरम्बुदः ॥ ५८ ॥

ततः प्रकोष्ठे हरिचन्दनाङ्किते
प्रमथ्यमानार्णवधीरनादिनीम् ।
रघुः शशाङ्कार्धमुखेन पत्रिणा
शरासनज्यामलुनाद्बिडौजसः ॥ ५९ ॥

ते इव भीमदर्शनाः सपक्षाः सर्पाः इव द्रष्टृणां भयावहाः इत्यर्थः। तैः अधोमुखैः ऊर्द्ध्वमुखैश्च धन्विनोरूपर्य्यधोदेशावस्थितत्वात् इति भावः। पत्रिभिः बाणैः उपान्तस्थिताः तटस्थाः सिद्धाः देवाः इन्द्रस्य, सैनिकाश्च रघोः, यस्मिन् तत् तथोक्तं तुमुलं सङ्कुलं युद्धं बभूव ॥ ५७ ॥

अतीति। वासवः अतिप्रबन्धेन अतिसातत्येन (नैरन्तर्य्येण) प्रहिताभिः प्रयुक्ताभिः अस्त्रवृष्टिभिः दुष्प्रसहस्य, दुःखेन प्रसह्यते इति दुष्प्रसहं तस्य दुःखेनाप्यसह्यस्य इत्यर्थः। तेजसः प्रतापस्य आश्रयं तं रघुम् अम्बुदः अद्भिः स्वतः च्युतं निर्गतं वह्निम्(१) इव निर्वापयितुं न शशाक। रघोरपि लोकपालात्मकस्येन्द्रांश सम्भवत्वात् इति भावः ॥ ५८ ॥

तत इति। ततः रघुः हरिचन्दनाङ्किते प्रकोष्ठे मणिबन्धे

(१) स्वतः च्युतं वह्निं मेघात् पतितं वह्निं वैद्युताग्निमित्यर्थः।

स चापमुत्सृज्य विवृद्धमत्सरः
प्रणाशनाय प्रबलस्य विद्विषः ।
महीध्रपक्षव्यपरोपणोचितं(१)
स्फुरत्प्रभामण्डलमस्त्रमाददे(२) ॥ ६० ॥
रघुर्भृशं वक्षसि तेन ताड़ितः
पपात भूमौ सह सैनिकाश्रुभिः ।

प्रमथ्यमानार्णवधीरनादिनीं प्रमथ्यमानार्णवः इव धीरं गम्भीरं नदतीति तां तथोक्तां, वेवेष्टि व्याप्नोतीति विट् व्यापकम् ओजः यस्य स तस्य विड़ौजसः इन्द्रस्य । पृषोदरादित्वात् साधु । शरासनज्यां धनुर्मौर्वीं शशाङ्कस्य अर्द्धः खण्डः(३) इव मुखं फलं(४)यस्य तेन पत्त्रिणा अलुनात् अच्छिनत् ॥ ५९ ॥

स इति । विवृद्धमत्सरः प्रवृद्धवैरः स इन्द्रः चापम् उत्सृज्य प्रबलस्य विद्विषः शत्रोः प्रणाशनाय वधाय महीं धारयन्तीति महीध्राः पर्वताः । मूलविभुजादित्वात् कप्रत्ययः। तेषां पक्षव्यपरोपणे पक्षच्छेदे उचितं स्फुरत्प्रभामण्डलम् अस्त्रं वज्रायुधम् आददे जग्राह ॥ ६० ॥

रघुरिति । रघुः तेन वज्रेण भृशम् अत्यर्थं वक्षसि

(१) Compare:—"क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्रौ अवेदनाज्ञं कुलिशक्षतानाम्" । कुमारसम्भवम् । १ सर्गः ।

(२) स्फुरत् कम्पमानं दीप्यमानं वा प्रभामण्डलं यस्य तत् तथोक्तम् ।

(३) अर्द्धं नपुंसकमिति विधानात् समांशवाचित्वे तस्य पूर्व्वनिपातः स्यात् । अतः छलं शशाङ्कस्य अर्द्धः खण्ड इति ।

(४) "फला" इति भाषा ।

निमेषमात्रादवधूय तद्व्यथां
सहोत्थितः सैनिकहर्षनिस्वनैः ॥ ६१ ॥

तथापि शस्त्रव्यवहारनिष्ठुरे
विपक्षभावे चिरमस्य तस्थुषः ।
तुतोष वीर्य्यातिशयेन वृत्रहा(१)
पदं हि सर्वत्र गुणैर्निधीयते ॥ ६२ ॥

ताड़ितः सन् सैनिकानाम् अश्रुभिः सह भूमौ पपात, तस्मिन् पतिते ते रुरुदुः इत्यर्थः, निमेषमात्रात् तद्व्यथां दुःखम् अवधूय तिरस्कृत्य सैनिकानां ये हर्षेण निस्वनाः क्ष्वेड़ाः तैः सह उत्थितश्च, तस्मिन् उत्थिते हर्षात् सिंहनादांश्चक्रुः इत्यर्थः ॥ ६१ ॥

तथापीति। तथापि वज्रघातेऽपि शस्त्राणाम् आयुधानां व्यवहारेण व्यापारेण निष्ठुरे क्रूरे विपक्षभावे शात्रवे चिरं तस्थुषः स्थितवतः अस्य रघोः वीर्य्यातिशयेन वृत्रं हतवान् इति वृत्रहा। "ब्रह्मभ्रूणवृत्रेषु क्विप्"। तुतोष। स्वयं वीर एव वीरं जानाति इति भावः। कथं शत्रोः सन्तोषः अत आह, गुणैः सर्वत्र शत्रुमित्रोदासीनेषु पदं अंघ्रिः निधीयते गुणैः सर्वत्र संक्रम्यते इत्यर्थः। गुणाः शत्रूनप्यावर्ज्जयन्ति इति भावः ॥ ६२ ॥

(१) वृत्रहा means destroyer of the great demon Vritra. In vedic hymns, the word वृत्र means enemies in general, as in the hymns; "इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे। युजं वृत्रेषु वज्रिणम्"। Ri. 1. 7. 5. and again in, "विश्वमित् सवनं सुतमिन्द्रो मदाय गच्छति। वृत्रहा सोमपीतये"। Ri. 1. 16. 8. It is therefore evident, that instead of "Vritra" the proper name of a great enemy passing for a voca-

असङ्गमद्रिष्वपि(१) सारवत्तया
न मे त्वदन्येन विसोढमायुधम्।
अवेहि मां प्रीतमृते तुरङ्गमात्
किमिच्छसीति स्फुटमाह वासवः॥ ६३॥
ततो निषङ्गादसमग्रमुद्धृतं
सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम्।

असङ्गमिति। सारवत्तया अद्रिषु अपि असङ्गम् अप्रतिबन्धं मे आयुधं वज्रं त्वदन्येन न विसोढम् अतः मां प्रीतं सन्तुष्टम् अवेहि, तुरङ्गमात् ऋते तुरङ्गं वर्जयित्वा। "अन्यारादितरर्त्ते" इति पञ्चमी। किम् इच्छसि इति स्फुटं वासवः आह। तुरङ्गमात् अन्यद्देयं नास्ति इति भावः॥ ६३॥

तत इति। ततः निषङ्गात् तूणीरात् असमग्रं यथा तथा उद्धृतं सुवर्णपुङ्खद्युतिभिः रञ्जिताः अङ्गुलयः येन तम् इषुं प्रति-

ble signifying a foe, as stated by Dr. Banerjea, the reverse has been the true process. Western scholars suppose, that Vritra is the name of the cloud that conceals the cows of heaven (rain-waters) within its caves, for killing whom by his thunderbolt and for the consequent liberation of the cows, Indra is so often praised in the hymns. Translation of Ri. 1. 7. 5 and 6. 8. "Indra we invoke for great wealth, Indra too for small wealth, who is our ally and the wielder of the thunderbolt against our enemies." "To this liberation well offered in every way, Indra the slayer of Vritra or enemies goes for hilarity for drinking the soma"

(1) Dinakara reads असमम् for असङ्गम्।

नरेन्द्रसूनुः प्रतिसंहरन्निषुं
प्रियंवदः (१) प्रत्यवदत् सुरेश्वरम् ॥ ६४ ॥
अमोच्यमश्वं यदि मन्यसे प्रभो
ततः समाप्ते विधिनैव कर्म्मणि।
अजस्रदीक्षाप्रयतः स मद्गुरुः
क्रतोरशेषेण फलेन युज्यताम् ॥ ६५ ॥
यथा च वृत्तान्तमिमं सदोगतः
त्रिलोचनैकांशतया (२) दुरासदः।

संहरन् निवर्त्तयन्, नाप्रहरन्तं प्रहरेदिति निषेधात् इति भावः। प्रियं वदतीति प्रियंवदः। "प्रियवशे वदः खच्" इति खच्प्रत्ययः, अरुर्द्विषेत्यादिना मुमागमः। नरेन्द्रसूनुः रघुः सुरेश्वरं प्रत्यवदत्, न तु प्राहरत् इति भावः॥ ६४ ॥

अमोच्यमिति। हे प्रभो इन्द्र अश्वम् अमोच्यं मन्यसे यदि ततः तर्हि अजस्रदीक्षायां प्रयतः सः मद्गुरुः मम पिता विधिना एव कर्म्मणि समाप्ते सति क्रतोः यत् फलं तेन फलेन अशेषेण कृत्स्नेन युज्यतां युक्तः अस्तु। अश्वमेधफललाभे किमश्वेन इति भावः॥ ६५ ॥

यथेति। सदोगतः सदोगृहं गतः त्रिलोचनस्य ईश्वरस्य

(I) Another reading is प्रियम्वदम् which refers to सुरेश्वरम्।

(२) दीप्तिमत्त्वात् त्रिलोचनैकांशत्वेन दुरधिगमः इति दिनकरः। वल्लभस्तु "अष्टमूर्त्तित्वात् यजमानस्यशांशभावात् दुरभिभवः दुराक्रमणीयः। 'दीक्षितं ब्रह्म अभिमति' इति आगमः" इति आह।

तवैव सन्देशहराद्विशाम्पतिः
शृणोति लोकेश तथा विधीयताम् ॥ ६६ ॥
तथेति कामं प्रतिशुश्रुवान् रघोः
यथागतं (१) मातलिसारथिर्ययौ।
नृपस्य नातिप्रमनाः सदोगृहं (२)
सुदक्षिणासूनुरपि न्यवर्त्तत ॥ ६७ ॥
तमभ्यनन्दत् प्रथमं प्रबोधितः
प्रजेश्वरः शासनहारिणा हरेः।

एकांशतया अष्टानाम् अन्यतममूर्त्तित्वात्, दुरासदः अस्मादृशैः दुष्प्राप्यः विशाम्पतिः यथा इमं वृत्तान्तं तव सन्देशहरात् वार्त्ताहरात् एव शृणोति च, हे लोकेश इन्द्र तथा विधीयताम् ॥ ६६ ॥

तथेति। मातलिसारथिः इन्द्रः रघोः सम्बन्धिनं कामं मनोरथं तथेति तथास्तु इति प्रतिशुश्रुवान् प्रतिश्रुतवान्। "भाषायां सदवसश्रुवः" इति क्वसुप्रत्ययः। यथागतं ययौ सुदक्षिणासूनुः रघुः अपि नातिप्रमनाः विजयलाभेऽप्यश्वनाशान्नातीव तुष्टः सन्। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। नृपस्य सदोगृहं प्रति न्यवर्त्तत ॥ ६७ ॥

तमिति। हरेः इन्द्रस्य शासनहारिणा पुरुषेण प्रथमं प्रबो-

(१) "यथागतं न तु पदं विजित्येति भावः" इति दिनकर। "तेन मार्गेणागतस्तेनैव गत इत्यर्थः" इति चरणः।

(२) "सदोगृहं दीक्षामण्डपमिति" दिनकर; "यज्ञमण्डपमिति" चरणः।

परामृशन् हर्षजडेन(१) पाणिनां
तदीयमङ्गं कुलिशव्रणाङ्कितम् ॥ ६८ ॥
इति क्षितीशो नवतिं नवाधिकां
महाक्रतूनां महनीयशासनः ।
समारुरुक्षुर्दिवमायुषः क्षये
ततान सोपानपरम्परामिव ॥ ६९ ॥
अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्वा यूने सितातपवारणम् ।

धितः ज्ञापितः वृत्तान्तम् इति शेषः, प्रजेश्वरः दिलीपः हर्षजडेन हर्षशिशिरेण पाणिना कुलिशव्रणाङ्कितं तस्य रघोः इदं तदीयम् अङ्गं शरीरं परामृशन्(२)सन् तं रघुम् अभ्यनन्दत् ॥ ६८ ॥

इतीति । महनीयशासनः पूजनीयाज्ञः क्षितीशः इति अनेन प्रकारेण । "इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु" इत्यमरः । महाक्रतूनाम् अश्वमेधानां नवभिः अधिकां नवतिम् एकोनशतम् आयुषः क्षये सति दिवं स्वर्गम् समारुरुक्षुः आरोढुमिच्छुः सोपानानां परम्परां पङ्क्तिं इव ततान ॥ ६९ ॥

अथेति । अथ विषयेभ्यः व्यावृत्तात्मा निवृत्तचित्तः स दिलीपः यथाविधि यथाशास्त्रं यूने सूनवे नृपतिककुदं राजचिह्नम् । "ककुदत् ककुदं श्रेष्ठे वृषाङ्गे राजलक्ष्मणि" इति

(१) हर्षजडेन हर्षवशात् जडप्रायेण इति दिनकरः । "हर्षजडत्वात् चेष्टारहितेन" इति मल्लिनाथः । हर्षशिशिरेणेति टीकान्तरापन्नं माघस्य रीचमि ।
(२) परामृशन् सादरं स्पृशन् ।

मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥७०॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
रघुराज्याभिषेको नाम तृतीयः सर्गः ।

विश्वः । सितातपवारणं श्वेतच्छत्रं दत्त्वा तया देव्या सुदक्षिणया सह मुनिवनतरोः छायां शिश्रिये श्रितवान् वानप्रस्थाश्रमं स्वीकृतवान् इत्यर्थः । तथाहि गलितवयसां वृद्धानाम् इक्ष्वाकूणाम् इक्ष्वाकोर्गोत्रापत्यानाम् । "तद्राजसंज्ञकत्वादणो लुक्" । इदं वनगमनं कुलव्रतम् । देव्या सहेत्यनेन सपत्नीकवानप्रस्थाश्रमपक्ष उक्तः । तथा च याज्ञवल्क्यः "सुतविन्यस्तपत्नीकः तया वानुगतो वनम् । वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत्" ॥ इति हरिणीवृत्तमेतत् ॥ ७० ॥

इति श्रीमहामहोपाध्याय-कोलाचलमल्लिनाथ-सूरिविरचितायां
रघुवंशटीकायां सञ्जीवनी समाख्यायां तृतीयः सर्गः ।

---

## चतुर्थः सर्गः ।

स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ ।
दिनान्ते निहितं तेजः सवित्रेव(१)हुताशनः ॥१॥

शारदा शारदाम्भोज-वदना वदनाम्बुजे ।
सर्व्वदा सर्व्वदास्माकं सन्निधिं सन्निधिं क्रियात् ॥

स इति । स रघुः गुरुणा पित्रा दत्तं राज्यं राज्ञः कर्म्म प्रजापरिपालनात्मकम् । पुरोहितादित्वाद्यक् । प्रतिपद्य प्राप्य दिनान्ते सायंकाले सवित्रा सूर्य्येण निहितं तेजः प्रतिपद्य हुताशनः अग्निः इव अधिकं बभौ । "सौरं तेजः सायमग्निं संक्रमते। आदित्यो वा अस्तं यन् अग्निमनुप्रविशति । अग्निं वा आदित्यः सायं प्रविशति" इत्यादिश्रुतिः प्रमाणम् ॥ १ ॥

---

(१) सविता सर्वभावानां प्रसविता। मूलेसून् ।

The sun is said to be the producer of things, because by giving sensibility to sleeping creatures and rescuing the world from the night's darkness, he is considered poetically, as i calling the world into existence. The following hymn is t that effect "केतुं कृण्वन्नकेतवे पेशो मर्य्या अपेशसे। समुषद्भिरजायथाः" Translate: "O Mortals ! the same Indra in the form of the su creating sensibility for the insensible (that is awaking me from sleep ) and form for the formless ( that is manifesting th forms which in the dark of the night had got a chaotic appea ance ), has issued with blazing rays." Ri 1. 6. 3. see Dr K. I Banerjea's Edition page 20.

दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम् ।
पूर्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थितः ॥ २ ॥
पुरुहूतध्वजस्येव(१) तस्योन्नयनपङ्क्तयः ।
नवाभ्युत्थानदर्शिन्यः(२) ननन्दुः सप्रजाः प्रजाः ॥३॥

दिलीपेति । दिलीपानन्तरं राज्ये प्रतिष्ठितम् अवस्थितं तं रघुं निशम्य आकर्ण्य पूर्वं दिलीपकाले राज्ञां हृदये प्रकर्षेण धूमोऽस्य सञ्जातः प्रधूमितः अग्निः सन्तापाग्निः उत्थितः इव प्रज्वलितः इव, पूर्वस्मोऽधिकसन्तापोऽभूत् इत्यर्थः । राजकर्तृकस्यापि निशमनस्याग्नावुपचारोन समानकर्तृकत्वविरोधः इति ॥ २ ॥

पुरुहूतेति । पुरुहूतध्वजः इन्द्रध्वजः । स किल राजभिर्हैश्वर्यं पूजयते इत्युक्तं भविष्योत्तरे, "एवं यः कुरुते यात्राम्

(१) राज्ञः नवाभ्युत्थानं नगारोहणादि——। "अभिषिक्तो हि राजा गजेन्द्रमारुह्य पुरं प्रदक्षिणीकुर्यादित्याचारः" इति मल्लः । पुरुहूतध्वजस्य इन्द्रमहोत्सवस्य । "गजाकारं चतुस्तम्भं पुरद्वारे प्रतिष्ठितम् । पौराः कुर्वन्ति शरदि पुरुहूतमहोत्सवम्" इति तेनैव उद्धृतम् ।

This festival used to be celebrated in honor of Indra, the god of rain, at the gathering of corn. It was called पुरुहूतध्वज, because the four-pillared edifice erected on the occasion was in the form of the rainbow. This custom, which is no longer observed here, resembled that prevailing in England at the feast of harvest-home. No public worship is offered to Indra at present; and the *only festival in the Hindu Calendar*, the *Sakradvajotthana*, the erection of a flag in honor of Sakra—should be held on the twelfth or thirteenth of Bhadra. The Sakradvajotthana is, also, a rite to be performed by kings and princes.

सममेव समाक्रान्तं द्वयं द्विरदगामिना (१) ।
तेन सिंहासनं पित्र्यमखिलञ्चारिमण्डलम् ॥ ४ ॥
छायामण्डललक्ष्येण तमदृश्या किल स्वयम् ।
पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम्(२) ॥५॥

इन्द्रकेतौ युधिष्ठिर। पर्जन्यः कामवर्षी स्यात् तस्य राज्ञो न संशयः ॥” इति। “चतुरस्रं ध्वजाकारं राजद्वारे प्रतिष्ठितम्। आहुः शक्रध्वजं नाम पौरलोके सुखावहम्” ॥ पुरुहूतध्वजस्य इव तस्य रघोः नवम् अभ्युत्थानम् अभ्युन्नतिम् अभ्युदयञ्च पश्यन्तीति नवाभ्युत्थानदर्शिन्यः उत् ऊर्द्धं प्रस्थिताः उच्छ्वसिताश्च नयनपङ्क्तयः यासां ताः सप्रजाः ससन्तानाः प्रजाः जनाः। “प्रजा स्यात् सन्ततौ जने” इत्युभयत्राप्यमरः। ननन्दुः ॥ ३ ॥

सममिति। द्विरदः इव द्विरदैश्च गच्छतीति द्विरदगामिना। “कर्त्तर्युपमाने” इति “सुप्यजातौ” इति च णिनिः। तेन रघुणा समं युगपत् एव द्वयं समाक्रान्तम् अधिष्ठितम्। किं तत् द्वयम् पितुरागतं पित्र्यम्। “पितुर्यत्” इति यत्प्रत्ययः। सिंहासनम् अखिलम् अरेः मण्डलं राष्ट्रञ्च ॥ ४ ॥

सिंहासनारोहणानन्तरं तस्य लक्ष्मीसन्निधानमाह, छायेति। अत्र रघोस्तेजोविशेषेण स्वयं सन्निहितया लक्ष्म्या छत्रधारणं कृतमित्युत्प्रेक्ष्यते। पद्मा लक्ष्मीः। “लक्ष्मीः पद्मालया पद्मा

(१) द्विरदेन गम्यं शीर्षं यस्य तेन। अभिषिक्तो नृपः हस्तिनमारुह्य गच्छतीति ह्याचार इति दिनकरः।

(२) “लक्ष्मीर्हि पद्मपत्रेण छत्रेण छायां श्रिता इत्यागमः” इति दिनकरः।

परिकल्पितसान्निध्या काले काले च वन्दिषु।
स्तुत्यं स्तुतिभिरर्थ्याभिः उपतस्थे सरस्वती ॥ ६ ॥
मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः।

कमला श्रीर्हरिप्रिया" इत्यमरः। स्वयम् अदृश्या किल, किलेति सम्भावनायाम्, सती, छायामण्डललक्ष्येण कान्तिपुञ्जानुमेयेन न तु स्वरूपतो दृश्येन। छायामण्डलमित्यनेन अनातपत्रत्वं लभ्यते। "छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्युभयत्राप्यमरः। पद्मातपत्रेण पद्ममेव आतपत्रं तेन करणभूतेन साम्राज्ये साम्राज्यकर्मणि मण्डलाधिपत्ये दीक्षितम् अभिषिक्तं तं भेजे। अन्यथा कथमेतादृशी कान्तिसम्पत्तिः इति भावः ॥ ५ ॥

सम्प्रति सरस्वतीसान्निध्यमाह, परिकल्पितेति। सरस्वती च काले काले सर्वेषु अपि योग्यकालेषु। नित्यवीप्सयोरिति वीप्सायां द्विर्वचनम्। वन्दिषु परिकल्पितसान्निध्या कृतसन्निधाना सती स्तुत्यं स्तोत्रार्हं तं रघुम् अर्थ्याभिः अर्थात् अनपेताभिः। "धर्मपथ्यर्थन्यायादनपेते" इति यत्प्रत्ययः। स्तुतिभिः स्तोत्रैः उपतस्थे देवतावुद्ध्या पूजितवती इत्यर्थः। देवतात्वञ्च विष्णुः पृथिवीपतिरिति वा लोकपालात्मकत्वादित्यनुसन्धेयम्। एवञ्च सति उपाद्देवपूजा-सङ्गतिकरण-मित्रकरण-पथिष्विति वक्तव्यादात्मनेपदं सिध्यति ॥ ६ ॥

मन्विति। वसुन्धरा मनुप्रभृतिभिः मन्वादिभिः मान्यैः पूज्यैः राजभिर्भुक्ता यद्यपि भुक्तैव इत्यर्थः। यद्यपीत्यवधारणे। "यद्यपि

तथाप्यनन्यपूर्व्वेव तस्मिन्नासीद् वसुन्धरा ॥ ७ ॥
स हि सर्व्वस्य लोकस्य युक्तदण्डतया मनः ।
आददे नातिशीतोष्णः नभस्वानिव दक्षिणः ॥८॥
मन्दोत्कण्ठाः कृतास्तेन गुणाधिकतया गुरौ ।
फलेन सहकारस्य पुष्पोद्गम इव प्रजाः ॥ ९ ॥

यदि वार्थे स्यात्" इति केशवः। तथापि तस्मिन् राज्ञि अन्यः पूर्वः यस्याः सा अन्यपूर्वा, अन्यपूर्वा न भवतीति अनन्यपूर्वा अनन्योपभुक्तेव आसीत् तत्प्रथमपतिकेवानुरक्तवती इत्यर्थः ॥७॥

अत्र कारणमाह, स हीति। हि यस्मात् कारणात् स रघुः युक्तदण्डतया यथापराधदण्डतया सर्व्वस्य लोकस्य मनः आददे जहार। क इव अतिशीतः अत्युष्णो वा न भवतीति नातिशीतोष्णः। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। दक्षिणः दक्षिणदिग्भवः नभस्वान् वायुः इव मलयानिल इव इत्यर्थः। युक्तदण्डतयेत्यत्र कामन्दकः, "उद्वेजयति तीक्ष्णेन मृदुना परिभूयते। दण्डेन नृपतिस्तस्मात् युक्तदण्डः प्रशस्यते" ॥ इति ॥८॥

मन्देति। तेन रघुणा प्रजाः गुरौ दिलीपविषये, सहकारः अतिसौरभः चूतः। "आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः" इत्यमरः। तस्य फलेन पुष्पोद्गमे पुष्पोदये इव, ततोऽपि गुणाधिकतया हेतुना मन्दोत्कण्ठाः अल्पोत्सुकाः कृताः। गुणोत्तरश्च उत्तरो विषयः पूर्वं विस्मारयति इति भावः ॥ ९ ॥

नयविद्भिर्नवे राज्ञि सदसच्चोपदर्शितम्।
पूर्व एवाभवत् पक्षः तस्मिन् नाभवदुत्तरः ॥ १० ॥
पञ्चानामपि भूतानाम् उत्कर्षं पुपुषुर्गुणाः(१)।
नवे तस्मिन् महीपाले सर्व्वं नवमिवाभवत् ॥११॥

नयेति। नयविद्भिः नीतिशास्त्रज्ञैः नवे तस्मिन् राज्ञि विषये तमधिकृत्य इत्यर्थः, सत् धर्म्मयुद्धादिकम्, असत् कूटयुद्धादिकञ्च उपदर्शितम्। तस्मिन् राज्ञि पूर्वः पक्षः एव अभवत् संक्रान्तः इत्यर्थः, उत्तरः पक्षः न अभवत् न संक्रान्तः इत्यर्थः। तत्र सदसतोर्मध्ये सदेवाभिमतं नासत्, तदुपायनन्तु ज्ञानार्थमेव इत्यर्थः। पक्षः साधनयोग्यार्थः। "पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु" इति केशवः ॥ १० ॥

पञ्चानामिति। पृथिव्यादीनां पञ्चानां भूतानाम् अपि गुणाः गन्धादयः उत्कर्षम् अतिशयं पुपुषुः। अन्योन्यं घ्नते, तस्मिन् रघौ नाम नवे महीपाले सति सर्वं वस्तुजातं नवम्

(१) क्षित्यप्तेजोमरुद्व्योमरूपाणि पञ्चभूतानि। तत्र क्षितौ रूपरसगन्धस्पर्शशब्दाः पञ्च एव गुणाः सन्ति; अप्सु रूपरसस्पर्शशब्दाः चत्वारः, तेजसि रूपस्पर्शशब्दास्त्रयः, वायौ द्वौ स्पर्शशब्दौ; आकाशे च एकः शब्द एव विद्यते। तथाहि "पृथ्वी पञ्चगुणा तोयं चतुर्गुणमथानलः। त्रिगुणो द्विगुणो वायुर्वियदेकगुणं भवेत्" इति वचनेन उक्तम्। तथाच शिवपुराणे—"आकाशं शब्दमात्रं यत् तत् स्पर्शमात्रमाविशत्। द्विगुणस्तु ततो वायुः शब्दस्पर्शात्मकोऽभवत्। रूपं तथैवाविशतो शब्दस्पर्शगुणावुभौ। त्रिगुणश्च ततस्त्वग्निः स शब्दस्पर्शरूपवान्। शब्दस्पर्शरूपमात्रं रसमात्रं समाविशत्। तस्माच्चतुर्गुणा आपो विज्ञेयास्तु रसात्मिकाः। शब्दस्पर्शश्च रूपञ्च रसश्च गन्धमाविशत्। संहता गन्धमात्रेण आवृण्वन्तो महीमिमाम्। तस्मात् पञ्चगुणा भूमिः स्थूलभूतेषु दृश्यते। शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः।

यथा प्रह्लादनाच्चन्द्रः प्रतापात् तपनो यथा।
तथैव सोऽभूदन्वर्थः राजा प्रकृतिरञ्जनात् ॥ १२ ॥
कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने।
चक्षुष्मत्ता(१) तु शास्त्रेण सूक्ष्मकार्य्यार्थदर्शिना ॥१३॥
लब्धप्रशमनस्वस्थम् अथैनं समुपस्थिता।

इव अभवत्। तदेव भूतजातमिदानीमपूर्वगुणयोगादपूर्वमिवाभवत् इति भावः ॥ ११ ॥

यथेति। यथा चन्दयति आह्लादयतीति चन्द्रः इन्दुः। चदिधातोरौणादिको रप्रत्ययः। प्रह्लादनात् आह्लादकरणात् अन्वर्थः अनुगतार्थनामकः अभूत्, यथा च तपतीति तपनः सूर्य्यः। नन्द्यादित्वात् ल्यु प्रत्ययः। प्रतापात् सन्तापजननात् अन्वर्थः, तथा एव स राजा प्रकृतिरञ्जनात् अन्वर्थः सार्थकराजशब्दः अभूत्। यद्यपि राजशब्दो राजतेर्दीप्त्यर्थात् कनिन् प्रत्ययान्तो न तु रञ्जेः, तथापि धातूनामनेकार्थत्वाद्रञ्जनाद्राजेत्युक्तं कविना ॥ १२ ॥

काममिति। विशाले तस्य रघोः लोचने कामं कर्णान्तयोः विश्रान्ते कर्णप्रान्तगते चक्षुष्मत्ता तु चक्षुःफलं तु इत्यर्थः सूक्ष्मान् कार्य्यार्थान् कर्त्तव्यार्थान् दर्शयति प्रकाशयतीति सूक्ष्मकार्य्यार्थदर्शिना शास्त्रेण एव। शास्त्रं दृष्टिर्विवेकिनाम् इति भावः॥१३॥

लब्धेति। अथ लब्धस्य राज्यस्य प्रशमनेन परिपन्थिनाम्

(१) Compare "अनेकसंशयच्छेदि, परोक्षार्थस्य दर्शकम्। सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः."।

पार्थिवश्रीर्द्वितीयेव शरत् पङ्कजलक्षणा ॥ १४ ॥
निर्वृष्टलघुभिर्मेघैः मुक्तवर्त्मा सुदुःसहः ।
प्रतापस्तस्य भानोश्च युगपद् व्यानशे दिशः ॥ १५ ॥
वार्षिकं संजहारेन्द्रः धनुर्जैत्रं रघुर्दधौ ।
प्रजार्थसाधने तौ हि पर्य्यायोद्यतकार्मुकौ ॥ १६ ॥

अनुरञ्जनप्रतीकाराभ्यां स्थिरीकरणेन स्वस्थं समाहितचित्तम् एनं रघुं पङ्कजलक्षणा पद्मचिह्ना । श्रियोऽपि विशेषणमेतत् । शरत्, द्वितीया पार्थिवश्रीः राजलक्ष्मीः इव, समुपस्थिता प्राप्ता। "रक्षा पौरजनस्य देशनगरग्रामेषु गुप्तिस्तथा, योधानामपि संग्रहोऽपि तुलया मानव्यवस्थापनम् । साम्यं लिङ्गिषु दान-वृत्तिकरणं, त्यागः समानेऽर्द्धनं कार्य्याण्येव महीभुजां प्रथमना-न्येतानि राज्ये नवे ॥ १४ ॥

निर्वृष्टेति । निःशेषं वृष्टाः निर्वृष्टाः । कर्त्तरि क्तः । अत एव लघवः तैः मेघैः मुक्तवर्त्मा त्यक्तमार्गः अत एव सुदुःसहः तस्य रघोः भानोश्च प्रतापः पौरुषम् आतपश्च । "प्रतापौ पौरुषातपौ" इति यादवः । युगपत् दिशः व्यानशे व्याप ॥१५॥

वार्षिकमिति । इन्द्रः वर्षासु भवं वार्षिकं वर्षानिमित्तम् इत्यर्थः । "वर्षाभ्यष्ठक्" इति ठक्प्रत्ययः । धनुः संजहार रघुः जैत्रं जयशीलम् । जेतृशब्दात् तृन्नन्तात् प्रज्ञादिभ्यश्चेति स्वार्थे अण्प्रत्ययः । धनुः दधौ, हि यस्मात् तौ इन्द्ररघू प्रजानाम् अर्थस्य प्रयोजनस्य वृष्टिविजयलक्षणस्य साधनविषये पर्य्यायेण

पुण्डरीकातपत्रस्तं विकसत्काशचामरः ।
ऋतुर्विडम्बयामास न पुनः प्राप(१)तच्छ्रियम् ॥१७॥
प्रसादसुमुखे तस्मिन् चन्द्रे च विशदप्रभे ।
तदा चक्षुष्मतां प्रीतिरासीत् समरसा द्वयोः ॥१८॥
हंसश्रेणीषु तारासु कुमुद्वत्सु च वारिषु ।
विभूतयस्तदीयानां पर्य्यस्ता यशसामिव ॥ १९ ॥

उद्यते कार्म्मुके याभ्यां तौ पर्य्यायोद्यतकार्म्मुकौ । पाठान्तरे पर्य्यायेण उद्यमः विश्रमश्च ययोः तौ पर्य्यायोद्यमविश्रमौ । द्वयोः पर्य्यायकरणादक्लेशः इति भावः ॥ १६ ॥

पुण्डरीकेति । पुण्डरीकं सिताम्भोजम् एव आतपत्रं यस्य स तथोक्तः, विकसन्ति काशानि काशाख्यतृणकुसुमानि एव चामराणि यस्य स तथोक्तः, ऋतुः शरदृतुः पुण्डरीकनिभातपत्रं काशनिभचामरं तं रघुं विडम्बयामास अनुचकार, तस्य रघोः श्रियं पुनः शोभां तु न प्राप । "शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिव दृश्यते" इति शाश्वतः ॥ १७ ॥

प्रसादेति । प्रसादेन सुमुखे तस्मिन् रघौ विशदप्रभे निर्म्मलकान्तौ चन्द्रे च द्वयोः विषये तदा चक्षुष्मतां प्रीतिः अनुरागः समरसा समस्वादा तुल्यभोगा इति यावत् । "रसो गन्धे रसः स्वादे" इति विश्वः । आसीत् ॥ १८ ॥

हंसेति । हंसानां श्रेणीषु पङ्क्तिषु तारासु नक्षत्रेषु कुमु-

(१) न तु तच्छ्रियमित्यनेन प्रकृतशोभा लभ्यते इति व्यतिरेको व्यज्यते ।

इक्षुच्छायनिषादिन्यः तस्य गोप्तुर्गुणोदयम् ।
आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः ॥ २० ॥

दानि सन्ति येषु कुमुद्वन्ति । "कुमुद्वान् कुमुदप्रायः" इत्यमरः । कुमुदनड्वेतसेभ्यो ड्मतुप् । तेषु कुमुदप्रायेषु इत्यर्थः. वारिषु च तदीयानां रघुसम्बन्धिनां यशसां विभूतयः सम्पदः पर्यस्ताः इव प्रसारिताः किम् इत्युत्प्रेक्षा । अन्यथा कथमेषां धवलिमा इति भावः ॥ १९ ॥

इक्ष्विति । इक्षूणां छाया इक्षुच्छायम् । छायाबाहुल्य इति नपुंसकत्वम् । तत्र निषण्णाः इक्षुच्छायनिषादिन्यः । स्त्रीलिङ्ग-पाठे इक्षोः छाया इति विग्रहः, अन्यथा बहुत्वे नपुंसकत्वप्रसङ्गात् । शालीन् गोपायन्ति रक्षन्तीति शालिगोप्यः सस्यपालिकाः स्त्रियः । कर्मण्यण्, "टिड्ढाणञ्" इत्यादिना ङीप् । गोप्तुः रक्षकस्य तस्य रघोः गुणेभ्यः उदयः यस्य तत् गुणोदयं गुणोत्पन्नम् आकुमारं कुमारात् आरभ्य कथोद्घातः कथारम्भः यस्य तत् कुमारैरपि स्तूयमानम् इत्यर्थः यशः जगुः गायन्ति स्म । अथवा कुमारस्य सतः रघोः याः कथाः इन्द्रविजयादयः ताः आरभ्य आकुमारकथम् । तत्राप्यभिविधौ अव्ययीभावः । आकुमारकथम् उद्घातः यस्मिन् कर्मणि, गानक्रियाविशेषणमेतत् । "स्यादभ्यादानमुद्घात आरम्भः" इत्यमरः । आकुमारकथोद्भूतमिति पाठे कुमारस्य सतः तस्य कथाभिः चरितैः उद्भूतं यत् यशः तत् यशः आरभ्य यशः जगुः इति व्याख्येयम् ॥ २० ॥

प्रससादोदयादम्भः(१)कुम्भयोनेर्महौजसः (२)।
रघोरभिभवाशङ्कि चुक्षुभे द्विषतां मनः ॥ २१ ॥
मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः।
लीलाखेलमनुप्रापुः महोक्षास्तस्य विक्रमम्(३)॥२२॥

प्रससादेति। महौजसः कुम्भयोनेः अगस्त्यस्य। "अगस्त्यः कुम्भसम्भवः" इत्यमरः। उदयात् अम्भः प्रससाद प्रसन्नं बभूव, महौजसः रघोः उदयात् अभिभवाशङ्कि द्विषतां मनः चुक्षुभे कालुष्यं प्राप। "अगस्त्योदये जलानि प्रसीदन्ति" इत्यागमः॥२१॥

मदेति। मदोदग्राः मदोद्धताः ककुदेषामस्तीति ककुद्मन्तः महाककुदः इत्यर्थः। यवादित्वात् मकारस्य वत्वाभावः। सरितां कूलानि उद्रुजन्तीति कूलमुद्रुजाः। उदि कूले "रुजिवहोरिति" खश्प्रत्ययः, "अरुर्द्विषेत्यादिना" मुमागमः। महान्तः उक्षाणः महोक्षाः। "अचतुरेत्यादिना" निपातनात् अकारान्तः। लीलाखेलं विलाससुभगं तस्य रघोः उत्साहवतः वपुष्मतः परभञ्जकस्य विक्रमं शौर्य्यम् अनुप्रापुः अनुचक्रुः ॥ २२ ॥

---

(१) श्रावणभाद्रपदयोरन्तरा अगस्त्यस्योदयो भवति।

(२) पुरा किल इक्ष्वाकुपुत्रेण निमिराजेन प्रतिशप्तो वसिष्ठः कामभूर्त्यो मित्रावरुणयोः शरीरं प्रविवेश। ततस्तयोरुर्वशीदर्शनात् चरितस्य तयोस्तेजसः कुम्भे पतन अगस्त्योऽजनिष्टेति पुराणवार्त्ता।

(३) लीलाखेलं विलासमन्थरमिति वल्लभः। लीलया निरायासेन खेलं विचलद्रघोर्विक्रममनुगताः। पक्षपक्षे तु...विक्रमं गतिविशेषम्। रघुविक्रमोऽपि महोदग्रककुद्माजनितं मदोक्षः; यात्रायां करितुरगादिखुराभिघातेन सरितां कूलभेदं भवतीति हिमकरः।

प्रसवैः सप्तपर्णानां मदगन्धिभिराहताः ।
असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः (१) ॥ २३ ॥
सरितः कुर्व्वती गाधाः पथश्चाश्यानकर्द्दमान् ।
यात्रायै चोदयामास तं शक्तेः प्रथमं शरत् ॥ २४ ॥

प्रसवैरिति । मदस्य इव गन्धः येषां तैः मदगन्धिभिः । "उपमानाच्च" इति समासान्तः इकारः । सप्तपर्णानां वृक्षविशेषाणाम् । "सप्तपर्णो विशालत्वक् शारदो विषमच्छदः" इत्यमरः । प्रसवैः पुष्पैः आहताः तस्य रघोः नागाः गजाः । "गजेऽपि नागमातङ्गौ" इत्यमरः । असूयया इव आहतिनिमित्तया स्पर्द्धया इव सप्तधा एव प्रसुस्रुवुः मदं वहुः । प्रतिगजगन्धाभिमानात् इति भावः । "करात् कटाभ्यां मेढ्राच्च नेत्राभ्याञ्च मदस्रुतिः" इति पालकाव्ये । करात् नासारन्ध्राभ्याम् इत्यर्थः ॥ २३ ॥

सरित इति । सरितः गाधाः सुप्रतराः कुर्व्वती पथः मार्गान् च आश्यानकर्द्दमान् शुष्कपङ्कान् कुर्व्वती । संयोगादेरातो धातोर्यण्वत इति श्यतेर्निष्ठातस्य नत्वम् । शरत् शरदृतुः तं रघुं शक्तेः उत्साहशक्तेः प्रथमं प्राक् यात्रायै दण्डयात्रायै (२) चोदयामास प्रेरयामास । प्रभावमन्त्रशक्तिसम्पन्नस्य शरत् स्वयमुत्साहमुत्पादयामास इत्यर्थः ॥ २४ ॥

---

(१) "क्षरन्ति मदवारि:" इति वल्लभः ।

(२) दण्डयात्रा is a warlike expedition. See Williams' Dic.

तस्मै सम्यक् हुतो वह्निः वाजिनीराजनाविधौ(१)।
प्रदक्षिणार्च्चिर्व्याजेन हस्तेनेव जयं ददौ ॥ २५ ॥
स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः।
षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥२६॥

तस्मा इति। वाजिनाम् अश्वानां नीराजनाविधौ नीराजनाख्ये शान्तिकर्म्मणि सम्यक् विधिवत् हुतः होमसमिद्धः वह्निः प्रगता दक्षिणं प्रदक्षिणम्। तिष्ठद्गुप्रभृतित्वात् अव्ययीभावः। प्रदक्षिणं या अर्च्चिः ज्वाला तस्याः व्याजेन हस्तेन इव तस्मै जयं ददौ। उक्तमाहवयात्रायाम्, "इद्धः प्रदक्षिणगतो हुतभुक् नृपस्य धात्रीं समुद्ररशनां वशगां करोति" इति। वाजिग्रहणं गजादीनामप्युपलक्षणं तेषामपि नीराजनाविधानात् ॥ २५ ॥

स इति। गुप्तौ मूलं स्वनिवासस्थानं प्रत्यन्तः प्रान्तदुर्गश्च येन सः गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिः उद्धृतपृष्ठशत्रुः सेनया रक्षितपृष्ठदेशो वा अयान्वितः शुभदैवान्वितः। "अयः शुभावहो विधिः" इत्यमरः। स रघुः षड्विधं मौलभृत्यादिरूपं बलं सैन्यम्। "मौलं भृत्यः सुहृच्छ्रेणी द्विषदाटविकं बलम्" इति कोषः। आदाय दिशां जिगीषया जेतुमिच्छया प्रतस्थे चचाल ॥ २६ ॥

(१) नीरस्य प्रसादकस्य अजना वीपीऽन, निःशेषेण राजनात् वा। पञ्चनीराजनं कुर्य्यात् प्रथमं दीपमालया। द्वितीयं सोदकाब्जेन तृतीयं धौतवाससा। चूताश्वत्थादिपत्रैश्च चतुर्थं परिकीर्त्तितम्। पञ्चमं प्रणिपातेन साष्टाङ्गेन यथाविधि। इति। See Professor Tarkavachaspati's Dic.

अवाकिरन् वयोवृद्धाः तं लाजैः पौरयोषितः ।
पृषतैर्मन्दरोद्धूतैः क्षीरोर्म्मय इवाच्युतम्(१) ॥ २७ ॥
स ययौ प्रथमं प्राचीं तुल्यः प्राचीनवर्हिषा(२) ।
अहिताननिलोद्धूतैः तर्ज्जयन्निव केतुभिः ॥ २८ ॥

अवाकिरन्निति । वयोवृद्धाः पौरयोषितः तं रघुं प्रयातं लाजैः आचारलाजैः, मन्दरोद्धूतैः पृषतैः विन्दुभिः क्षीरोर्म्मयः क्षीरसमुद्रोर्म्मयः अच्युतं विष्णुम् इव अवाकिरन् पर्य्यक्षिपन् ॥२७॥

स इति । प्राचीनवर्हिर्नाम कश्चिन्महाराजः इति केचित् । प्राचीनवर्हिः इन्द्रः । "पर्ज्जन्यो मघवा वृषा हरिहयः प्राचीनवर्हिस्तथा" इति इन्द्रपर्य्यायेषु हलायुधाभिधानात् । तेन तुल्यः स रघुः अनिलेन अनुकूलवातेन उद्धूतैः केतुभिः ध्वजैः अहितान् रिपून् तर्ज्जयन् इव भर्त्सयन् इव । तर्ज्जि भर्त्सोरनुदात्तेऽपि च चिडोङित्करणेनानुदात्तेन्निमित्तस्यात्मनेपदस्यानित्यत्वज्ञापनात् परस्मैपदमिति वामनः । प्रथमं प्राचीं दिशं ययौ ॥ २८ ॥

---

(१) समुद्रमन्थनकाले मन्दराधिष्ठितमित्यर्थः ।

"In the midst of the milky sea, Hari himself in the form of a tortoise, served as a pivot for the mountain (Mandara) as it was whirled around. The holder of the mace and discus was present, in other forms amongst the gods and demons, assisted to drag the monarch of the serpent race; and in another vast body, he sat upon the summit of the mountain. With one portion of his energy, unseen by gods or demons, he sustained the serpent king, and, with another infused vigour into the gods." See Wilson's V. P.

(२) अत्रिवंशे समुत्पन्नो ब्रह्मयोनिः सनातनः । प्राचीनवर्हिर्भगवान् । इति महाभारते । "प्राचीनाग्राः कुशास्तस्य पृथिव्यां जनमेजय । प्राचीनवर्हिर्भगवान्

रजोभिः स्यन्दनोद्धूतैः गजैश्च घनसन्निभैः ।
भुवस्तलमिव व्योम कुर्व्वन् व्योमेव भूतलम् ॥२९॥
प्रतापोऽग्रे(१) ततः शब्दः परागस्तदनन्तरम् ।
ययौ पश्चाद्रथादीति चतुस्कन्धेव सा चमूः ॥३०॥
मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः ।

रजोभिरिति। किं कुर्व्वन् स्यन्दनोद्धूतैः रजोभिः घनसन्निभैः वर्णतः क्रियातः परिमाणतश्च मेघतुल्यैः गजैश्च यथाक्रमं व्योम आकाशं भुवः तलम् इव भूतलञ्च व्योम इव कुर्वन् ययौ इति पूर्वेण सम्बन्धः ॥ २९ ॥

प्रताप इति। अग्रे प्रतापः तेजोविशेषः। "स प्रभावः प्रतापश्च यत्तेजः कोशदण्डजम्" इत्यमरः। ततः शब्दः सेनाकलकलः, तदनन्तरं परागः धूलिः। "परागः पुष्परजसि धूलिस्नानीययोरपि" इति विश्वः। पश्चात् रथादि रथाश्वादि चतुरङ्गबलम् इति इत्थं चतुस्कन्धा इव चतुर्व्यूहा इव। "स्कन्धः प्रकाण्डे कायांशे विज्ञानादिषु पञ्चसु। नृपे समूहे व्यूहे च" इति हैमः। सा चमूः ययौ। रथानीकमिति पाठे इतिशब्दाध्याहारेण योज्यम् ॥ ३० ॥

मरुविति। स रघुः शक्तिमत्त्वात् समर्थत्वात् मरुपृष्ठानि निर्जलस्थानानि। "समानौ मरुधन्वानौ" इत्यमरः। उदम्भांसि

---

पधिषीगसस्तारिच.। यथेदं दैवयजनमद्रयश्च विसन्वतः। मापीमार्पैः कुर्वतामोदामृतं मद्धुधावलम्।" इति भागवतम्।

(१) "अग्रे त्वा भयन्नमवार्णा प्रताप" इति मल्लः।

विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार(१) सः ॥३१॥
स सेनां महतीं कर्षन् पूर्वसागरगामिनीम् ।
बभौ हरजटाभ्रष्टां(२) गङ्गामिव भगीरथः ॥३२॥
त्याजितैः फलमुत्खातैः भग्नैश्च बहुधा नृपैः ।

उद्भूतजलानि चकार, नाव्याः नौभिः तार्य्याः नदीः । "नाव्यं त्रिलिङ्गं नौतार्य्ये" इत्यमरः । नौवयोधर्म्मविषमूलेत्यादिना यत्प्रत्ययः । सुप्रतराः सुखेन तार्य्याः चकार, विपिनानि अरण्यानि । "अटव्यरण्यं विपिनम्" इत्यमरः । प्रकाशानि निर्द्दृष्टानि चकार । मनुष्कर्षात् तस्यागम्यं किमपि नासीत् इति भावः ॥ ३१ ॥

स इति । महतीं सेनां पूर्वं सागरगामिनीं कर्षन् सः रघुः हरस्य जटाभ्यः भ्रष्टां गङ्गां कर्षन् । सापि पूर्वसागरगामिनी । भगीरथः इव बभौ । भगीरथो नाम कश्चित् कपिलदग्धानां सागराणां नप्ता तत्पावनाय हरकिरीटात् गङ्गाप्रवर्त्तयिता राजा यत्सम्बन्धाद्गङ्गा च भागीरथीति गीयते ॥३२॥

त्याजितैरिति । "फलं फले धने बीजे निष्पत्तौ भोगलाभयोः" इति केशवः । फलं लाभं तच्चपचे प्रसयश्च त्याजितैः ।

(1) Commenting on the word शक्तिमत्त्वात्, Sankara says that "by means of his supernatural powers; *i e* without having had *to use human efforts such as digging out wells, building* bridges &c" It is not necessary, however, to put such a forced construction on that expression.

(2) A certain part of the Himalaya higher up than Hardwar still goes by the name of Harajata.

तस्यासीदुल्वणो मार्गः पादपैरिव दन्तिनः ॥ ३३ ॥
पौरस्त्यानेवमाक्रामन् तांस्तान् जनपदान् जयी ।
प्राप तालीवनश्याममुपकण्ठं महोदधेः ॥ ३४ ॥
अनम्राणां समुद्धर्त्तुः तस्मात् सिन्धुरयादिव ।
आत्मा संरक्षितः सुह्मैः(१)वृत्तिमाश्रित्य वैतसीम् ॥३५

त्यजेर्ण्यन्तात् द्विकर्म्मकात् अप्रधाने कर्म्मणि क्तः। उत्खातैः स्वपदात् च्यावितैः अन्यत्र उत्पाटितैः बहुधा भग्नैः रणे जितैः अन्यत्र छिन्नैः नृपैः पादपैः दन्तिनः गजस्य इव तस्य रघोः मार्गः उल्वणः प्रकाशः आसीत्। "प्रकाशं प्रकटं स्पष्टम् उल्वणं विशदं स्फुटम्" इति यादवः ॥ ३३ ॥

पौरस्त्यानिति । जयी जयनशीलः। जिदृक्षिविश्रीत्यादिना इनिप्रत्ययः। स रघुः एवं पुरः भवान् पौरस्त्यान् प्राच्यान्। "दक्षिणापश्चात्पुरसस्त्यक्" इति त्यक्प्रत्ययः। तान् तान् सर्व्वान् इत्यर्थः। वीप्सायां द्विरुक्तिः। जनपदान् देशान् आक्रामन् तालीवनैः श्यामं महोदधेः उपकण्ठम् अन्तिकं प्राप ॥३४॥

अनम्राणामिति । अनम्राणाणाम् । कर्म्मणि षष्ठी । समुद्धर्त्तुः उन्मूलयितुः तस्मात् रघोः सकाशात् । "भीत्रार्थानां भयहेतुः" इत्यपादानत्वात् पञ्चमी सिन्धुरयात् नदीवेगात् इव सुह्मैः

(१) सुह्मैः सुह्मदेशीयैः राजभिरिति बाधः। The country of the Suhmas would seem to correspond to the modern Tripura and Aracan

वङ्गानुत्खाय(१) तरसा नेता नौसाधनोद्यतान् ।
निचखान जयस्तम्भान् गङ्गास्रोतोऽन्तरेषु सः ॥३६॥
आपादपद्मप्रणताः कलमा इव ते रघुम् ।
फलैः संवर्द्धयामासुः उत्खातप्रतिरोपिताः ॥ ३७ ॥

सुह्मदेशीयैः। सुह्मादयः शब्दाः जनपदवचनाः क्षत्रियमाचक्षते। वैतसीं वैतसः सम्बन्धिनीं वृत्तिं प्रणतिम् इत्यर्थः आश्रित्य आत्मा संरक्षितः। अत्र कौटिल्यः, "बलीयसाभियुक्तो दुर्बलः सर्वत्रानुप्रणतो वैतसं धर्ममातिष्ठेत" इति ॥ ३५ ॥

वङ्गानिति। नेता नायकः सः रघुः नौभिः साधनैः उद्यतान् सन्नद्धान् वङ्गान् राज्ञः तरसा बलेन। "तरसी बलरंहसी" इति यादवः। उत्खाय उन्मूल्य गङ्गायाः स्रोतसां प्रवाहाणाम् अन्तरेषु द्वीपेषु जयस्तम्भान् निचखान स्थापितवान् इत्यर्थः ॥ ३६ ॥

आपादेति। आपादपद्मम् अङ्घ्रिपद्मपर्यन्तं प्रणताः अत एव उत्खाताः पूर्वमुद्धृताः अपि प्रतिरोपिताः पश्चात् स्थापिताः ते वङ्गाः कलमाः इव शालिविशेषाः इव। "शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी" इत्यमरः। तेऽपि आपादपद्मं पादपद्ममूलपर्यन्तं प्रणताः। "पादो बुध्नतुरीयांशशैलप्रत्यन्तपर्वताः" इति विश्वः। उत्खातप्रतिरोपिताश्च। रघुं फलैः धनैः अन्यत्र शस्यैः संवर्द्धयामासुः। "फलं फले धने बीजे निष्पत्तौ भोगलाभयोः। शस्ये" इति केशवः ॥ ३७ ॥

(1) (वङ्ग) means here the people of East Bengal.

स तीर्त्वा कपिशां(१) सैन्यैः बद्धद्विरदसेतुभिः।
उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ ॥ ३८ ॥
स प्रतापं महेन्द्रस्य(२) मूर्ध्नि तीक्ष्णं न्यवेशयत्।
अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः ॥ ३९ ॥

स इति। स रघुः बद्धाः द्विरदाः एव सेतवः यैः तैः सैन्यैः कपिशां नाम नदीम्। करभाम् इति केचित् पठन्ति। तीर्त्वा उत्कलैः राजभिः आदर्शितपथः सन्दर्शितमार्गः सन् कलिङ्गाभिमुखः ययौ ॥ ३८ ॥

स इति। स रघुः महेन्द्रस्य कुलपर्वतविशेषस्य। "महेन्द्रो मलयः सह्यः शक्तिमान् ऋक्षपर्वतः। विन्ध्यश्च पारिपात्रश्च सप्तैते कुलपर्वताः" ॥ इति विष्णुपुराणात्। मूर्ध्नि तीक्ष्णं दुःसहं प्रतापं यन्ता सारथिः गम्भीरवेदिनः द्विरदस्य गजविशेषस्य मूर्ध्नि तीक्ष्णं निशितम् अङ्कुशम् इव न्यवेशयत् निहितवान्। "त्वग्भेदाच्छोणितस्रावात् मांसस्य क्रथनादपि, आत्मानं यो न जानाति स स्याद्गम्भीरवेदिता ॥" इति राजपुत्रीये। "चिर-

(1) The Kapisa may be identical with the Suvarnarekha, Kalinga may correspond with the Northern Sircars of the present day. Professor Wilson says Kalinga is the sea-coast west of the mouths of the Ganges, with the upper part of the Coromandal Coast.

(2) Mahendra is probably the name of that chain of hills, that extends from Orissa and the northern Sircars to Gondowana, part of which near Ganjam, is still called Mahindra malei, or hills of Mahendra. See V. P. II, 3.1

प्रतिजग्राह कालिङ्गः तमस्त्रैर्गजसाधनः ।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥ ४० ॥
द्विषां विषह्य काकुत्स्थः तत्र नाराचदुर्दिनम् ।
सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम् (१) ॥४१॥
ताम्बूलीनां दलैस्तत्र(२) रचितापानभूमयः ।
नारिकेलासवं योधाः शात्रवञ्च पपुर्यशः ॥ ४२ ॥

कालेन यो वेत्ति शिक्षां परिचितामपि । गम्भीरवेदी विज्ञेयः स गजो गजवेदिभिः ॥" इति मृगचर्म्मीये ॥ ३९ ॥

प्रतीति । गजसाधनः सन् कालिङ्गः कलिङ्गानां राजा । वृद्धेत्कोसलाजादञ्ञ्यङ् मगधकलिङ्गेत्यादिना अण्प्रत्ययः अस्त्रैः आयुधैः तं रघुं पक्षाणां छेदे उद्यतम् उद्युक्तं शक्रं शिलावर्षी पर्व्वतः इव प्रतिजग्राह प्रत्यभियुक्तवान् ॥ ४० ॥

द्विषामिति । काकुत्स्थः रघुः तत्र महेन्द्राद्रौ द्विषां नाराचदुर्दिनं नाराचानां वाणविशेषाणां दुर्दिनं लक्षणया वर्षमुच्यते, विषह्य सहित्वा सत् यथाशास्त्रं मङ्गलस्नातः इव विजयमङ्गलार्थम् अभिषिक्तः इव जयश्रियं प्रतिपेदे प्राप । "यत्तु सर्व्वौषधिस्नानं तन्माङ्गल्यमुदीरितम्" इति यादवः ॥४१॥

ताम्बूलीनामिति । तत्र महेन्द्राद्रौ, युध्यन्ते इति योधाः । पचाद्यच् । रचिताः कल्पिताः आपानभूमयः पानयोग्यप्रदेशाः

(१) रिपुशरवर्षणदुर्दिनमन्तरं रघुस्तेन स्नात इव सन्दर्शः इति हेमाद्रिः ।
(२) ताम्बूलीनां दलैः पत्रैः रचिता निर्म्मिता आवृता इति यावत् पानभूमयः इति भरत ।

गृहीतप्रतिमुक्तस्य स धर्म्मविजयी (१)नृपः।
श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम् ॥४३॥
ततो वेलातटेनैव फलवत्पूगमालिना।
अगस्त्याचरितामाशाम् अनाशास्यजयो ययौ ॥४४॥

यैः ते तथोक्ताः सन्तः नारिकेलासवं नारिकेलमद्यं ताम्बूलीनां नागवल्लीनां दलैः पपुः तत्र विजह्रुः इत्यर्थः शालवं यश्य पपुः जह्रुः इत्यर्थः ॥ ४२ ॥

गृहीतेति। धर्म्मविजयी धर्म्मार्थं विजयशीलः सः नृपः रघुः गृहीतश्चासौ प्रतिमुक्तः तस्य महेन्द्रनाथस्य कालिङ्गस्य श्रियं जहार धर्म्मार्थम् इति भावः। मेदिनीं तु न जहार शरणागतवात्सल्यात् इति भावः ॥ ४३ ॥

तत इति। ततः प्राचीविजयानन्तरं फलवत्पूगमालिना फलितक्रमुकश्रेणीमता। व्रीह्यादित्वात् इनिप्रत्ययः। वेलायाः समुद्रकूलस्य तटेन उपान्तेनैव अगस्त्येन आचरिताम् आशां दक्षिणां दिशम् अनाशास्यजयः अयत्नसिद्धत्वात् अप्रार्थनीयजयः सन् ययौ। "अगस्त्यो दक्षिणामाशाम् आश्रित्य नभसि स्थितः। वरुणस्यात्मजो योगी विन्ध्यवातापिमर्द्दनः" ॥ इति ब्रह्मपुराणे ॥ ४४ ॥

(१) "धर्म्मविजयी लोभविजयी असुरविजयी चेति त्रिविधो राजा। यः शत्रुं निर्जित्य तदीयां प्रणतिमेव गृहीत्वा शत्रुं तस्मिन्नेव स्थाने स्थापयति स धर्म्मविजयी। यः शत्रुं निर्जित्य तदीयां श्रियं मेदिनीञ्च गृहीत्वा प्राणैर्न वियुनक्ति स लोभविजयी। यः शत्रुं हत्वा तदीयां श्रियं मेदिनीञ्च गृह्णाति स असुरविजयी" इति मल्लः।

स सैन्यपरिभोगेण गजदानसुगन्धिना ।
कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत् ॥४५॥
बलैरध्युषितास्तस्य विजिगीषोर्गताध्वनः ।
मारीचोद्भ्रान्तहारीता मलयाद्रेरुपत्यकाः ॥४६॥

स इति। स रघुः गजानां दानेन मदेन सुगन्धिना सुरभिगन्धिना। गन्धस्येत्यादिना इकारादेशः समासान्तः। यद्यपि गन्धस्येति तदेकान्तग्रहणं कर्त्तव्यमिति नैसर्गिकगन्धविवक्षायामेवेकारादेशस्तथापि निरङ्कुशाः कवयः। तथा माघकाव्ये "ववुरयुक्छदगुच्छसुगन्धयः सततगास्ततगानगिरोऽलिभिः", नैषधे च "अपां हि तृप्ताय न वारिधारा, स्वादुः सुगन्धिः स्वदते तुषारा" इति। न कर्मधारयान्मत्वर्थीय इति निषेधादिनिप्रत्ययपक्षोऽपि जघन्य एव। सेनायां समवेताः सैन्याः। "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते" इत्यमरः। सेनाया वेति ण्यप्रत्ययः। तेषां परिभोगेण कावेरीं नाम सरितं सरितां पत्युः समुद्रस्य शङ्कनीयां अविश्वसनीयामिव अकरोत्। सम्भोगलिङ्गदर्शनाद्भर्तुरविश्वासो भवति इति भावः॥ ४५॥

बलैरिति। विजिगीषोः विजेतुमिच्छोः गताध्वनः तस्य रघोः बलैः सैन्यैः। "बलं शक्तिर्बलं सैन्यम्" इति शाश्वतः। मारीचेषु मरीचवनेषु उद्भ्रान्ताः परिभ्रान्ताः हारीताः पक्षिविशेषाः यासु ताः। "तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः" इत्यमरः। मलयाद्रेः उपत्यकाः आसन्नभूमयः। "उप-

ससञ्जुरश्वक्षुण्णानाम् एलानामुत्पतिष्णवः ।
तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः ॥ ४७ ॥
भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम् ।
नास्रसत् करिणां ग्रैवं त्रिपदीच्छेदिनामपि(१) ॥४८॥

त्यकाद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका" इत्यमरः । "उपाधिभ्यां त्यकन्" इत्यादिना त्यकन्प्रत्ययः । अध्युषिताः, उपत्यकासु उषितम् इत्यर्थः । "उपान्वध्याङ्वसः" इति कर्मत्वम् ॥ ४६ ॥

ससञ्जुरिति । अश्वैः क्षुण्णानाम् एलानाम् एलालतानाम् उत्पतिष्णवः उत्पतनशीलाः । अलं कृञित्यादिना इष्णुच्प्रत्ययः । फलरेणवः फलरजांसि तुल्यगन्धेषु समानगन्धिषु । सर्वधनीतिवदिन्नन्तो बहुव्रीहिः । मत्तेभानां कटेषु ससञ्जुः सक्ताः । "गजगण्डे कटीकटौ" इति कोषः ॥ ४७ ॥

भोगीति । चन्दनानां चन्दनद्रुमाणां भोगिवेष्टनमार्गेषु सर्पवेष्टनात् निम्नेषु समर्पितं सञ्जितं त्रिपदीच्छेदिनां पादशृङ्खलच्छेदकनाम् अपि । "त्रिपदी पादबन्धनम्" इति यादवः । करिणां ग्रीवासु भवं ग्रैवं कण्ठबन्धनम् । "ग्रीवाभ्योऽण् च" इति अण्प्रत्ययः । नास्रसत् न स्रस्तमभूत् । स्रंसु अधः पतने इति परस्मैपदे पुषादित्वात् च्लेरङ्, "अनिदिताम्" इति नकारलोपः ॥ ४८ ॥

(१) "त्रिपदी हिन्दमीति त्रिपदीच्छेदिनमेषां सुबादयस्त्वाद्यादिनामपि । इहा वर्तितस्य जनस्य पदत्रयावस्था त्रिपदीत्युच्यते" इति मल्लः ।

दिशि मन्दायते तेजः दक्षिणस्यां रवेरपि।
तस्यामेव रघोः पाण्ड्याः प्रतापं(१)न विषेहिरे ॥४९॥
ताम्रपर्णीसमेतस्य(२) मुक्तासारं महोदधेः।
ते निपत्य ददुस्तस्मै यशः स्वमिव सञ्चितम् ॥५०॥

दिशीति। दक्षिणस्यां दिशि रवेः अपि तेजः मन्दायते मन्दं भवति। लोहितादित्वात् क्यष्प्रत्ययः, "वा क्यषः" इत्यात्मनेपदम्। दक्षिणायने तेजोमान्द्यात् इति भावः, तस्याम् एव दिशि पाण्ड्याः पाण्डूनां जनपदानां राजानः पाण्ड्याः। पाण्डोर्ड्यण् वक्तव्यः। रघोः प्रतापं न विषेहिरे न सोढवन्तः। सूर्यविजयिनोऽपि विजितवानिति नायकस्य महानुत्कर्षो गम्यते ॥ ४९ ॥

ताम्रपर्णीति। ते पाण्ड्याः ताम्रपर्ण्या नद्या समेतस्य सङ्गतस्य महोदधेः सम्बन्धि सञ्चितं मुक्तासारं मौक्तिकवरम्। "सारो बले स्थिरांशे च न्याय्ये क्लीवं वरे त्रिषु" इत्यमरः। स्वं स्वकीयं सञ्चितं यशः इव तस्मै रघवे निपत्य प्रणिपत्य ददुः।

(1) The country of the Pandyas lies to the east of Travancore and is identical with the present districts of Dindigal and Tinnivelly.

(2) Though noted for its pearls, it is a small rivulet flowing past Pallamacotta and falling into the gulf of Mannar. It is at the southern extremity of the Western Ghats, in the district of Tinnevelly. The Cael of Marco Polo, the most important city and seaport on the eastern coast of India during the Middle Ages, is identified as Kayal at the mouth of the Tamraparni. Another important city Korkei stands on this river. The

स निविश्य यथाकामं तटेष्वालीनचन्दनौ।
स्तनाविव दिशस्तस्याः शैलौ मलयदर्दुरौ(१) ॥५१॥
असह्यविक्रमः सह्यं दूरान्मुक्तमुदन्वता।
नितम्बमिव मेदिन्याः स्रस्तांशुकमलङ्घयत् ॥ ५२ ॥

यशसः शुभ्रत्वादौपम्यम्। ताम्रपर्णीसङ्गमे मौक्तिकोत्पत्तिरिति प्रसिद्धम् ॥ ५० ॥

स इति। असह्येति च। युग्ममेतत्। असह्यविक्रमः स रघुः तटेषु सानुषु आलीनचन्दनौ व्याप्तचन्दनद्रुमौ। "गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्" इत्यमरः। स्तनपक्षे प्रान्तेषु व्याप्तचन्दनानुलेपौ तस्याः दक्षिणस्याः दिशः स्तनौ इव स्थितौ मलयदर्दुरौ नाम शैलौ यथाकामं यथेच्छं निविश्य उपभुज्य। "निर्वेशो भृतिभोगयोः" इत्यमरः। उदकानि अस्य सन्तीति उदन्वान् उदधिः। "उदन्वानुदधौ च" इति निपातः। उदन्वता दूरात् मुक्तं दूरतः त्यक्तम्। "स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन" इति समासः। "पञ्चम्याः स्तोकादिभ्यः" इत्यलुक्। स्रस्तांशुकं मेदिन्याः नितम्बम् इव स्थितं सह्यं सह्याद्रिम् अलङ्घयत् प्राप्तः अतिक्रान्तो वा ॥ ५१ ॥ ५२ ॥

---

Greeks called it Kolkhoy, and came to it to purchase pearls, certainly soon after the Christian era. To this Korkei, all native traditions pointed as the cradle of South Indian civilization the place where the three brothers Cheran, Cholan, and Pandyan were said to have been born and brought up, and *from* whence they set forth to dynastics and kingdoms—or, as might more readily be admitted, the place where the rule of the Pandyas commenced and from whence they afterwards migrated to Madura.

(१) मलय is a chain of hills reckoned as one of the Kulachalas and is the southern *portion of the* Western Ghats.

तस्यानीकैर्विसर्पद्भिः अपरान्तजयोद्यतैः (१) ।
रामास्त्रोत्सारितोऽप्यासीत्(२)सह्यलग्नइवार्णवः॥५३
भयोत्सृष्टविभूषाणां तेन केरलयोषिताम्(३) ।
अलकेषु चमूरेणुः चूर्णप्रतिनिधीकृतः ॥ ५४ ॥
मुरलामारुतोद्धूतम् अगमत् कैतकं रजः ।

सम्प्रति प्रतीचीं दिशमभियायाविल्याह, तस्येति । अपरान्तानां पाश्चात्यानां जये उद्यतैः उद्युक्तैः । "अपरान्तास्तु पाश्चात्याः ते च सूर्पारकादयः" इति यादवः । विसर्पद्भिः गच्छद्भिः तस्य रघोः अनीकैः सैन्यैः । "अनीकं तु रणे सैन्ये" इति विश्वः । अर्णवः रामस्य जामदग्न्यस्य अस्त्रैः उत्सारितः परिसारितः अपि सह्यलग्नः इव आसीत् । सैन्यं द्वितीयोऽर्णव इव अदृश्यत इति भावः ॥ ५३ ॥

भयेति । तेन रघुणा भयेन उत्सृष्टविभूषाणां परिहृतभूषणानां केरलयोषितां केरलाङ्गनानाम् अलकेषु चमूरेणुः सेनारजः चूर्णस्य कुङ्कुमादिरजसः प्रतिनिधीकृतः । एतेन योषितां पलायनं चमूनाञ्च तदनुधावनं ध्वनयते ॥ ५४ ॥

मुरलेति । मुरला नाम केरलदेशेषु काचित् नदी । मुरवीति केचित् पठन्ति । तस्याः मारुतेन उद्धूतम् उत्थापितं

(१) "अपरान्ताः कोङ्कणाः" इति वल्लभः ।

(२) Sahya is also a Kulachala identical with the northern portion of the western Ghats.

(३) "Kerala was the ancient name of the whole tract comprising the districts of Canara, Cochin and Travancore."

तद्योधवारवाणानाम् अयत्नपटवासताम्(१) ॥५५॥
अभ्यभूयत वाहानां चरतां गात्रशिञ्जितैः ।
वर्म्मभिः पवनोद्धूतराजतालीवनध्वनिः ॥ ५६ ॥
खर्ज्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु ।
कटेषु करिणां पेतुः पुन्नागेभ्यः शिलीमुखाः ॥५७॥

कैतकं केतकसम्बन्धि रजः तद्योधवारवाणानां रघुभटकञ्चुकानाम्। "कञ्चुको वारवाणोऽस्त्री" इत्यमरः। अयत्नपटवासताम् अयत्नसिद्धवस्त्रवासनाद्रव्यत्वम् अगमत्। "पिष्टातः पटवासकः" इत्यमरः ॥ ५५ ॥

अभ्यभूयतेति। चरतां गच्छतां वाहानां वाजिनाम्। "वाजिवाहार्व्वगन्धर्व्वहयसैन्धवसप्तयः" इत्यमरः। गात्रशिञ्जितैः गात्रेषु शब्दायमानैः। कर्त्तरि क्तः। सञ्जितैरिति वा पाठः। सजतेर्ण्यन्तात् कर्म्मणि क्तः। वर्म्मभिः कवचैः पवनेन उद्धूतानां कम्पितानां राजतालीवनानां ध्वनिः अभ्यभूयत तिरस्कृतः। मर्म्मरः इति पाठे वाहानां गात्रशिञ्जितैः गात्रध्वनिभिः इत्यर्थः। मर्म्मरः मरमरायमाणः इति ध्वनेर्विशेषणम् ॥५६॥

खर्ज्जूरीति। खर्ज्जूरीणां तृणद्रुमविशेषाणाम्। "खर्ज्जूरः केतकी ताली खर्ज्जूरी च तृणद्रुमाः" इत्यमरः। स्कन्धेषु प्रकाण्डेषु। "अस्त्री प्रकाण्डः स्कन्धः स्यात् मूलाच्छाखावधिस्तरोः" इत्यमरः। नद्धानां बद्धानां करिणां मदोद्गारेण मदस्रावेण

(१) "अनुमीयप्रभावैः भूषेवाद्यैर्न संयुतः। पटवासः प्रचीरस्थं [illegible] [illegible]", इति यादवः।

अवकाशं किलोदन्वान् रामायाभ्यर्थितो ददौ ।
अपरान्तमहीपालव्याजेन रघवे करम् ॥ ५८ ॥
मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम् ।
त्रिकूटमेव(१)तत्रोच्चैः जयस्तम्भं चकार सः ॥५९॥

सुगन्धिषु । गन्धस्येत्यादिना इकारः । कटेषु गण्डेषु पुन्नागेभ्यः नागकेशरेभ्यः पुन्नागपुष्पाणि विहाय । ल्यब्लोपे पञ्चमी । शिलीमुखाः अलयः पेतुः । "अलिबाणौ शिलीमुखौ" इत्यमरः । ततोऽपि सौगन्ध्यातिशयात् इति भावः ॥ ५७ ॥

अवकाशमिति । उदन्वान् उदधिः रामाय जामदग्न्याय अभ्यर्थितः याचितः सन् अवकाशं स्थानं ददौ, किलेति प्रसिद्धौ । रघवे तु अपरान्तमहीपालव्याजेन करं बलिं ददौ । "बलिहस्तांशवः कराः" इत्यमरः । अपरान्तानां समुद्रमध्यदेशवर्त्तित्वात् तैर्दत्ते करे समुद्रदत्तत्वोपचारः । करदानञ्च भीत्या न तु याञ्चयेति रामाद्रघोरुत्कर्षः ॥ ५८ ॥

मत्तेति । तत्र स रघुः मत्तानाम् इभानां रदनोत्कीर्णानि दन्तक्षतानि एव । भावे क्तः । व्यक्तानि स्फुटानि विक्रमलक्षणानि पराक्रमचिह्नानि विजयवर्णावलिस्थानानि यस्मिन् तं तथोक्तं त्रिकूटम् एव उच्चैः जयस्तम्भं चकार । गाढ़प्रकाशस्त्रिकूटोऽद्रिरेवोत्कीर्णवर्णस्तम्भ इव रघोर्जयस्तम्भोऽभूत् इत्यर्थः ॥ ५९ ॥

---

(1) There were several hills known as Trikuta or "Three-peaked." That which is referred to here is probably a hill in Northern Konkan. It is called मुरेला by वल्लभ।

पारसीकांस्ततो(१) जेतुं प्रतस्थे स्थलवर्त्मना ।
इन्द्रियाख्यानिव रिपून् तत्त्वज्ञानेन संयमी ॥६०॥
यवनीमुखपद्मानां सेहे मधुमदं न सः ।
बालातपमिवाब्जानाम् अकालजलदोदयः ॥६१॥

पारसीकानिति । ततः स रघुः संयमी योगी तत्त्वज्ञानेन इन्द्रियाख्यान् इन्द्रियनामकान् रिपून् इव पारसीकान् राज्ञः जेतुं स्थलवर्त्मना प्रतस्थे न तु निर्दिष्टेनापि जलपथेन समुद्रयानस्य निषिद्धत्वात् (२) इति भावः ॥ ६० ॥

यवनीति । सः रघुः यवनीनां यवनस्त्रीणाम् । जातेरस्त्रीविषयादयोपधादिति ङीष् । मुखानि पद्मानि इव मुखपद्मानि । उपमितसमासः । तेषां मधुना मद्येन यः मदः मदरागः । कार्य्यकारणभावयोरभेदेन निर्देशः । तं न सेहे । कमिव अकाले प्रावृड्व्यतिरिक्ते काले जलदोदयः प्रायेण

(I) The country beyond the western frontiers of India was formerly called Persia of Pars or Fars. The people of Pars are called Parasikas or Paratakas and the word Paradas is used in the Pauranic lists, to represent people, who live beyond the Indus. The Paradas figure as a northern people in the Bengal Recension of the Ramayana. See V. P. vol II. page 183.

(२) कलौ एव समुद्रयानस्य निषिद्धत्वं, नतु त्रेतायामिति टीकाकारोक्तं द्रष्टव्यम् । यदुक्तं वृहन्नारदीये—"समुद्रयातुः स्वीकारः कमण्डलुविधारणं । द्विजानामसवर्णासु कन्यासूपयमस्तथा । देवरेण सुतोत्पत्तिर्मधुपर्के पशोर्वधः । दत्तायाश्चैव कन्याया पुनर्दानं परस्य च । दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ । महाप्रस्थानगमनं गोमेधश्च तथा मखम् । इमान् धर्म्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः" ॥

संग्रामस्तुमुलस्तस्य पाश्चात्यैरश्वसाधनैः ।
शार्ङ्गकूजितविज्ञेयप्रतियोधे रजस्यभूत् ॥ ६२ ॥
भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ॥ ६२ ॥

ग्नह्यपि पद्मविकाशस्याप्रसक्तत्वात् अब्जानां सम्बन्धिनं बाला-तपम् इव(२) । अब्जहितत्वादब्जसम्बन्धित्वं सौरातपस्य ॥ ६१ ॥

संग्राम इति । तस्य रघोः अश्वसाधनैः वाजिसैन्यैः, "साधनं सिद्धिसैन्ययोः" इति हैमः । पश्चाद्भवैः पाश्चात्यैः यवनैः सह । "दक्षिणापश्चात्पुरसस्त्यक्" । सहार्थे तृतीया । शृङ्गाणां विकाराः शार्ङ्गाणि धनूंषि तेषां कूजितैः शब्दैः । "शार्ङ्गं पुनर्धनुषि शार्ङ्गिणः, जये च शृङ्गविहिते चापेऽप्याह विशेषतः" इति केशवः । अथवा शार्ङ्गैः शृङ्गसम्बन्धिभिः कूजितैः विज्ञेयाः अनुमेयाः प्रतियोधाः प्रतिभटाः यस्मिन् तस्मिन् रजसि तुमुलः संग्रामः सङ्कुलम् युद्धम् अभूत् । "तुमुलं रणसङ्कुले" इत्यमरः ॥ ६२ ॥

भल्लेति । सः रघुः भल्लापवर्जितैः बाणविशेषकृत्तैः । "स्नुही-दलफलो भल्लः" इति यादवः । श्मश्रुलैः प्रवृद्धमुखरोमवद्भिः । सिध्मादित्वात् लच्प्रत्ययः । तेषां पाश्चात्यानां शिरोभिः, सरघाभिः मधुमक्षिकाभिः व्याप्तैः । "सरघा मधुमक्षिका" इत्यमरः । क्षुद्राः सरघाः । "क्षुद्रा व्यङ्गा नटी वेश्या सरघा

(२) बालातपदृष्टान्तात् सद्यश्छिन्नानामब्जानां लौहित्येन मधुपानासक्तयवनोष्ठरागस्य साम्यं द्योत्यते ।

अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः।
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥६४॥
विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम्।
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु(१) ॥६५॥

कण्ठकारिका" इत्यमरश्चाख्यातौ। क्षुद्राभिः कृतानि क्षौद्राणि मधूनि। "मधु क्षौद्रं माक्षिकादि" इत्यमरः। "क्षुद्राभ्रमरवटरपादपादञ्" इति संज्ञायामञ्प्रत्ययः। तेषां पटलैः सञ्चयैः इव। "पटलं तिलके नेत्ररोगे छन्दसि सञ्चये। पटिके परिवारे च" इति हैमः। महीं तस्तार आच्छादयामास ॥६३॥

अपनीतेति। शेषाः हतावशिष्टाः अपनीतशिरस्त्राणाः अपसारितशीर्षण्याः सन्तः। "शीर्षकं शीर्षण्यञ्च शिरस्त्रे" इत्यमरः। शरणागतलक्षणमेतत्। तं रघुं शरणं ययुः, तथाहि महात्मनां संरम्भः कोपः। "संरम्भः सम्भ्रमे कोपे" इति विश्वः। प्रणिपातः प्रणतिरेव प्रतीकारः यस्य सः। महतां परकीयमौद्धत्यमेवासह्यं न तु जीवितम् इति भावः ॥६४॥

विनयन्त इति। तस्य रघोः योधाः भटाः आस्तीर्णानि अजिनरत्नानि चर्मश्रेष्ठानि यासु तासु द्राक्षावलयानां भूमिषु "मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च" इत्यमरः मधुभिः द्राक्षाफलप्रकृतिकैर्मद्यैः विजयश्रमं युद्धखेदं विनयन्ते

(1) The vine is grown in Kabul. Hence it seems not improbable, that Kabul was formerly included within the limits of ancient Persia.

ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम् ।
शरैरुस्रैरिवोदीच्यान् उद्धरिष्यन् रसानिव ॥ ६६ ॥
विनीताध्वश्रमास्तस्य सिन्धुतीरविचेष्टनैः ।
दुधुवुर्वाजिनः स्कन्धान् लग्नकुङ्कुमकेसरान् ॥६७॥

ष्म अपनीतवन्तः । "कर्त्तृस्थे चाशरीरे कर्म्मणि" इत्यात्मनेपदं, "लट् स्मे" इति भूतार्थे लट् ॥ ६५ ॥

तत इति । ततः रघुः भास्वान् सूर्यः इव शरैः वाणैः उस्रैः किरणैः इव । "किरणोस्रमयूखांशुगभस्तिघृणिधृष्णयः" इत्यमरः । उदीच्यान् उदग्भवान् नृपान् रसान् उदकानि इव उद्धरिष्यन् कौबेरीं कुबेरसम्बन्धिनीं (कुबेरगुप्तां) दिशम् उदीचीं प्रतस्थे । अनेकेनिवशब्देनेयमुपमा यथाह दण्डी, "एकानेकिवशब्दत्वात् सा वाक्यार्थोपमा द्विधा" इति ॥ ६६ ॥

विनीतेति । सिन्धुर्नाम काश्मीरदेशेषु कश्चिन्नदविशेषः । "देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्" इत्यमरः । सिन्धोः तीरे विचेष्टनैः अङ्गपरिवर्त्तनैः विनीताध्वश्रमाः तस्य "रघोः वाजिनः अश्वाः लग्नाः कुङ्कुमकेसराः कुङ्कुमकुसुमकिञ्जल्काः येषां तान्, यद्वा लग्नकुङ्कुमाः केसराः सटाः येषां तान् । "अथ कुङ्कुमं काश्मीरजन्म" इत्यमरः । "केसरो नागकेसरे, तुरङ्गसिंहयोः स्कन्धकेशेषु बकुलद्रुमे । पुन्नागवृक्षे किञ्जल्के स्यात्" इति हेमः । स्कन्धान् कायान् । "स्कन्धः प्रकाण्डे कायांशे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च" इति हेमः । दुधुवुः कम्पयन्ति स्म ॥ ६७ ॥

तत्र हूणावरोधानां (१)भर्त्तृषु व्यक्तविक्रमम्।
कपोलपाटलादेशि बभूव रघुचेष्टितम्॥ ६८॥
काम्बोजाः(२) समरे सोढुं तस्य वीर्य्यमनीश्वराः।
गजालानपरिक्लिष्टैरक्षोटैः(३)सार्द्धमानताः॥६९॥

तत्रेति। तत्र उदीच्यां दिशि भर्त्तृषु व्यक्तविक्रमं भर्तृवधेन स्फुटपराक्रमम् इत्यर्थः रघुचेष्टितं रघुव्यापारः हूणाः जनपदाख्याः क्षत्रियाः तेषाम् अवरोधाः अन्तःपुरस्त्रियः, तासां कपोलेषु पाटलस्य पाटलिम्नः ताड़नादिकृतारुण्यस्य आदेशि उपदेशकं बभूव। अथवा पाटलः आदेशो आदेष्टा यस्य तत् बभूव स्वयं लेख्याप्यत इत्यर्थः (४)॥ ६८॥

काम्बोजा इति। काम्बोजाः राजानः समरे तस्य रघोः वीर्य्यं प्रभावं। "वीर्य्यं तेजःप्रभावयोः" इति हैमः। सोढुम् अनीश्वराः अशक्ताः सन्तः गजानाम् आलानं बन्धनम्। भावे

(1) Sankara Pandit understands by Hunas the white Huns or Indo Scythians, who settled down in the Punjab and along the Indus at the commencement of the Christian era, forgetting apparently, that the expendition of Raghu occurred many centuries earlier. The coincidence of appellation may be merely accidental See note V P II. 3.

(2) The country of the Kambojas was in the northwestern corner of India. It must have been a hilly elevated tract of land, otherwise that kind of walnut, called अक्षोट from which the Bengali word আখরোট is corrupted, could not have grown there.

तेषां सदश्वभूयिष्ठाः तुङ्गा द्रविणराशयः ।
उपदा विविशुः शश्वत् नोत्सेकाः कोशलेश्वरम् ॥७०॥
ततो गौरीगुरुं शैलम् आरुरोहाश्वसाधनः ।
वर्द्धयन्निव तत्कूटान् उद्धूतैर्धातुरेणुभिः ॥ ७१ ॥
शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसम्भ्रमम् ।

लुटि विभाषा लीयतेरित्यात्वम् । तेन परिक्लिष्टैः परिचितैः अचोटैः हस्तविशेषैः सार्द्धम् आनताः ॥ ६९ ॥

तेषामिति । तेषां काम्बोजानां सद्भिः अश्वैः भूयिष्ठाः बहुलाः तुङ्गाः द्रविणानां हिरण्यानाम् । "हिरण्यं द्रविणं द्युम्नम्" इत्यमरः । राशयः एव उपदाः उपायनानि । "उपायनमुपग्राह्यमुपहारस्तथोपदा" इत्यमरः । कोशलेश्वरं कोशलदेशाधिपतिं तं रघुं शश्वत् असकृत् विविशुः । "मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत् समाः" इत्यमरः । तथापि उत्सेकाः गर्व्वास्तु न विविशुः सत्यपि गर्वकारणे न जगर्व्व इत्यर्थः ॥ ७० ॥

तत इति । ततः अनन्तरम् अश्वसाधनः सन् गौर्य्याः गुरुं पितरं शैलं हिमवन्तम् उद्धूतैः अश्वखुरोद्धूतैः धातूनां गैरिकादीनां रेणुभिः तत्कूटान् तस्य शृङ्गाणि । "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः । वर्द्धयन् इव आरुरोह । उत्पतद्धूलिदर्शनाद्गिरिशिखरवृद्धिभ्रमो जायते इति भावः ॥ ७१ ॥

शशंसेति । तुल्यसत्त्वानां सैन्यैः समानबलानां गुहासु शेरते इति गुहाशयाः तेषाम् । "अधिकरणे शेतेः" इत्यचप्रत्ययः ।

गुहाशयानां सिंहानां परिवृत्यावलोकितम्(१) ॥७२॥

भूर्जेषु मर्म्मरीभूताः कीचकध्वनिहेतवः।
गङ्गाशीकरिणो मार्गे मरुतस्तं सिषेविरे ॥ ७३ ॥

"दरी तु कन्दरो वा स्त्री देवखातबिले गुहा" इत्यमरः। सिंहानां हरीणाम्। "सिंहो मृगेन्द्रः पञ्चास्यो हर्य्यक्षः केशरी हरिः" इत्यमरः। सम्बन्धि परिवृत्य परावृत्य अवलोकितं ग्रीवाभङ्गेनावलोकनं कर्तृ सैन्यघोषे सेनाकलकले सम्भ्रमकारणे सत्यपि असम्भ्रमम् अन्तःक्षोभविरहितम्। नञः प्रसज्यप्रतिषेधेऽपि समास इष्यते। शशंस कथयामास। सैन्येभ्य इत्यर्थाल्लभ्यते। बाह्यचेष्टितमेव मनोवृत्तेरनुमापकम् इति भावः। असम्भ्रान्तत्वे हेतुः तुल्यसत्वानामिति। न हि समबलः समबलाद्बिभेति इति भावः ॥ ७२ ॥

भूर्जेष्विति। भूर्जेषु भूर्जपत्रेषु। "भूर्जपत्रो भुजो भूर्जो मृदुत्वक् चर्म्मिका मता" इति यादवः। मर्म्मरः शुष्कपर्णध्वनिः। "मर्म्मरः शुष्कपर्णानाम्" इति यादवः। अयञ्च शुक्लादिशब्दवत् गुणिनि अपि वर्त्तते प्रयोज्यते च "मर्म्मरैरगुरुधूपगन्धिभिः" इति। अतः मर्म्मरीभूताः मर्म्मरशब्दवन्तो भूताः इत्यर्थः। कीचकानां वेणुविशेषाणां ध्वनिहेतवः शोषसरन्ध्रत्वाय इति भावः।

निशश्युर्नमेरूणां छायास्वध्यास्य सैनिकाः ।
दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः ॥७४॥
सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः ।
आसन्नोषधयो नेतुः नक्तमस्नेहदीपिकाः ॥ ७५ ॥
तस्योत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वचः ।

गङ्गाशीकरिणः शीतलाः इत्यर्थः । मरुतः वाताः मार्गे तं सिषेविरे ॥ ७३ ॥

विशश्रमुरिति । सैनिकाः सेनायां समवेताः । प्राग्वहतीय-ष्टक्प्रत्ययः । नमेरूणां सुरपुन्नागानां छायासु निषण्णानां दृषदुपविष्टानां मृगाणां कस्तूरीमृगाणां नाभिभिः वासितो-त्सङ्गाः सुरभिततलाः दृषदः शिलाः अध्यास्य अधिष्ठाय । "अधि-शीङ्स्थासां कर्म्म" इति कर्मत्वम् । दृषत्सु अधिश्य इत्यर्थः निशश्रमुः विश्रान्ताः ॥ ७४ ॥

सरलेति । सरलेषु देवदारुविशेषेषु आसक्तानि अवरोह ...
द्वानां गजानां ग्रीवासु भवानि ग्रैवेयाणि , न हि शूराः
"ग्रीवाभ्योऽण् च" इति चकारात् ढञ् ...॥
त्विषः प्रतिफलितभासः ओषधयः ज्वल लौहित्या नाम नदी
नक्तं रात्रौ नेतुः नायकस्य रघोः अ ... गतिमाणां जनपदानाम्
प्रदीपाः (अतैलपूरप्रदीपाः) आसन् ___

तस्येति । तस्य रघोः ... Brahmaputra. The country
सेनानिवेशेषु कण्ठरज्जुभिः गल... ern Assam. The king of
येषां ते देवदारवः किरातेभ्यः यन्त्र ... a conspicuous part in the

परस्परेण विज्ञातः तेषूपायनपाणिषु ।
राज्ञा हिमवतः सारः राज्ञः सारो हिमाद्रिणा ॥७९॥
तत्राक्षोभ्यं यशोराशिं निवेश्यावरुरोह सः ।
पौलस्त्यतुलितस्याद्रेः आदधान इव ह्रियम् ॥८०॥
चकम्पे तीर्णलौहित्ये(१)तस्मिन् प्राग्ज्योतिषेश्वरः ।
तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः ॥ ८१ ॥

परस्परेणेति । तेषु गणेषु उपायनयुक्ताः पाणयः येषां तेषु सत्सु, परस्परेण अन्योन्यं राज्ञा हिमवतः सारः धनरूपः विज्ञातः हिमाद्रिणा अपि राज्ञः सारः बलरूपः विज्ञातः । एतेन तत्रत्यवस्तूनामनर्घ्यत्वं , गणानामभूतपूर्वश्च पराजय इति ध्वन्यते ॥ ७९ ॥

तत्रेति । स रघुः तत्र हिमाद्रौ अक्षोभ्यम् अधृष्यं यशोराशिं निवेश्य निधाय पौलस्त्येन रावणेन तुलितस्य चालितस्य अद्रेः कैलासस्य ह्रियम् आदधानः जनयन् इव अवरुरोह अवततार कैलासमगत्वैव प्रतिनिवृत्तः इत्यर्थः । न हि शूराः परेण पराजितमभियुञ्जन्ते इति भावः ॥ ८० ॥

चकम्प इति । तस्मिन् रघौ तीर्णा लौहित्या नाम नदी येन तस्मिन् तीर्णलौहित्ये सति प्राग्ज्योतिषाणां जनपदानाम्

---

(१) लौहित्य is identical with the Brahmaputra. The country of the प्राग्ज्योतिष's corresponds to Eastern Assam. The king of this people भगदत्त in a later age played a conspicuous part in the wars of Kurukshetra.

गजवर्ष्म किरातेभ्यः(१) शशंसुर्देवदारवः ॥ ७६ ॥
तत्र जन्यं रघोर्घोरं पार्व्वतीयैर्गणैरभूत् ।
नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥ ७७ ॥
शरैरुत्सवसङ्केतान्(२)स कृत्वा विरतोत्सवान् ।
जयोदाहरणं बाह्वोः गापयामास किन्नरान् ॥७८॥

"वर्ष्म देहप्रमाणयोः" इत्यमरः। शशंसुः कथितवन्तः। देवदारुस्कन्धत्वक्क्षतैर्गजानामौन्नत्यमनुमीयते इत्यर्थः ॥ ७६ ॥

तत्रेति। तत्र हिमाद्रौ रघोः पर्वते भवैः पार्वतीयैः। "पर्वताच्च" इति छप्रत्ययः। गणैः उत्सवसङ्केताख्यैःसप्तभिः सह। "गणानुत्सवसङ्केतान् अजयत् सप्त पाण्डवः" इति महाभारते। नाराचानां बाणविशेषाणां क्षेपणीयानां भिन्दिपालानाम् अश्मनाञ्च निष्पेषेण सङ्घर्षेण उत्पतिताः अनलाः यस्मिन् तत् तथो-

"क्षेपणीयो भिन्दिपालः खड्गो दीर्घो महाफलः" इति

घोरं भीमं जन्यं युद्धम् अभूत्। "युद्धमायोधनं जन्यम्"

प।

"मर्म्मरः शुष्कपर्णे।

रघुः शरैर्बाणैः उत्सवसङ्केतान् नाम गणान्

वत् गुणिनि अपि व...

इति। अतः मर्म्मरीभूताः ... इत्यर्थः, किन्नरान् बाह्वोः स्वभुजयोः

... बन्धविशेषं गापयामास। गतिबुद्धि-

कानां वेणुविशेषाणां ध्वा...

म् ॥ ७८ ॥

(१) "प्रकरणात् स इत्यध्याह्रियते ... तथा मिथ्यम्। मिथ्याकथनस्य कथनं, गुहासु स्थितानां किंराना ... ऽपि ... वशीकर्त्तुं शशंसु ... इति दिनकरः। ... probably the region ... विशेषणं कृत्वा दिनकरवत् व्याचष्टे।

परस्परेण विज्ञातः तेषूपायनपाणिषु ।
राज्ञा हिमवतः सारः राज्ञः सारो हिमाद्रिणा ॥७९॥
तत्राक्षोभ्यं यशोराशिं निवेश्यावरुरोह सः ।
पौलस्त्यतुलितस्याद्रेः आदधान इव ह्रियम् ॥८०॥
चकम्पे तीर्णलौहित्ये(१)तस्मिन् प्राग्ज्योतिषेश्वरः ।
तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः ॥ ८१ ॥

परस्परेणेति । तेषु गणेषु उपायनयुक्ताः पाणयः येषां तेषु सत्सु, परस्परेण अन्योन्यं राज्ञा हिमवतः सारः धनरूपः विज्ञातः हिमाद्रिणा अपि राज्ञः सारः बलरूपः विज्ञातः । एतेन तत्रत्यवस्तूनामनर्घ्यत्वं , गणानामभूतपूर्वश्च पराजय इति ध्वन्यते ॥ ७९ ॥

तत्रेति । स रघुः तत्र हिमाद्रौ अक्षोभ्यम् अधृष्यं यशोराशिं निवेश्य निधाय पौलस्त्येन रावणेन तुलितस्य चालितस्य अद्रेः कैलासस्य ह्रियम् आदधानः जनयन् इव अवरुरोह अवततार कैलासमगत्वैव प्रतिनिवृत्तः इत्यर्थः । न हि शूराः परेण पराजितमभियुञ्जन्ते इति भावः ॥ ८० ॥

चकम्प इति । तस्मिन् रघौ तीर्णा लौहित्या नाम नदी येन तस्मिन् तीर्णलौहित्ये सति प्राग्ज्योतिषाणां जनपदानाम्

(१) लौहित्या is identical with the *Brahmaputra.* The country of the प्राग्ज्योतिष's corresponds to Eastern Assam. The king of this people भगदत्त in a later age played a conspicuous part in the wars of Kurukshetra.

न प्रसेहे स रुद्धार्कम् अधारावर्षदुर्दिनम्।
रथवर्त्मरजोऽप्यस्य कुत एव पताकिनीम्॥ ८२॥
तमीशः कामरूपाणाम्(१) अत्याखण्डलविक्रमम्।
भेजे भिन्नकटैर्नागैः अन्यानुपरुरोध यैः॥ ८३॥
कामरूपेश्वरस्तस्य हेमपीठाधिदेवताम्।
रत्नपुष्पोपहारेण छायामानर्च पादयोः॥ ८४॥

ईश्वरः तस्य रघोः गजानाम् आलानतां प्राप्तैः कालागुरुद्रुमैः कृष्णागुरुवृक्षैः सह चकम्पे कम्पितवान्॥ ८१॥

नेति। स प्राग्ज्योतिषेश्वरः रुद्धार्कम् आहतसूर्यम् अधारावर्षञ्च तत् दुर्दिनञ्च धारावृष्टिं विना दुर्दिनभूतम् अस्य रघोः रथवर्त्मरजः अपि न प्रसेहे पताकिनीं सेनां कुतः एव प्रसेहे न कुतोऽपि इत्यर्थः॥ ८२॥

तमिति। कामरूपाणां नाम देशानाम् ईशः अत्याखण्डलविक्रमम् अतीन्द्रपराक्रमं तं रघुं भिन्नाः स्रवन्मदाः कटाः गण्डाः येषां तैः नागैः गजैः साधनैः भेजे नागान् दत्त्वा शरणं गतः इत्यर्थः। कीदृशैर्नागैः यैः अन्यान् रघुव्यतिरिक्तान् नृपान् उपरुरोध। शूराणामपि शूरो रघुः इति भावः॥ ८३॥

कामरूपेश्वर इति। कामरूपेश्वरः हेमपीठस्य अधिदेवतां तस्य रघोः पादयोः छायां कनकमयपादपीठव्यापिनीं कान्तिं

(1) Kamarupa correspands to the western portion of Assam, noted to this day, for elephants of superior streagth.

इति जित्वा दिशो जिष्णुः न्यवर्त्तत रथोद्धतम् ।
रजो विश्रामयन् राज्ञां छत्रशून्येषु मौलिषु ॥ ८५ ॥
स विश्वजितमाजह्रे(१) यज्ञं(२) सर्व्वस्वदक्षिणम् ।
आदानं हि विसर्गाय सतां वारिमुचामिव ॥ ८६ ॥

रत्नानि एव पुष्पाणि तेषाम् उपहारेण समर्पणेन आनर्घं अर्घयामास ॥ ८४ ॥

इतीति । जिष्णुः जयशीलः । ग्लाजिस्थश्च ग्स्नुरिति ग्स्नुप्रत्ययः । सः रघुः इति इत्थं दिशः जित्वा रथैः उद्धतं रजः छत्रशून्येषु रघोरेकच्छत्रकत्वात् इति भावः । राज्ञां मौलिषु किरीटेषु । "मौलिः किरीटे धम्मिल्ले चूड़ाकङ्केलि-मूर्द्धजे" इति हैमः । विश्रामयन् संक्रामयन् इत्यर्थः न्यवर्त्तत निवृत्तः ॥ ८५ ॥

स इति । स रघुः सर्व्वस्वं दक्षिणा यस्य तं सर्व्वदक्षिणम् । "विश्वजित् सर्व्वस्वदक्षिणः" इति श्रुतेः । विश्वजितं नाम यज्ञम् आजह्रे कृतवान् इत्यर्थः । युक्तञ्चैतदित्याह, सतां साधूनां, वारिमुचां मेघानाम् इव, आदानम् अर्ज्जनं विसर्गाय त्यागाय हि पात्रविनियोगाय इत्यर्थः ॥ ८६ ॥

---

(१) विश्वजिति सहस्रं सर्व्वस्वं समुदितं वा दक्षिणा इति त्रयः कल्पा वर्णिताः । अत्र शाबरभाष्यादिषाध्यः । अत्र सर्व्वस्वमितिपदेन शाकभूम्यादिभोगोपकरणवर्ज्जं तामभित समस्तं वस्तु गृह्यते ।

(२) आरेभे इति पाठान्तरम् ।

सत्रान्ते सचिवसखः पुरस्क्रियाभि-
र्गुर्वीभिः शमितपराजयव्यलीकान् ।
काकुत्स्थश्चिरविरहोत्सुकावरोधान्
राजन्यान् स्वपुरनिवृत्तयेऽनुमेने ॥ ८७ ॥
ते रेखाध्वजकुलिशातपत्रचिह्नं (१)
सम्राजश्चरणयुगं प्रसादलभ्यम् ।

सत्रान्त इति । काकुत्स्थः रघुः सत्रान्ते यज्ञान्ते । "सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च" इत्यमरः । सचिवानाम् अमात्यानां सखा इति सचिवसखः सन् । "सचिवो भृत्यकेऽमात्ये" इति हैमः । तेषामत्यनुसरणद्योतनार्थं राज्ञः सखित्वव्यपदेशः । "राजाहःसखिभ्यष्टच्" । गुर्वीभिः महतीभिः । "गुरुर्महत्याङ्गिरसे पित्रादौ धर्म्मदेशके" इति हैमः । पुरस्क्रियाभिः पूजाभिः शमितं पराजयेन व्यलीकं दुःखं वैलक्ष्यं वा येषां तान् । "दुःखे वैलक्ष्ये व्यलीकम्" इति यादवः । चिरविरहेण उत्सुकाः उत्कण्ठिताः अवरोधाः अन्तःपुराङ्गनाः येषां तान् राज्ञः अपत्यानि राजन्याः क्षत्रियाः तान् । "राजश्वशुराद् यत्" इति अपत्यार्थे यत्प्रत्ययः । "मूर्द्धाभिषिक्तो राजन्यः बाहुजः क्षत्रियो विराट्" इत्यमरः । स्वपुरं प्रति निवृत्तये प्रतिगमनाय अनुमेने अनुज्ञातवान् ॥ ८७ ॥

त इति । ते राजानः रेखाः एव ध्वजाय कुलिशानि च

---

(१). ध्वजवज्रच्छत्रादिचिह्नानि महाभाग्यवतां परमैश्वर्यञ्च सूचयन्तीति सामुद्रिकाः ।

प्रस्थानप्रणतिभिरङ्गुलीषु चक्रुः
मौलिस्रक्च्युतमकरन्दरेणुगौरम् ॥ ८८ ॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
रघुदिग्विजयो नाम चतुर्थः सर्गः ।

आतपत्राणि च ध्वजाद्याकाररेखाः इत्यर्थः । तानि चिह्नानि यस्य तत् तथोक्तं प्रसादेन एव लब्धं प्रसादलब्धं सम्राजः सार्व्वभौमस्य रघोः चरणयुगं प्रस्थाने प्रयाणसमये याः प्रणतयः नमस्काराः ताभिः करणैः अङ्गुलीषु, मौलिषु केशबन्धनेषु याः स्रजः माल्यानि ताभ्यः च्युतैः मकरन्दैः पुष्परसैः। "मकरन्दः पुष्परसः" इत्यमरः । रेणुभिः परागैश्च । "परागः सुमनोरजः" इत्यमरः । गौरं गौरवर्णं चक्रुः ॥ ८८ ॥

इति श्रीमहामहोपाध्याय कोलाचलमल्लिनाथसूरिविरचितायां
रघुवंशटीकायां सञ्जीवनीसमाख्यायां चतुर्थः सर्गः ।

## पञ्चमः सर्गः।

तमध्वरे विश्वजिति क्षितीशं
निःशेषविश्राणितकोषजातम्।
उपात्तविद्यो गुरुदक्षिणार्थी
कौत्सः प्रपेदे वरतन्तुशिष्यः ॥ १ ॥

इन्दीवरदलश्याममिन्दिरानन्दकन्दलम्।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥

तमिति। विश्वजिति विश्वजिन्नाम्नि अध्वरे यज्ञे। "यज्ञः सवोऽध्वरो यागः" इत्यमरः। निःशेषं विश्राणितं दत्तम्। श्रण दाने चुरादिः। कोषाणाम् अर्थराशीनां जातं समूहः येन तं तथोक्तम्। "कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः" इत्यमरः। "जातं जनिसमूहयोः" इति शाश्वतः। एतेन कौत्सस्यानवसरप्राप्तिं सूचयति। तं क्षितीशं रघुम् उपात्तविद्यः लब्धविद्यः वरतन्तोः शिष्यः कौत्सः। ऋष्यन्धकेत्यण् इत्यपवादः। गुरुदक्षिणार्थी। पुष्करादिभ्यो देशे इत्यत्र अर्थाच्चासन्निहिते तदन्ताच्चेति इनिः। अप्रत्याख्येयः इति भावः। प्रपेदे प्राप। अस्मिन् सर्गे वृत्तमुपजातिः। तल्लक्षणन्तु, "स्यादिन्द्रवज्रा यदि तौ जगौ गः। उपेन्द्रवज्रा जतजास्ततो गौ। अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति ॥ १ ॥

स मृण्मये वीतहिरण्मयत्वात्
पात्रे निधायार्घ्यमनर्घ्यशीलः(१)।
श्रुतप्रकाशं यशसा प्रकाशः
प्रत्युज्जगामातिथिमातिथेयः ॥ २ ॥
तमर्च्चयित्वा विधिवद्विधिज्ञः
तपोधनं मानधनाग्रयायी।

स इति। अनर्घ्यशीलः अमूल्यस्वभावः असाधारणस्वभावः इत्यर्थः। "मूल्ये पूजाविधावर्घः" इति "शीलं स्वभावे सद्वृत्ते" इति च अमरशास्वतौ। यशसा कीर्त्त्या प्रकाशते इति प्रकाशः। पचाद्यच्। अतिथिषु साधुः आतिथेयः। "पथ्यतिथिवसतिस्वपतेर्ढञ्" इति ढञ्। स रघुः हिरण्यस्य विकारः हिरण्मयम् दाण्डिनायनादिसूत्रेण निपातः। वीतहिरण्मयत्वात् अपगतसुवर्णपात्रत्वात्। यज्ञस्य सर्व्वस्वदक्षिणाकत्वात् इति भावः। मृण्मये मृद्विकारे पात्रे अर्घार्थमिदं अर्घ्यम्। "पादार्घाभ्याञ्च" इति यत्। पूजार्थं द्रव्यं निधाय श्रुतेन शास्त्रेण प्रकाशं प्रसिद्धं श्रूयते इति श्रुतं वेदशास्त्रम्। "श्रुतं शास्त्रावधृतयोः" इत्यमरः। अतिथिम् अभ्यागतं कौत्सम्। "अतिथिर्ना गृहागते" इत्यमरः। प्रत्युज्जगाम ॥ २ ॥

तमिति। विधिज्ञः शास्त्रज्ञः अकरणे प्रत्यवायभीरुः

(१) अर्घं पूजां अर्हतीति अर्घ्यः पूज्यः ; नास्ति अर्घ्यो यस्मात् स अनर्घ्यः पूज्यतमः इत्यर्थः। अनर्घ्यं शीलं यस्य इति विग्रहे अनर्घ्यशीलः। बहुतमपदवत् अनर्घ्यशब्देन पूज्यतमत्वं प्रतीयते। यथा माघे "जगत्यपर्याप्तसहस्रभानुना न यन्नियन्तुं समभावि भानुना। प्रसह्य तेजोभिरसंख्यतां गतैरदस्त्वया नुन्नमनुत्तमं तमः"।

विशाम्पतिर्विष्टरभाजमारात्
कृताञ्जलिः कृत्यविदित्युवाच ॥ ३ ॥
अप्यग्रणीर्मन्त्रकृतामृषीणां(१)
कुशाग्रबुद्धे कुशली गुरुस्ते।
यतस्त्वया ज्ञानमशेषमाप्तं
लोकेन चैतन्यमिवोष्णरश्मेः ॥ ४ ॥

इत्यर्थः। मानधनानाम् अग्रयायी अग्रेसरः अपयशोभीरु इत्यर्थः। कृत्यवित् कार्य्यज्ञः आगमनप्रयोजनमवश्यं प्रष्टव्यमिति कृत्यवित् विशाम्पतिः मनुजेश्वरः। "द्वौ विशौ वैश्यमनुजौ" इत्यमरः। विष्टरभाजम् आसनगतम् उपविष्टम् इत्यर्थः। "विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्" इत्यमरः। वृक्षासनयोर्विष्टरः इति निपातः। तं तपोधनं विधिवत् विध्यर्हं यथाशास्त्रम् इत्यर्थः। तदर्हमिति वत्प्रत्ययः। अर्च्चयित्वा आरात् समीपे। "आराद् दूरसमीपयोः" इत्यमरः। कृताञ्जलिः सन् इति वक्ष्यमाणप्रकारेण उवाच ॥ ३ ॥

अप्यग्रणीरिति। हे कुशाग्रबुद्धे सूक्ष्मबुद्धे "कुशाग्रीयमतिः प्रोक्तः सूक्ष्मदर्शी च यः पुमान्" इति हलायुधः। मन्त्रकृतां मन्त्रस्रष्टृणाम्। सुकर्म्मपापमन्त्रेत्यादिना क्विप्। ऋषीणाम् अग्रणीः श्रेष्ठः ते तव गुरुः कुशली अपि, क्षेमवान् किम्, अपि

(1) The word मन्त्रकृत् means a composer or reciter of hymns. Here it is used as an empty title, in as much as वरतन्तु does not figure either as a composer or reciter of hymns like वसिष्ठ, to whom the same epithet is applied. See Canto 1. st 61.

कायेन वाचा मनसापि शश्वत्
यत् सम्भृतं वासवधैर्य्यलोपि।
आपाद्यते न व्ययमन्तरायैः
कच्चिन्महर्षेस्त्रिविधं तपस्तत्(१) ॥ ५ ॥
आधारबन्धप्रमुखैः प्रयत्नैः
संवर्द्धितानां सुतनिर्विशेषम्।

प्रश्ने। "गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि" इत्यमरः। यतः यस्मात् गुरोः सकाशात् त्वया अशेषं ज्ञानं, लोकेन उष्णरश्मेः सूर्य्यात् चैतन्यं प्रबोधः इव, आप्तं स्वीकृतम् ॥ ४ ॥

कायेनेति। कायेन उपवासादिकृच्छ्रचान्द्रायणादिना, वाचा वेदपाठेन, मनसा गायत्रीजपादिनापि, कायेन, वाचा, मनसापि, करणेन, वासवस्य इन्द्रस्य धैर्य्यं लुम्पतीति वासवधैर्य्यलोपि स्वपदापहारशङ्काजनकम् इत्यर्थः। यत् तपः शश्वत् असकृत्। "मुहुः पुनः पुनः शश्वत् अभीक्ष्णमसकृत्समाः" इत्यमरः। सम्भृतं सञ्चितं महर्षेः वरतन्तोः त्रिविधं वाङ्मनःकायजं तत् तपः अन्तरायैः विघ्नैः इन्द्रप्रेरिताप्सरःप्रभृतिभिः व्ययं नाशं न आपाद्यते कच्चित्, न नीयते किम्, "कच्चित् कामप्रवेदने" इत्यमरः ॥ ५ ॥

आधारेति। आधारबन्धप्रमुखैः आलवालनिर्म्माणादिभिः प्रयत्नैः उपायैः। "आधार आलवालेऽम्बुबन्धेऽधिकरणेऽपि च"

(१) कच्चिदिति क्वचित् इति पाठः।

कच्चिन्न वाय्वादिरुपप्लवो वः
श्रमच्छिदामाश्रमपादपानाम् ॥६॥

क्रियानिमित्तेष्वपि वत्सलत्वात्
अभग्नकामा मुनिभिः कुशेषु ।
तदङ्कशय्याच्युतनाभिनाला
कच्चिन्मृगीणामनघा प्रसूतिः ॥ ७ ॥

निर्वर्त्यते यैर्नियमाभिषेकः
येभ्यो निवापाञ्जलयः पितृणाम् ।

इति विश्वः । सुतेभ्यः निर्गतः विशेषः अतिशयः यस्मिन् कर्म्मणि तत् तथा संवर्द्धितानां श्रमच्छिदां वः आश्रमपादपानां वाय्वादिः । आदिशब्दात् दावानलादिरुपप्लवो बाधकः न कच्चित् नास्ति किम् ॥ ६ ॥

क्रियेति । क्रियानिमित्तेषु अपि अनुष्ठानसाधनेषु अपि कुशेषु मुनिभिः वत्सलत्वात् स्नेहात् अभग्नकामा अप्रतिहतेच्छा, तेषां मुनीनाम् अङ्काः एव शय्याः तासु च्युतानि नाभिनालानि यस्याः सा तथोक्ता, मृगीणां प्रसूतिः सन्ततिः अनघा अव्यसना कच्चित् अनपायिनी किम् इत्यर्थः । "दुःखैनोव्यसनेष्वघम्" इति यादवः । ते हि व्यालभयात् दशरात्रमङ्के एव धारयन्ति ॥ ७ ॥

निर्वर्त्येत इति । यैः तीर्थजलैः नियमाभिषेकः नित्यस्नानादिः निर्वर्त्यते निष्पाद्यते, येभ्यः जलेभ्यः, उद्धृत्य इति शेषः ।

तान्युञ्छषष्ठाङ्कितसैकतानि(१)
शिवानि वस्तीर्थजलानि कच्चित् ॥८॥
नीवारपाकादि कडङ्गरीयै-
रामृश्यते जानपदैर्न कच्चित्।
कालोपपन्नातिथिकल्पभाग(२)
वन्यं शरीरस्थितिसाधनं वः ॥ ९ ॥

पितॄणाम् अग्निष्वात्तादीनां निवापाञ्जलयः तर्पणाञ्जलयः। "पितृदानं निवापः स्यात्" इत्यमरः। निर्वर्त्यन्ते उञ्छानां प्रकीर्णोद्धृतधान्यानां षष्ठैः षष्ठभागैः पालकत्वात् राजग्राह्यैः अङ्कितानि सैकतानि पुलिनानि येषां, तानि तथोक्तानि वः युष्माकं तानि तीर्थजलानि शिवानि भद्राणि कच्चित्, अनुपप्लवानि किम् इत्यर्थः। "उञ्छो धान्यांशकादानं कणिशाद्यर्जनं शिलम्" इति यादवः। "षष्ठाष्टमाभ्याञ्च" इति षष्ठशब्दात् भागार्थे अन्प्रत्ययः। अतएवापूरणार्थत्वात् पूरणगुणेत्यादिना न षष्ठीसमासप्रतिषेधः। सिकताः येषु सन्ति सैकतानि। "सिकताशर्कराभ्यां च" इति अण्प्रत्ययः ॥ ८ ॥

नीवारेति। कालेषु योग्यकालेषु उपपन्नानाम् आगतानाम्

(१) "[illegible] षष्ठं भागं [illegible]। [illegible]" इति [illegible]। [illegible]; [illegible] इति कुल्लूकभट्टः। मनु ८।३।

(२) शिलानप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः। सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो वसन्। मनु ३।१००। अपिच—अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्तते। स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति। इति।

अपि प्रसन्नेन महर्षिणा त्वं
सम्यग्विनीयानुमतो गृहाय ।
कालो(१) ह्ययं संक्रमितुं द्वितीयं
सर्व्वोपकारक्षममाश्रमं ते (२) ॥ १० ॥

अतिथीनां कल्पाः भागाः यस्य तत् तथोक्तं, वने भवं वन्यं, शरीरस्थितेः जीवितस्य साधनं वः युष्माकम्। पच्यते इति पाकः, फलं, धान्यम् इति यावत् । नीवारपाकादि । आदिशब्दाच्छ्यामाकादिधान्यसंग्रहः । जनपदेभ्यः आगतैः जानपदैः । तत आगत इति अण् । कड़ङ्गरीयैः कड़ङ्गरं बुषम् अर्हन्तीति कड़ङ्गरीयाः । "कड़ङ्गरो बुषं क्लीवे धान्यत्वचि तुषः पुमान्" इत्यमरः । "कड़ङ्गरदक्षिणाच्छ च" इति छप्रत्ययः । तैः गोमहिषादिभिः नोपहन्यते कच्चित् न भक्ष्यते किम् इत्यर्थः ॥ ९ ॥

अपीति । किञ्च त्वं प्रसन्नेन सता महर्षिणा सम्यक् विनीय, शिक्षयित्वा विद्यामुपदिश्य इत्यर्थः, गृहाय गृहस्थाश्रमं प्रवेष्टुम् क्रियार्थोपपदेत्यादिना चतुर्थी । अनुमतः अपि अनुज्ञातः किम्, हि यस्मात् ते तव सर्व्वेषाम् आश्रमाणां ब्रह्मचर्य्यवानप्रस्थयतीनाम् उपकारे क्षमं शक्तम् । "क्षमं शक्ते हिते त्रिषु" इत्य-

(१) "चतुर्थमायुषो भागमुषित्वाद्यं गुरौ द्विजः । द्वितीयमायुषो भागं कृतदारो गृहे वसेत्" ॥ मनु ४।१।

(२) "देवतादिं मनुष्यांश्च तिर्य्यग्योनिमिरेव च । गृहस्थः पोष्यते यस्मात् तस्मात् ज्येष्ठो गृहाश्रमीति" नारायणीये नारायणोक्तवचनं । अपि च— सर्व्वेषामपि चैतेषां वेदश्रुति विधानतः । गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान् बिभर्त्ति हि ॥ यथा नदीनदाः सर्व्वे सागरे यान्ति संस्थितिम् । तथैवाश्रमिणः सर्व्वे गृहस्थे यान्ति संस्थितिं ॥ ६।८९।९० मनु।

तवार्हतो नाभिगमेन तृप्तं
मनो नियोगक्रिययोत्सुकं मे।
अप्याज्ञया शासितुरात्मना वा
प्राप्तोऽस्मि सम्भावयितुं वनान्माम् ॥११॥
इत्यर्घ्यपात्रानुमितव्ययस्य
रघोरुदारामपि गां निशम्य।

मरः। द्वितीयम् आश्रमं गार्हस्थ्यं संक्रमितुं प्राप्तुम् अयं कालः। विद्याग्रहणानन्तर्य्यात् तस्य इति भावः। "कालसमयवेलासु तुमुन्" इति तुमुन्। सर्व्वोपकारक्षममित्यत्र मनुः, "यथा मातरमाश्रित्य सर्व्वे जीवन्ति जन्तवः। वर्त्तन्ते गृहिणस्तद्वत् आश्रित्येतर आश्रमाः" ॥ इति ॥ १० ॥

कुशलप्रश्नं विधायागमनप्रयोजनप्रश्नं चिकीर्षुराह, तवेति। अर्हतः पूज्यस्य प्रशस्तस्य। अर्हः प्रशंसायामिति शतृप्रत्ययः। तव अभिगमनेन आगमनमात्रेण मे मनः न तृप्तं न तुष्टं, किन्तु नियोगक्रियया आज्ञाकरणेन उत्सुकं सोत्कण्ठम्। "इष्टार्थोद्युक्त उत्सुकः" इत्यमरः। "प्रसितोत्सुकाभ्यां तृतीया च" इति सप्तम्यर्थे तृतीया। शासितुः गुरोः आज्ञया अपि आत्मना स्वतो वा। प्रकृत्यादिभ्य उपसंख्यानमिति तृतीया। मां सम्भावयितुं (सम्मानयितुं) वनात् प्राप्तोऽस्मि गुर्व्वर्थं स्वार्थं वागमनम् इत्यर्थः ॥११॥

इतीति। अर्घ्यपात्रेण मृण्मयेन अनुमितः व्ययः सर्व्वस्वत्यागः यस्य तस्य रघोः इति उक्तप्रकाराम् उदाराम् औदार्य्य-

अपि प्रसन्नेन महर्षिणा त्वं
सम्यग्विनीयानुमतो गृहाय।
कालो(१) ह्ययं संक्रमितुं द्वितीयं
सर्व्वोपकारक्षममाश्रमं ते (२)॥ १० ॥

अतिथीनां कल्पिताः भागाः यस्य तत् तथोक्तं, वने भवं वन्यं, शरीरस्थितेः जीवितस्य साधनं वः युष्माकम्। पच्यते इति पाकः, फलं, धान्यम् इति यावत्। नीवारपाकादि। आदिशब्दाच्छ्यामाकादिधान्यसंग्रहः। जनपदेभ्यः आगतैः जानपदैः। तत आगत इति अण्। कड़ङ्गरीयैः कड़ङ्गरं बुसम् अर्हन्तीति कड़ङ्गरीयाः। "कड़ङ्गरो बुसं क्लीवे धान्यत्वचि तुषः पुमान्" इत्यमरः। "कड़ङ्गरदक्षिणाच्छ च" इति छप्रत्ययः। तैः गोमहिषादिभिः नामृश्यते कच्चित् न भक्ष्यते किम् इत्यर्थः॥ ९॥

अपीति। किञ्च त्वं प्रसन्नेन सता महर्षिणा सम्यक् विनीय, शिक्षयित्वा विद्यामुपदिश्य इत्यर्थः, गृहाय गृहस्थाश्रमं प्रवेष्टुम्। क्रियार्थोपपदेत्यादिना चतुर्थी। अनुमतः अपि अनुज्ञातः किम्, हि यस्मात् ते तव सर्व्वेषाम् आश्रमाणां ब्रह्मचर्य्यवानप्रस्थयतीनाम् उपकारे क्षमं शक्तम्। "क्षमं शक्ते हिते त्रिषु" इत्य-

(१) "चतुर्थमायुषो भागमुषित्वाद्यं गुरौ द्विजः। द्वितीयमायुषो भागं कृतदारो गृहे वसेत्"॥ मनु ४।१।

(२) "देवैश्चापि मनुष्यैश्च तिर्य्यग्योनिभिरेव च। गृहस्थः सेव्यते यस्मात् तस्मात् श्रेष्ठो गृहाश्रमी" आश्वलायने नारायणोद्धृतवचनं। अपि च— सर्व्वेषामपि चैतेषां वेदस्मृतिविधानतः। गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान् बिभर्त्ति हि॥ यथा नदीनदाः सर्व्वे सागरे यान्ति संस्थितिम्। तथैवाश्रमिणः सर्व्वे गृहस्थे यान्ति संस्थितिं॥ ६।८९।९०॥ मनु।

तवार्हतो नाभिगमेन तृप्तं
मनो नियोगक्रिययोत्सुकं मे।
अप्याज्ञया शासितुरात्मना वा
प्राप्तोऽसि सम्भावयितुं वनान्माम्॥११॥
इत्यर्घ्यपात्रानुमितव्ययस्य
रघोरुदारामपि गां निशम्य।

मरः। द्वितीयम् आश्रमं गार्हस्थ्यं संक्रमितुं प्राप्तुम् अयं कालः। विद्याग्रहणानन्तर्यात् तस्य इति भावः। "कालसमयवेलासु तुमुन्" इति तुमुन्। सर्वोपकारक्षमंमित्यत्र मनुः, "यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः। वर्तन्ते गृहिणस्तद्वत् आश्रित्येतर आश्रमाः"॥ इति॥ १०॥

कुशलप्रश्नं विधायागमनप्रयोजनप्रश्नं चिकीर्षुराह, तवेति। अर्हतः पूज्यस्य प्रशस्तस्य। अर्हः प्रशंसायामिति शतृप्रत्ययः। तव अभिगमनेन आगमनमात्रेण मे मनः न तृप्तं न तुष्टं, किन्तु नियोगक्रियया आज्ञाकरणेन उत्सुकं सोत्कण्ठम्। "इष्टार्थोद्युक्त उत्सुकः" इत्यमरः। "प्रसितोत्सुकाभ्यां तृतीया च" इति सप्तम्यर्थे तृतीया। शासितुः गुरोः आज्ञया अपि आत्मना स्वतो वा। प्रकृत्यादिभ्य उपसंख्यानमिति तृतीया। मां सम्भावयितुं (सम्मानयितुं) वनात् प्राप्तोऽसि गुर्वर्थं स्वार्थं वागमनम् इत्यर्थः॥११॥

इतीति। अर्घ्यपात्रेण मृण्मयेन अनुमितः व्ययः सर्वस्वत्यागः यस्य तस्य रघोः इति उक्तप्रकाराम् उदाराम् औदार्य-

स्वार्थोपपत्तिं प्रति दुर्बलाशः
तमित्यवोचद् वरतन्तुशिष्यः ॥१२॥
सर्व्वत्र(१) नो वार्त्तमवेहि राजन्
नाथे कुतस्त्वय्यशुभं प्रजानाम्।
सूर्य्ये तपत्यावरणाय दृष्टेः
कल्पेत लोकस्य कथं तमिस्रा ॥१३॥

शुक्लाम् अपि गां वाचं "मनोनियोगक्रिययोत्सुकं" मे इत्येवंरूपाम्। "स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इत्यमरः। निशम्य श्रुत्वा वरतन्तुशिष्यः कौत्सः स्वार्थोपपत्तिं स्वकार्य्यसिद्धिं प्रति दुर्बलाशः मृण्मयपात्रदर्शनात् शिथिलमनोरथः सन् तं रघुम् इति वक्ष्यमाणप्रकारेण अवोचत् ॥१२॥

सर्व्वत्रेति। हे राजन् त्वं सर्वत्र नः अस्माकं वार्त्तं स्वास्थ्यम् अवेहि जानीहि। "वार्त्तं वल्गुन्यरोगे च" इत्यमरः। "वार्त्तं पाटवमारोग्यं भव्यं स्वास्थ्यमनामयम्" इति यादवः। न चैतदाश्चर्य्यमित्याह, नाथ इति। त्वयि नाथे ईश्वरे सति प्रजानाम् अशुभं दुःखं कुतः, तथाहि, अर्थान्तरं न्यस्यति सूर्य्ये इत्यादिना। सूर्य्ये तपति प्रकाशमाने सति तमिस्रा तमस्ततिः। "तमिस्रं तिमिरं रोगे तमिस्रा तु तमस्ततौ। कृष्णपक्षे निशायां च" इति विश्वः। तमिस्रमिति पाठे तमिस्रं तिमिरं। "तमिस्रं तिमिरं तमः" इत्यमरः। लोकस्य जनस्य। "लोकस्तु

(१) सर्वत्र कुशलोऽस्मत्कपक्षेतिषु इति दिनकरः।

भक्तिः प्रतीच्येषु कुलोचिता ते
पूर्वान् महाभाग(१) तयातिशेषे ।
व्यतीतकालस्त्वहमभ्युपेतः
त्वामर्थिभावादिति मे विषादः ॥ १४ ॥
शरीरमात्रेण नरेन्द्र तिष्ठन्
आभासि-तीर्थप्रतिपादितर्द्धिः ।

भुवने जने" इत्यमरः । दृष्टेः आवरणाय कथं कल्पेत दृष्टिमावरितुं नालम् इत्यर्थः । क्लृपेरलमर्थत्वात् तद्योगे नमःस्वस्तीत्यादिना चतुर्थी । अलमिति पर्याप्त्यर्थग्रहणमिति भगवान् भाष्यकारः । कल्पेत सम्पद्येत इत्यर्थः, क्लृपि सम्पद्यमाने चतुर्थीति वक्तव्यात् ॥ १३ ॥

तवार्हत इत्यादिनोक्तं यत् तत्र चित्रमित्याह, भक्तिरिति। प्रतीच्येषु पूज्येषु । "पूज्यः प्रतीच्यः" इत्यमरः । भक्तिः अनुरागविशेषः, ते तव कुलोचिता कुलाभ्यस्ता । "अभ्यस्तेऽप्युचितं न्याय्यम्" इति यादवः । हे महाभाग सार्वभौम तया भक्त्या पूर्वान् (पूर्वपुरुषान्) अतिशेषे अतिवर्त्तसे। किन्तु सर्वत्र वार्त्तं चेत् तर्हि कथं खेदखिन्न इव दृश्यसे, अत आह, व्यतीतेति। अहं व्यतीतकालः अतिक्रान्तकालः सन् अर्थिभावात् त्वाम् अभ्युपेतः इति मे विषादः ॥ १४ ॥

शरीरेति। हे नरेन्द्र तीर्थे सत्पात्रे प्रतिपादिता दत्ता ऋद्धिः

(१) महाभागतया पूर्वपुरुषानतिक्रामसि इति दिनकरः ।

आरण्यकोपात्तफलप्रसूतिः
स्तम्बेन नीवार इवावशिष्टः ॥ १५ ॥
स्थाने भवानेकनराधिपः सन्
अकिञ्चनत्वं मखजं व्यनक्ति ।
पर्य्यायपीतस्य सुरैर्हिमांशोः (१)
कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥ १६ ॥

येन स तथोक्तः । "योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद् दर्शनेष्वपि" इति हलायुधः । शरीरमात्रे ण तिष्ठन् आरण्यकाः अरण्ये भवाः मनुष्याः मुनिप्रमुखाः । "अरण्यान्मनुष्य" इति वुञ्प्रत्ययः । तैः उपात्ता फलम् एव प्रसूतिः यस्य स स्तम्बेन काण्डेन अवशिष्टः । प्रकृत्यादित्वात् तृतीया । नीवारः इव आभासि शोभसे ॥ १५ ॥

स्थान इति । भवान् एकनराधिपः सार्वभौमः सन् मखजं मखजन्यं न विद्यते किञ्चन यस्य इति अकिञ्चनः । मयूरव्यंसकादित्वात् तत्पुरुषः । तस्य भावः तत्त्वं निर्धनत्वं व्यनक्ति प्रकटयति स्थाने युक्तम् । "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः । तथाहि सुरैः देवैः पर्य्यायेण क्रमेण पीतस्य हिमांशोः कलाक्षयः वृद्धेः उपचयात् श्लाघ्यतरः हि वरः खलु । "मणिः शाणोल्लीढः समरविजयी हेतिनिहितः, मदक्षीणो नागः शरदि सरितः श्यान-

(१) "प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः । विश्वेदेवास्तृतीयां तु चतुर्थीं सलिलाधिपः । पञ्चमीं तु वषट्कारः षष्ठीं पिबति वासवः । सप्तमीमृषयो दिव्या अष्टमीमज एकपात् । नवमीं कृष्णपक्षस्य यमः प्राश्नाति वै कलाम् । दशमीं पिबते वायुः

तदन्यतस्तावदनन्यकार्य्यः
गुर्वर्थमाहर्त्तुमहं यतिष्ये ।
स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं
शरद्घनं नार्दति चातकोऽपि ॥ १७ ॥

पुलिनाः । कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः" । इति भावः । अत्र कामन्दकः, "धर्म्मार्थं क्षीणकोशस्य क्षीणत्वमपि शोभते । सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव" । इति ॥ १६ ॥

तदिति । तत् तस्मात् तावत् अनन्यकार्य्यः । "यावत् तावच्च साकल्येऽवधौ मानेऽवधारणे" इति विश्वः । प्रयोजनान्तररहितः अहम् अन्यतः वदान्यान्तरात् गुर्व्वर्थं गुरुधनम् आहर्त्तुं अर्जयितुं यतिष्ये उद्योक्ष्ये ते तुभ्यं स्वस्ति शुभमस्तु । नमःस्वस्तीत्यादिना चतुर्थी । तथाहि, चातकोऽपि, "धरणीपतितं तोयं चातकानां रुजाकरम्" इति हेतोः अनन्यगतिकोऽपि इत्यर्थः, निर्गलितः अम्बु एव गर्भः यस्य तं शरद्घनं न अर्हति

पिबन्त्येकादशीममुमा । द्वादशीं पितरः सर्व्वे समं प्राश्नन्ति भागशः ॥ त्रयोदशीं धनाध्यक्षः कुबेरः पिबते कलाम् । चतुर्द्दशीं पशुपतिः पञ्चदशीं प्रजापतिः ॥" वषट्कारो वेदोक्तानामष्टवसुद्वादशादित्यैकादशरुद्रप्रजापतिवषट्काराणामन्यतमः । अज एकपात् रुद्राणामन्यतमः । The above quoted passage partially conflicts with the text, and commentary of विष्णुपुराण, which says "पिबन्ति द्विकलाकारशिष्टा तस्य कला तु या । सुधामृतमयी पुण्या तामिन्दोः पितरो मुने ।" On this, the commentator observes "पञ्चदशी या कला तां पितरः पिबन्ति न तु षोडशीम् ।" See Wilson's V. P. vol 11 page 302—3.



416

एतावदुक्त्वा प्रतियातुकामं
शिष्यं महर्षेर्नृपतिर्निषिध्य।
किं वस्तु विद्वन् गुरवे प्रदेयं
त्वया कियद्वेति तमन्वयुङ्क्त ॥ १८ ॥

ततो यथावद् विहिताध्वराय
तस्मै स्मयावेशविवर्जिताय।
वर्णाश्रमाणां गुरवे स वर्णी
विचक्षणः प्रस्तुतमाचचक्षे ॥ १९ ॥

न याचते। अर्द गतौ याचने चेति धातुः। "याचनार्थे रणेऽर्दनम्" इति यादवः ॥ १७ ॥

एतावदिति। एतावत् वाक्यम् उक्त्वा प्रतियातुं कामः यस्य तं प्रतियातुकामं गन्तुकामम्। तुम् काममनसोरपीति मकारलोपः। महर्षेः, वरतन्तोः शिष्यं कौत्सं नृपतिः रघुः निषिध्य निवार्य, हे विद्वन् त्वया गुरवे प्रदेयं वस्तु किं किमात्मकं, कियत् किंपरिमाणं वा इत्येवं तं कौत्सम् अन्वयुङ्क्त अपृच्छत्। "प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः ॥ १८ ॥

तत इति। ततः यथावत् यथार्हम्। अर्हार्थे वतिः। विहिताध्वराय विधिवत् अनुष्ठितयज्ञाय सदाचाराय इत्यर्थः। स्मयावेशविवर्जिताय गर्वाभिनिवेशशून्याय अनुद्धताय इत्यर्थः। वर्णानां ब्राह्मणादीनाम् आश्रमाणां ब्रह्मचर्यादीनाञ्च गुरवे नियामकाय। "वर्णाः स्युर्ब्राह्मणादयः" इति, "ब्रह्मचारी गृही

समाप्तविद्येन(१) मया महर्षिः
विज्ञापितोऽभूद् गुरुदक्षिणायै ।
स मे चिरायास्खलितोपचारां(२)
तां भक्तिमेवागणयत् पुरस्तात् ॥ २० ॥

निर्बन्धसञ्जातरुषार्थकार्श्यम्
अचिन्तयित्वा गुरुणाहमुक्तः ।

वानप्रस्थी भिक्षुश्चतुष्टये । आश्रमोऽस्त्री" इति च अमरः । सर्व्व-कार्य्यनिर्वाहकाय इत्यर्थः । तस्मै रघवे विचक्षणः विद्वान् वर्णी ब्रह्मचारी । "वर्णिनो ब्रह्मचारिणः" इत्यमरः । "वर्णाद्(१) ब्रह्मचारिणि" इति इनिप्रत्ययः । स कौत्सः प्रस्तुतं प्रकृतम् आचचक्षे ॥ १९ ॥

समाप्तेति । समाप्तविद्येन मया महर्षिः गुरुदक्षिणायै गुरु-दक्षिणास्वीकारार्थं विज्ञापितः अभूत् । स च गुरुः चिराय अस्खलितोपचारां तां दुष्करां मे भक्तिम् एव पुरस्तात् प्रथमम् अगणयत् संख्यातवान्, भक्त्यैव सन्तुष्टः किं दक्षिणयेत्युक्तवान् इत्यर्थः । अथवा भक्तिम् एव तां दक्षिणाम् अगणयत् इति योज्यम् ॥ २० ॥

वित्तस्य विद्यापरिसंख्यया मे
कोटीश्चतस्रो दश चाहरेति ॥ २१ ॥
सोऽहं सपर्य्याविधिभाजनेन
मत्वा भवन्तं प्रभुशब्दशेषम्।
अभ्युत्सहे सम्प्रति नोपरोद्धुम्
अल्पेतरत्वाच्छ्रुतनिष्क्रयस्य ॥ २२ ॥

निर्बन्धेति। निर्बन्धेन प्रार्थनातिशयेन सञ्जातरुषा सञ्जातक्रोधेन गुरुणा अर्थकार्श्यं दारिद्र्यम् अचिन्तयित्वा अविचार्य्य अहं वित्तस्य धनस्य चतस्रः दश च कोटीः चतुर्दश कोटीः मे मह्यम् आहर आनय इति विद्यापरिसंख्यया विद्यापरिसंख्यानुसारेणैव उक्तः। अत्र मनुः, "अङ्गानि वेदाश्चत्वारः मीमांसा न्यायविस्तरः। पुराणं धर्म्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश" ॥(१) इति ॥ २१ ॥

सोऽहमिति। सः अहं सपर्य्याविधिभाजनेन अर्घ्यपात्रेण भवन्तं प्रभुशब्दः एव शेषः यस्य तं मत्वा निःस्वं निश्चित्य इत्यर्थः कृतनिष्क्रयस्य विद्यामूल्यस्य अल्पेतरत्वात् अतिमहत्त्वात् संप्रति उपरोद्धुं निर्बन्धुं न अभ्युत्सहे ॥ २२ ॥

---

(१) मतान्तरे विद्या अष्टादशविधापि। तदुक्तं, षडङ्गानि चतुर्वेदा मीमांसा न्यायविस्तरः। आयुर्वेदो धनुर्वेदो गान्धर्वमर्थशास्त्रकम्। पुराणं धर्म्मशास्त्रञ्च विद्या ह्यष्टादशा इति। अङ्गानि तु शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां चयः। छन्दसां विचितिश्चैव षडङ्गानीह दर्शिते।

इत्थं द्विजेन द्विजराजकान्तिः
आवेदितो वेदविदां वरेण।
एनोनिवृत्तेन्द्रियवृत्तिरेनं
जगाद भूयो जगदेकनाथः ॥ २३ ॥
गुर्वर्थमर्थी श्रुतपारदृश्वा
रघोः सकाशादनवाप्य कामम्।
गतो वदान्यान्तरमित्ययं मे
मा भूत् परीवादनवावतारः ॥ २४ ॥

इत्थमिति। द्विजराजकान्तिः चन्द्रकान्तिः। "द्विजराजः शशधरःनक्षत्रेशःक्षपाकरः" इत्यमरः। "तस्मात् सोमो राजा नो ब्राह्मणानाम्" इति श्रुतिः। द्विजराजकान्तित्वेनार्थिनामतिवैराग्यं वारयति। एनसः पापात् निवृत्ता इन्द्रियवृत्तिः यस्य स जगदेकनाथः रघुः वेदविदां वरेण श्रेष्ठेन द्विजेन कौत्सेन इत्थम् आवेदितः निवेदितः सन् एनं कौत्सं भूयः पुनः जगाद ॥२३॥

गुर्वर्थमिति। श्रुतस्य पारं दृष्टवान् श्रुतपारदृश्वा। दृशेः क्वनिविति क्वनिप्। गुर्वर्थं गुरुदक्षिणार्थं यथा तथा अर्थी याचकः। विशेषणद्वयेनापि अस्याप्रत्याख्येयत्वमाह। रघोः सकाशात् कामं मनोरथम् अनवाप्य अप्राप्य वदान्यान्तरं गतः। "स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे" इत्यमरः। इत्येवंरूपः अयं परीवादस्य अपवादस्य नवः नूतनः प्रथमः अवतारः आविर्भावः मे माभूत् मास्तु। रघोरिति स्वनामग्रहणं

स त्वं प्रशस्ते महिते मदीये
वसंश्चतुर्थोऽग्निरिवाग्न्यगारे(१) ।
द्वित्राण्यहान्यर्हसि सोढुमर्हन्
यावद् यते साधयितुं त्वदर्थम् ॥ २५ ॥

तथेति तस्यावितथं प्रतीतः
प्रत्यग्रहीत् सङ्गरमग्रजन्मा ।
गामात्तसारां रघुरप्यवेक्ष्य
निष्क्रष्टुमर्थं चकमे कुबेरात् ॥ २६ ॥

सम्भावितत्वद्योतनार्थम् । तथाच, "सम्भावितस्य चाकीर्त्तिः मरणादतिरिच्यते" इति भावः ॥ २४ ॥

स इति । स त्वं महिते पूजिते प्रशस्ते प्रसिद्धे मदीये अग्न्यगारे त्रेताग्निशालायां, चतुर्थः अग्निः वसन् इव, द्वित्राणि द्वे त्रीणि वा अहानि दिनानि । "संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये" इति बहुव्रीहिः । बहुव्रीहौ संख्येये डजबहुगणादिति डच्, सोढुम् अर्हसि, हे अर्हन् मान्य त्वदर्थं तव प्रयोजनं साधयितुं यावत् यते यतिष्ये । "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् ॥ २५ ॥

तथेतीति । अग्रजन्मा ब्राह्मणः प्रतीतः प्रीतः सन्, तस्य रघोः अवितथम् अमोघं सङ्गरं प्रतिज्ञाम् । "अथ प्रतिज्ञा-

(१) "पिता वै गार्हपत्योऽग्निर्माताग्निर्दक्षिणः स्मृतः ।
गुरुराहवनीयस्तु साग्नित्रेता गरीयसी ॥ मनु । २ । २३१ ।

वसिष्ठमन्त्रोक्षणजात् प्रभावात्
उदन्वदाकाशमहीधरेषु।
मरुत्सखस्येव बलाहकस्य (१)
गतिर्विजघ्ने न हि तद्रथस्य॥ २७॥

अथाधिशिश्ये प्रयतः प्रदोषे
रथं रघुः कल्पितशस्त्रगर्भम्।

जिसंविदापत्सु सङ्गरः" इत्यमरः। तां गिरम् इति केचित् पठन्ति। तथा इति प्रत्यग्रहीत्। रघुः अपि गां भूमिम् आत्तसारां गृहीतधनाम् अवेक्ष्य कुबेरात् अर्थं निष्कष्टुम् आहर्तुं चक्रमे इयेष॥ २६॥

वसिष्ठेति। वसिष्ठस्य यत् मन्त्रेण उक्षणम् अभिमन्त्रप्रोक्षणं तस्मात् प्रभावात् सामर्थ्यात् हेतोः उदन्वदाकाशमहीधरेषु उदन्वति उदधौ आकाशे महीधरेषु वा, मरुत्सखस्य, मरुतः सखा इति तत्पुरुषः, बहुव्रीहौ समासान्ताभावात्। ततो वायुसहायस्येति लभ्यते। वारीणां वाहकः बलाहकः। पृषोदरादित्वात् साधु। तस्य इव मेघस्य इव, तद्रथस्य गतिः सञ्चारः न विजघ्ने न विहता हि॥ २७॥

अथेति। अथ प्रदोषे रजनीमुखे तत्काले यत्नाधिरोहणविधानात् प्रयतः धीरः रघुः समन्तात् भवः सामन्तः

(१) "बलाहकेन गत्यर्थं वायोरपेक्षितत्वात् मरुत् सखा यस्येति अभिमतः समासः। एवं सति "राजाहःसखिभ्यष्टच्" इति टच्प्रत्ययो न स्यात् तस्य तत्पुरुषे विधानात्, बलार्थित्वमेतत्" इति दिनकरः।

सामन्तसम्भावनयैव धीरः
कैलासनाथं तरसा जिगीषुः ॥ २८ ॥
प्रातः प्रयाणाभिमुखाय तस्मै
सविस्मयाः कोषगृहे नियुक्ताः।
हिरण्मयीं कोषगृहस्य मध्ये
वृष्टिं शशंसुः पतितां नभस्तः ॥ २९ ॥
तं भूपतिर्भासुरहेमराशिं
लब्धं कुबेरादभियास्यमानात्।

राजमात्रम् इति सम्भावनया एव कैलासनाथं कुबेरं तरसा बलेन जिगीषुः जेतुम् इच्छुः सन् कल्पितं सज्जितं शस्त्रं गर्भे यस्य तं रथम् अधिशिश्ये रथे शयितवान् इत्यर्थः। "अधि-शीङ्-स्थासां कर्म्मेति कर्म्मत्वम् ॥ २८ ॥

प्रातरिति। प्रातः प्रयाणाभिमुखाय तस्मै रघवे कोषगृहे नियुक्ताः अधिकृताः भाण्डारिकाः सविस्मयाः सन्तः कोषगृहस्य मध्ये नभस्तः नभसः। पञ्चम्यास्तसिल्प्रत्ययः। पतितां हिरण्मयीं सुवर्णमयीम्। दाण्डिनायनेत्यादिना निपातनात् साधु। वृष्टिं शशंसुः कथयामासुः ॥ २९ ॥

तमिति। भूपतिः रघुः अभियास्यमानात् अभिगमिष्यमानात् कुबेरात् लब्धं वज्रेण कुलिशेन भिन्नं सुमेरोः पादं(१) प्रत्यन्तपर्वतम् इव स्थितम्। "पादाः प्रत्यन्तपर्वताः" इत्यमरः।

(1) Both Dinakara and Vallabha read मन्नम् instead of पादम्।

दिदेश कौत्साय समस्तमेव
पादं सुमेरोरिव वज्रभिन्नम् ॥ ३० ॥
जनस्य(१)साकेतनिवासिनस्तौ
द्वावप्यभूतामभिनन्द्यसत्त्वौ ।
गुरुप्रदेयाधिकनिस्पृहोऽर्थी
नृपोऽर्थिकामादधिकप्रदश्च ॥ ३१ ॥
अथोष्ट्रवामीशतवाहितार्थं
प्रजेश्वरं प्रीतमना महर्षिः ।

शृङ्गं सुमेरोरिति क्वचित् पाठः । तं भासुरं भास्वरम् । भञ्ज-भासमिदोघुरजिति घुरच् । हिमराशिं समस्तं कृत्स्नमेव कौत्साय दिदेश ददौ न तु चतुर्दशकोटिमात्रमित्येवकारार्थः ॥ ३० ॥

जनस्येति । तौ अर्थिदातारौ द्वौ अपि साकेतनिवासिनः अयोध्यावासिनः । "साकेतः स्यादयोध्यायां कोशला नन्दिनी च सा" इति यादवः । जनस्य अभिनन्द्यसत्त्वौ स्तुत्यव्यवसायौ अभूताम् । "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः । कौ द्वौ गुरुप्रदेयात् अधिके अतिरिक्तद्रव्ये निस्पृहः अर्थी, अर्थि-कामात् अर्थिमनोरथात् अधिकं प्रददातीति तथोक्तः । "प्रे दाज्ञः" इति कप्रत्ययः । नृपश्च ॥ ३१ ॥

अथेति । अथ प्रीतमनाः महर्षिः कौत्सः संप्रस्थितः प्रस्था-

(१) "अधिक्षितो वाचमवोचदच्युतः" इत्यादौ यथा अधिक्षिप्तामिति विशेषणं तथात्र वाचो विशेषणयोगादपीति चिन्त्यम्" इति दिनकरः ।

स्पृशन् करेणानतपूर्वकायं
संप्रस्थितो वाचमुवाच कौत्सः ॥ ३२ ॥
किमत्र चित्रं यदि कामसूर्भूः
वृत्ते स्थितस्याधिपतेः प्रजानाम् ।
अचिन्तनीयस्तु तव प्रभावः
मनीषितं द्यौरपि येन दुग्धा ॥ ३३ ॥
आशास्यमन्यत् पुनरुक्तभूतं
श्रेयांसि सर्व्वाण्यधिजग्मुषस्ते ।

स्यमानः सन् । आशंसायां भूतवच्चेति भविष्यदर्थे क्तः । उष्ट्राणां क्रमेलकानां वामीनां वड़वानाञ्च शतैः वाहितार्थं प्रापितधनम् आनतपूर्वकायं विनयनम्रम् इत्यर्थः प्रजेश्वरं रघुं करेण स्पृशन् वाचम् उवाच ॥ ३२ ॥

किमिति । वृत्ते स्थितस्य । "न्यायेनार्ज्जनमर्थस्य, वर्द्धनं पालनं तथा । सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम् ॥" इति कामन्दकः । तस्मिन् वृत्ते स्थितस्य प्रजानाम् अधिपतेः नृपस्य भूः कामान् सूते इति कामसूः यदि । सत्सूद्विषद्रुहेत्यादिना क्विप् । अत्र कामप्रसवने किं चित्रं न चित्रम् इत्यर्थः । किन्तु तव प्रभावः महिमा तु अचिन्तनीयः येन त्वया द्यौः अपि मनीषितम् अभिलषितं दुग्धा । दुहेर्द्विकर्म्मकत्वादप्रधाने कर्मणि क्तः । "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्मणः" ॥ इति स्मरणात् ॥ ३३ ॥

पुत्रं लभस्वात्मगुणानुरूपं
भवन्तमीड्यं भवतः पितेव ॥ ३४ ॥
इत्थं प्रयुज्याशिषमग्रजन्मा(१)
राज्ञे प्रतीयाय गुरोः सकाशम् ।
राजापि लेभे सुतमाशु तस्मात्
आलोकमर्कादिव जीवलोकः ॥ ३५ ॥

आशास्यमिति । सर्व्वाणि श्रेयांसि शुभानि अधिजग्मुषः प्राप्तवतः ते तव अन्यत् पुत्रातिरिक्तम् आशास्यम् आशीःसाध्यम् आशंसनीयं वा पुनरुक्तभूतं सर्व्वं सिद्धम् इत्यर्थः । किन्तु ईड्यं स्तुत्यं भवन्तं भवतः पिता इव, आत्मगुणानुरूपं त्वया तुल्यगुणम् इत्यर्थः, पुत्रं लभस्व प्राप्नुहि ॥ ३४ ॥

इत्थमिति । अग्रजन्मा ब्राह्मणः । "अग्रजन्मा द्विजे श्रेष्ठे भ्रातरि ब्रह्मणि स्मृतः" इति विश्वः । इत्थं राज्ञे आशिषं प्रयुज्य दत्त्वा गुरोः सकाशं समीपं प्रतीयाय प्राप । राजा अपि जीवलोकः जीवसमूहः । "जीवः प्राणिनि गीष्पतौ" इति विश्वः । अर्कात् आलोकं प्रकाशम् इव, चैतन्यम् इति पाठे ज्ञानम् इव, तस्मात् ऋषेः अतिथेः आशु सुतं लेभे प्राप ॥३५॥

---

(१) अग्रे क्षत्रियादिवर्णानां पुरतः जन्म यस्य स अग्रजन्मा ब्राह्मणः । यदाह मनुः, "उत्तमाङ्गोद्भवात् ज्यैष्ठ्यात् ब्रह्मणश्चैव धारणात् । सर्व्वस्यैवास्य सर्गस्य धर्म्मतो ब्राह्मणो गुरुः" । "मखात् आशिषः प्रभावात्" इति वल्लभः ।

ब्राह्मे(१) मुहूर्त्ते किल तस्य देवी
कुमारकल्पं सुषुवे कुमारम् ।
अतः पिता ब्रह्मण एव नाम्ना
तमात्मजन्मानमजं चकार ॥ २६ ॥
रूपं तदोजस्वि तदेव वीर्य्यं
तदेव नैसर्गिकमुन्नतत्वम् ।

ब्राह्म इति । तस्य रघोः देवी महिषी ब्राह्मे । तस्येद-मित्यण् । ब्रह्मदेवताके अभिजिन्नामके मुहूर्त्ते किल ईषत् असमाप्तं कुमारं कुमारकल्पं, स्कन्दसदृशम् । ईषदसमाप्तावि-त्यादिना कल्पप्प्रत्ययः । कुमारं पुत्रं सुषुवे । "कुमारो बालके स्कन्दे" इति विश्वः । अतो ब्राह्ममुहूर्त्तोत्पन्नत्वात् पिता रघुः, ब्रह्मणः विधेः इव, नाम्ना तम् आत्मजन्मानं पुत्रम् अजम् अज-नामकं चकार । "अजो हरौ हरे कामे विधौ छागे रघोः सुते" इति विश्वः ॥ २६ ॥

रूपमिति । ओजस्वि तेजस्वि बलिष्ठं वा । "ओजस्तेजसि धातूनाम् अवष्टम्भप्रकाशयोः । ओजो बले च दीप्तौ च" इति विश्वः । रूपं वपुः । "अथ रूपं नपुंसकम् । स्वभावाकृति-

---

(१) सूर्योदयात् पूर्वं तृतीये मुहूर्त्ते इत्यर्थः । "रात्रेश्च पश्चिमे यामे मुहूर्त्तो ब्राह्म उच्यते" । "रात्रेस्तु घटिकाचतुष्टयं ब्राह्ममुहूर्त्तः" इति दिनकरः । स्मार्त्तमते रात्रेः; षोडशमुहूर्त्तात्मिकायाः पञ्चदशमुहूर्त्तो ब्रह्मदैवत्यः इति उच्यते, ज्योतिषमते तु षोडशमुहूर्त्त एव ब्राह्मसंज्ञयाभिधीयते ।

न कारणात् स्वाद् बिभिदे कुमारः
प्रवर्त्तितो दीप इव प्रदीपात् ॥ ३७ ॥
उपात्तविद्यं विधिवद् गुरुभ्यः
तं यौवनोद्भेदविशेषकान्तम् ।
श्रीः साभिलाषापि गुरोरनुज्ञां
धीरेव कन्या पितुराचकाङ्क्ष ॥ ३८ ॥

सौन्दर्य्यवपुषि श्लोकयव्दयोः" इति विश्वः। तत् एव पैतृकम् एव, वीर्य्यं शौर्य्यं तत् एव, नैसर्गिकं स्वाभाविकम् उन्नतत्वं तत् एव तादृशमेव इत्यर्थः। कुमारः बालकः, प्रवर्त्तितः उत्पादितः दीपः प्रदीपात् स्वोत्पादकदीपात् इव, स्वात् स्वकीयात्। पूर्व्वादिभ्यो नवभ्यो वेति स्माद्भावो वैकल्पिकः। कारणात् जनकात् न बिभिदे भिन्नो नाभूत्, सर्व्वात्मना तादृश एवाभूत् इत्यर्थः॥३७॥

उपात्तेति। गुरुभ्यः विधिवत् यथाशास्त्रम् उपात्तविद्यं लब्धविद्यम्। यौवनस्य उद्भेदात् आविर्भावात् हेतोः विशेषेण कान्तं सौम्यं तम् अजं प्रति साभिलाषा अपि श्रीः, धीरा स्थिरा उन्नतचित्ता। "स्थिरा चित्तोन्नतिर्या तु तद्धैर्य्यमिति संज्ञितम्" इति भूपालः। कन्या पितुः इव, गुरोः रघोः अनुज्ञाम् आचकाङ्क्ष इयेष। यौवराज्यार्होऽभूत् इत्यर्थः। अनुज्ञाशब्दात् पितृपारतन्त्र्यासुपमासामर्थ्यात् पाणिग्रहणयोग्यता च ध्वन्यते॥ ३८॥

अथेश्वरेण क्रथकैशिकानां(१)
स्वयंवरार्थं स्वसुरिन्दुमत्याः ।
आप्तः कुमारानयनोत्सुकेन
भोजेन दूतो रघवे विसृष्टः ॥ ३९

तं श्लाघ्यसम्बन्धमसौ विचिन्त्य
दारक्रियायोग्यदशञ्च पुत्रम् ।
प्रस्थापयामास ससैन्यमेनम्
ऋद्धां विदर्भाधिपराजधानीम्(२) ॥४०॥

अथेति । अथ स्वसुः भगिन्याः इन्दुमत्याः स्वयंवरार्थं कुमारस्य अजस्य आनयने उत्सुकेन क्रथकैशिकानां विदर्भदेशानाम् ईश्वरेण स्वामिना भोजेन राज्ञा आप्तः हितः दूतः रघवे विसृष्टः प्रेषितः । क्रियामात्रयोगेऽपि चतुर्थी ॥ ३९ ॥

तमिति । असौ रघुः तं भोजं श्लाघ्यसम्बन्धम् अनूचान(२) त्वादिगुणयोगात् स्पृहणीयसम्बन्धं विचिन्त्य विचार्य पुत्रं च दारक्रियायोग्यदशं विवाहयोग्यवयसं विचिन्त्य ससैन्यम् एनं पुत्रम् ऋद्धां समृद्धां विदर्भाधिपस्य भोजस्य राजधानीं पुरीं प्रस्थापयामास । धीयतेऽस्यामिति धानी । करणाधिकरणयोश्चेति अधिकरणे ल्युट्प्रत्ययः । राज्ञां धानी हि विग्रहः ॥४०॥

(1) Kratha and Kaisika were the sons of Vidarbha (a king of yadava branch of the lunar dynasty); and the name क्रथकैशिक is applied to the people and country of Vidarbha, the modern Berar.

(2) It was a large and powerful, kingdom, The name

तस्योपकार्य्या रचितोपचारा
वन्येतरा जानपदोपदाभिः ।
मार्गे निवासा मनुजेन्द्रसूनोः
बभूवुरुद्यानविहारकल्पाः ॥ ४१ ॥

तस्येति । उपकार्य्यासु राजयोग्येषु पटभवनादिषु । "सौधोऽस्त्री राजसदनमुपकार्य्योपकारिका" इति अमरवचनव्याख्याने चीरस्वामी, उपक्रियते उपकरोति वा पटमण्डपादि राजसदनमिति । रचिताः उपचाराः शयनादयः येषु ते तथोक्ताः जानपदानां जनपदेभ्यः आगतानाम् उपदाभिः उपायनैः वन्याः वने भवाः इतरे येषां ते वन्येतराः अवन्याः इत्यर्थः । न बहुव्रीहाविति सर्व्वनामसंज्ञानिषेधः । तत्पुरुषे सर्व्वनामसंज्ञा दुर्व्वारैव । तस्य मनुजेन्द्रसूनोः अजस्य मार्गे निवासाः वासनिकाः उद्यानानि आक्रीड़ाः । "पुमानाक्रीड़ उद्यानम्" इत्यमरः । तानि एव विहाराः विहारस्थानानि तत्कल्पाः तत्सदृशाः इत्यर्थः । ईषदसमाप्ताविति कल्पप्प्रत्ययः । बभूवुः ॥ ४१ ॥

remains in Beder which may have been the ancient capital. Vidarbha seems to have corresponded with the great part of Berar and Khandesh. Jayamagha father of Vidarbha having received nothing from his father went forth to settle where he might. He conquered the country along the Narmada and Rikshavat mountains and dwelt in Suktimati. The Bhojas, were the discendants of Mahabhoja, a pious prince of the yadava line, and they were called Mrittrikavates, being the princes of Mrittikavati by the Parnasa, a river in Malwa. See V. P. Book IV. Chap. XIII.

स नर्म्मदारोधसि सीकरार्द्रै-
र्मरुद्भिरानर्त्तितनक्तमाले ।
निवेशयामास विलङ्घिताध्वा
क्लान्तं रजोधूसरकेतु सैन्यम् ॥ ४२ ॥

अथोपरिष्टाद् भ्रमरैर्भ्रमद्भिः
प्राक्सूचितान्तःसलिलप्रवेशः ।
निर्धौतदानामलगण्डभित्तिः
वन्यः सरित्तो गज उन्ममज्ज ॥ ४३ ॥

स इति । विलङ्घिताध्वा अतिक्रान्तमार्गः स अजः सीकरार्द्रैः शीतलैः इत्यर्थः मरुद्भिः वातैः आनर्त्तिताः कम्पिताः नक्तमालाः चिरविल्लाख्यवृक्षभेदाः । "चिरविल्वो नक्तमालः करजश्च करञ्जके" इत्यमरः। यस्मिन् तस्मिन् निवेशार्हे इत्यर्थः। नर्म्मदायाः रोधसि रेवायाः तीरे क्लान्तं श्रान्तं रजोभिः धूसराः केतवः ध्वजाः यस्य तत् सैन्यं निवेशयामास ॥ ४२ ॥

अथेति । अथ उपरिष्टात् ऊर्द्धम् । उपर्य्युपरिष्टादिति निपातः । भ्रमद्भिः मदलोभात् इति भावः । भ्रमरैः प्राक् उन्मज्जनात् पूर्वं सूचितः ज्ञापितः अन्तःसलिले प्रवेशः यस्य सः तथोक्तः निर्धौतदाने क्षालितमदे अत एव अमले गण्डभित्ती यस्य स तथोक्तः । "दानं गजमदे त्यागे" इति शाश्वतः । प्रशस्तौ गण्डौ गण्डभित्ती । "प्रशंसावचनैश्च" इति समासः । भित्तिशब्दः प्रशस्तार्थः । तथा च गणरत्नमहोदधौ, "मतल्लिको-

निःशेषविक्षालितधातुनापि
वप्रक्रियामृक्षवतस्तटेषु (१) ।
नीलोर्द्ध्वरेखाशबलेन शंसन्
दन्तद्वयेनाश्मविकुण्ठितेन ॥ ४४ ॥
संहारविक्षेपलघुक्रियेण
हस्तेन तीराभिमुखः सशब्दम् ।

इमिश्राः स्युः प्रकाण्डस्थलभित्तयः" इति । भित्तिः प्रदेशो वा । "भित्तिः प्रदेशे कुड्येऽपि" इति विश्वः । निर्धौतदानेन अमला गण्डभित्तिः यस्य इति वा । वन्यः गजः सरित्तः नर्मदायाः सकाशात् । पञ्चम्यास्तसिल्प्रत्ययः । उन्ममज्ज उत्थितः ॥ ४३ ॥

निःशेषेति । कथम्भूतो गजः, निःशेषविक्षालितधातुना अपि धौतगैरिकादिना अपि नीलाभिः ऊर्द्ध्वाभिः रेखाभिः तटाभिघातजनिताभिः शबलेन कर्बुरेण । "चित्रं किर्म्मीरकल्माषशबलैताश्च कर्बुरे" इत्यमरः । अश्मभिः पाषाणैः विकुण्ठितेन कुण्ठीकृतेन दन्तद्वयेन ऋक्षवान् नाम कश्चित् तत्रत्यः पर्व्वतः तस्य तटेषु वप्रक्रियां वप्रक्रीड़ाम् उत्खातकेलिम् इत्यर्थः । "उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीड़ा निगद्यते" इति शब्दार्णवः । शंसन् कथयन् सूचयन् इत्यर्थः । युग्मकम् । ॥ ४४ ॥

संहारेति । संहारविक्षेपयोः सङ्कोचनप्रसारणयोः लघु-

(1) Rikshavan (meaning abounding in bears) is one of the Kulachalas of India ; it is identified by Professor Wilson with the mountains of Gondvana.

बभौ स भिन्दन् बृहतस्तरङ्गान्
वार्यर्गलाभङ्ग(१) इव प्रवृत्तः ॥ ४५ ॥
शैलोपमः शैवलमञ्जरीणां
जालानि कर्षन्नुरसा स पश्चात् ।
पूर्वं तदुत्पीडितवारिराशिः
सरित्प्रवाहस्तटमुत्ससर्प ॥ ४६ ॥
तस्यैकनागस्य(२) कपोलभित्त्योः
जलावगाहक्षणमात्रशान्ता ।

क्षिप्रेण क्षिप्रव्यापारेण । "लघुक्षिप्रमरं द्रुतम्" इत्यमरः । हस्तेन शुण्डादण्डेन । "हस्तो नक्षत्रभेदे स्यात् करेभकरयोरपि" इति विश्वः । सशब्दं सघोषं हस्तः तरङ्गान् भिन्दन् विदारयन् तीराभिमुखः स गजः, वारी गजबन्धनस्थानम् । "वारी तु गजबन्धनी" इति यादवः । तस्याः अर्गलायाः विष्कम्भस्य भङ्गे भञ्जने प्रवृत्तः इव, बभौ ॥ ४५ ॥

शैलेति । शैलोपमः स गजः शैवलमञ्जरीणां जालानि वृन्दानि उरसा कर्षन् पश्चात् तटम् उत्ससर्प पूर्वं तेन गजेन उत्पीडितः क्षुब्धः वारिराशिः यस्य सः सरित्प्रवाहः तटम् उत्ससर्प ॥ ४६ ॥

तस्येति । तस्य एकनागस्य एकाकिनः गजस्य कपोलभित्त्योः

---

(१) वारी गजबन्धनी सैव यस्याः तस्याः भङ्गे इति दिनकरः ।

(२) एक एव मुख्य नागस्य, 'एके मुख्यान्यकेवलाः' इत्यमरः ।

वन्येतरानेकपदर्शनेन
पुनर्दिदीपे मददुर्दिनश्रीः ॥ ४७ ॥
सप्तच्छदक्षीरकटुप्रवाहम्(१)
असह्यमाघ्राय मदं तदीयम् ।
विलङ्घिताधोरणतीव्रयत्नाः (२)
सेनागजेन्द्रा विमुखा बभूवुः ॥ ४८ ॥

जलावगाहेन क्षणमात्रं शान्ता निवृत्ता मददुर्दिनयोः मदवर्षलक्ष्मीः वन्येतरेषां ग्राम्याणाम् अनेकपानां द्विपानां दर्शनेन पुनः दिदीपे ववृधे ॥ ४७ ॥

सप्तच्छदेति । सप्तच्छदस्य वृक्षविशेषस्य क्षीरवत् कटुः सुरभिः प्रवाहः प्रसारः यस्य तम् । "कटुतिक्तकषायास्तु सौरभ्येऽपि प्रकीर्त्तिताः" इति यादवः । असह्यं तदीयं मदम् आघ्राय सेनागजेन्द्राः विलङ्घितः तिरस्कृतः आधोरणानां हस्तिपकानां तीव्रः महान् यत्नः यैः ते तथोक्ताः सन्तः । "आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः । विमुखाः पराङ्मुखाः बभूवुः ॥ ४८ ॥

(१) सप्तच्छदक्षीरस्य गन्धस्तु तीव्रः, न सुरभिः । तीव्रमदगन्धाघ्राणेनैव सेनागजानां विमुखत्वं युज्यते । अतः "क्षीरवत् कटुः सुरभिः" इति यत् टीकाकारेण व्याख्यातं तच्चिन्त्यम् ।

(२) आङ्पूर्वकात् धोरतेर्गतिचातुर्य्यवाचकादनट् । धोरि गजानां गतिचातुर्य्यमार्गांच उपादिशन्ति च ये एवाधोरणाः ।

स छिन्नबन्धद्रुतयुग्यशून्यं
भग्नाक्षपर्य्यस्तरथं क्षणेन ।
रामापरित्राणविहस्तयोधं
सेनानिवेशं तुमुलं चकार ॥ ४९ ॥

तमापतन्तं नृपतेरवध्यः
वन्यः करीति श्रुतवान् कुमारः ।
निवर्त्तयिष्यन् विशिखेन कुम्भे
जघान नात्यायतकृष्टशार्ङ्गः ॥ ५० ॥

स इति । स गजः छिन्नाः बन्धाः यैः ते छिन्नबन्धाः द्रुताः पलायिताः युगं वहन्तीति युग्याः वाहा यस्मिन् सः चासौ शून्यश्च तं, भग्नाः अक्षाः (१) रथावयवाः दारुविशेषाः । "अक्षो रथस्यावयवे पाशकेऽप्यक्षमिन्द्रियम्" इति शाश्वतः । येषां ते भग्नाक्षाः अत एव पर्य्यस्ताः पतिताः रथाः यस्मिन् तं रामाणां स्त्रीणां परित्राणे संरक्षणे विहस्ताः व्याकुलाः । "विहस्तव्याकुलौ समौ" इत्यमरः । योधाः यस्मिन् तं सेनानिवेशं शिविरं क्षणेन तुमुलं सङ्कुलं चकार ॥ ४९ ॥

तमिति । नृपतेः राज्ञः वन्यः करी अवध्यः इति श्रुतवान् शास्त्रात् ज्ञातवान् कुमारः आपतन्तम् अभिधावन्तं तं गजं निवर्त्तयिष्यन् न तु प्रहरिष्यन् अत एव नात्यायतम् अनतिदीर्घं यथा स्यात् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः ।

(१) अक्षा धुरकीलका इति दिनकरः ।

स विद्धमात्रः किल नागरूपम्
उत्सृज्य तद्विस्मितसैन्यदृष्टः।
स्फुरत्प्रभामण्डलमध्यवर्त्ति
कान्तं वपुर्व्योमचरं(१) प्रपेदे ॥ ५१ ॥

अथ प्रभावोपनतैः कुमारं
कल्पद्रुमोत्थैरवकीर्य्य पुष्पैः।
उवाच वाग्मी दशनप्रभाभिः
संवर्द्धितोरःस्थलतारहारः ॥ ५२ ॥

कृष्टशार्ङ्गः ईषदाकृष्टचापः सन् विशिखेन बाणेन कुम्भे जघान। अत चाक्षुषः। "लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्य्यात् इयं हि श्रीर्यत् करिणः", इति। अत एव युद्धादन्यत्रेति द्योतनार्थमेव वन्यग्रहणं कृतम् ॥ ५० ॥

स इति। स गजः विद्धमात्रः ताडितमात्रः किल न तु प्रहृतः तथापि नागरूपं गजशरीरम् उत्सृज्य तेन वृत्तान्तेन विस्मितैः तद्विस्मितैः सैन्यैः दृष्टः सन् स्फुरतः प्रभामण्डलस्य मध्यवर्त्ति कान्तं मनोहरं व्योमचरं वपुः प्रपेदे प्राप ॥ ५१ ॥

अथेति। अथ प्रभावेन उपनतैः प्राप्तैः कल्पद्रुमोत्थैः कल्पवृक्षोत्थैः पुष्पैः कुमारम् अजम् अवकीर्य्य अभिवृष्य दशनप्रभाभिः दन्तकान्तिभिः संवर्द्धिताः उरःस्थले ये तारहाराः

(१) व्योम्नि यो चरतीति व्योमचरं दिव्यम्।

मतङ्गशापादवलेपमूलात्
अवाप्तवानस्मि मतङ्गजत्वम् ।
अवेहि गन्धर्व्वपतेस्तनूजं(१)
प्रियंवदं मां प्रियदर्शनस्य ॥ ५३ ॥
स चानुनीतः प्रणतेन पश्चात्
मया महर्षिर्मृदुतामगच्छत् ।

स्थूलमुक्ताहाराः ते येन स तथोक्तः, वाचोऽस्य सन्तीति वाग्मी वक्ता । "वाचोग्मिनि," इति ग्मिनिः । स पुरुषः उवाच ॥५२॥

मतङ्गेति । अवलेपमूलात् गर्व्वहेतुकात् । "अवलेपस्तु गर्व्वे स्याल्लेपने-दूषणेऽपि च" इति विश्व. । मतङ्गस्य मुनेः शापात् मतङ्गजत्वम् अवाप्तवान् अस्मि, मां प्रियदर्शनस्य प्रियदर्शना-ख्यस्य गन्धर्व्वपतेः गन्धर्व्वराजस्य(२) तनूजं पुत्रम् । "स्त्रियां मूर्त्तिस्तनुस्तनू" इत्यमरः । तन्वादेर्वेत्यूडिति केचित् । प्रियवदं प्रियवदाख्यम् अवेहि जानीहि । प्रियं वदतीति प्रियंवदः । "प्रियवशे वदः खच्" इति खच्प्रत्ययः ॥ ५३ ॥

स इति । स महर्षिः प्रणतेन मया अनुनीतः सन् पश्चात् मृदुतां शान्तिम् अगच्छत्, तथाहि जलस्य उष्णत्वम् अग्नि-

(1) The Gandharvas live in the sky, guard the Soma, and are governed by Varuna. In epic poetry, they are the celestial musicians, or heavenly singers, who form the orchestra at the banquets of the gods and they belong, together with the Apsaras (their wives), to Indras' heaven, sharing also in his battles. See William's Sans, Dic. See also my note on Apsará further on

(२) चित्ररथस्य ।

उष्णत्वमग्न्यातपसंप्रयोगात्
शैत्यं हि यत् सा प्रकृतिर्जलस्य ॥ ५४ ॥

इक्ष्वाकुवंशप्रभवो यदा ते
भेत्स्यत्यजः कुम्भमयोमुखेन ।
संयोक्ष्यसे स्वेन वपुर्महिम्ना
तदेत्यवोचत् स तपोनिधिर्माम् ॥ ५५ ॥

संमोचितः सत्ववता त्वयाहं
शापाच्चिरप्रार्थितदर्शनेन ।
प्रतिप्रियं चेद्भवतो न कुर्यां
वृथा हि मे स्यात् स्वपदोपलब्धिः ॥ ५६ ॥

आतपस्य वा संप्रयोगात् सम्पर्कात् न तु प्रकृत्या उष्णत्वं, यत् शैत्यं सा प्रकृतिः स्वभावः। विधेयप्राधान्यात् सेति स्त्रीलिङ्ग-निर्देशः। महर्षीणां शान्तिरेव स्वभावो न क्रोधः इत्यर्थः ॥५४॥

इक्ष्वाक्विति। इक्ष्वाकुवंशः प्रभवः यस्य स अजः यदा ते कुम्भम् अयोमुखेन लोहाग्रेण शरेण भेत्स्यति विदारयिष्यति तदा स्वेन वपुषः महिम्ना पुनः संयोक्ष्यसे संङ्गंस्यसे इति स तपोनिधिः माम् अवोचत् ॥ ५५ ॥

संमोचित इति। चिरं प्रार्थितं दर्शनं यस्य तेन सत्ववता बलवता त्वया अहं शापात् संमोचितः मोक्षं प्रापितः, भवतः प्रतिप्रियं प्रत्युपकारं न कुर्यां चेत्, मे स्वपदोपलब्धिः स्वस्थान-

संमोहनं (१) नाम सखि ममास्त्रं
प्रयोगसंहारविभक्तमन्त्रम्।
गान्धर्व्वमादत्स्व यतः प्रयोक्तुः
नचारिहिंसा विजयश्च हस्ते ॥ ५७ ॥

अलं ह्रिया मां प्रति(२) यन्मुहूर्त्तं
दयापरोऽभूः प्रहरन्नपि त्वम्।
तस्मादुपच्छन्दयति प्रयोज्य
मयि त्वया न प्रतिषेधरौक्ष्यम् ॥ ५८ ॥

प्राप्तिः। "पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः। तथा स्यात् हि। तदुक्तम्, "प्रतिकर्त्तुमशक्तस्य जीविताम्मरणं वरम्" इति ॥ ५६ ॥

संमोहनमिति। हे सखे सखिशब्देन समप्राणतोक्ता। यथोक्तम्, "अत्यागसहनो बन्धुः सदैवानुमतः सुहृत्। एकक्रियं भवेन्मित्रं समप्राणः सखा मतः"॥ इति। प्रयोगसंहारयोः विभक्तमन्त्रं गान्धर्व्वं गन्धर्व्वदेवताकंसंमोह्यते अनेन इति संमोहनं नाम मम अस्त्रम् आदत्स्व गृहाण, यतः अस्मात् प्रयोक्तुः अस्त्रप्रयोगिणः अरिहिंसा न च, विजयश्च हस्ते हस्तगतो विजयो भवति इत्यर्थः ॥ ५७ ॥

ननु लज्जितः कथमस्त्रग्रहणपरः स्यामिति चेत् तत्राह, अलमिति। किञ्च, मां प्रति ह्रिया प्रहारनिमित्तया अलम्।

(१) "ममायाचमनम्" इति दिनकरः।
(२) मां प्रति दयापरोऽभूरित्यपपाठो दिनकरेणानुमतः।

तथेत्युपस्पृश्य पयः पवित्रं
सोमोद्भवायाः(१) सरितो नृसोमः।
उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं
जग्राह तस्मान्निगृहीतशापात् (२) ॥ ५९ ॥

कुतः यत् यतः हेतोः त्वं मां प्रहरन् अपि मुहूर्त्तं दयापरः कृपालुः अभूः, तस्मात् उपच्छन्दयति प्रार्थयमाने मयि त्वय प्रतिषेधः परिहारः स एव रौक्ष्यं पारुष्यं तत् न प्रयोज्यं न कर्त्तव्यम् ॥ ५८ ॥

तथेति। ना सोमः चन्द्रः इव नृसोमः। उपमितसमासः। "सोम ओषधिचन्द्रयोः". इति याम्नतः। पुरुषश्रेष्ठः इत्यर्थः।

(1) Williams says the river Narmada is called सोमोद्भवा, either because it is supposed to spring from the moon, or because it is considered to be the source of the celestial nectar सोम. The Narmada is also called मेकलकन्यका, because it issues from a hill called मेकल or मेखल. Visnupurana says, that it rises in the Vindhya mountains, while Vayupurana describes it as rising in the Riksha mountains in Gondvana. Mekhala is therefore either a part of the Vindhya or Riksha mountains. It was probably noted in olden times for सोमलता or moonplants; hence the Narmada may have been supposed to take its rise from Soma-juice, as the Jambunada is fabled to have issued from the juice of the fruits of the Jambu-tree growing at the confines of the Jambudvipa. But in the Vayu Purana it is said that "ऋतुपत्ना ये स्मृतास्ते सोमपाः ये पये: सुताः,

एवं तयोरध्वनि दैवयोगात्
आसेदुषोः सख्यमचिन्त्यहेतु ।
एको ययौ चैत्ररथप्रदेशान्‌(१)
सौराज्यरम्यानपरो(२) विदर्भान् ॥ ६० ॥
तं तस्थिवांसं नगरोपकण्ठे
तदागमारूढगुरुप्रहर्षः ।

अस्त्रवित् अस्त्रज्ञः स अजः तथेति, (तथास्तु इति) सोमः उद्भवः यस्याः सा तस्याः सोमोद्भवायाः सरितः नर्म्मदायाः । "रेवा तु नर्म्मदा सोमोद्भवा मेखलकन्यका" इत्यमरः । पवित्रं पयः उपस्पृश्य पीत्वा आचम्य इत्यर्थः । उदङ्मुखः सन् निगृहीतशापात् निवर्त्तितशापात् उपकृतात् इत्यर्थः । तस्मात् प्रियंवदात् अस्त्रमन्त्रं जग्राह ॥ ५९ ॥

एवमिति । एवम् अध्वनि मार्गे दैवयोगात् दैववशात् अचिन्त्यहेतु अनिर्द्धार्य्यहेतुकं सख्यं सखित्वम् । सख्युर्य इति यप्रत्ययः । आसेदुषोः प्राप्तवतोः तयोः मध्ये एकः गन्धर्वः चैत्ररथस्य कुबेरोद्यानस्य प्रदेशान् । अस्योद्यानं "चैत्ररथम्" इत्यमरः । अपरः अजः सौराज्येन राजन्वत्तया रम्यान् विदर्भान् विदर्भदेशान् ययौ ॥ ६० ॥

तमिति । नगरस्य उपकण्ठे समीपे तस्थिवांसं स्थितं

---

(१) चित्ररथस्य गन्धर्वपतेरिमे चैत्ररथास्तान् । 'चित्ररथएवात्र प्रियदर्शननामाभिहितः' । चैत्ररथस्य कुबेरोद्यानस्य प्रदेशानिति टीकाकारैः यदुक्तं तन्न मनोरमम् ।

(२) सु शोभनः राजा सुराजा तस्य भावः सौराज्यं ।

प्रत्युज्जगाम क्रथकैशिकेन्द्रः
चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली ॥ ६१ ॥
प्रवेश्य चैनं पुरमग्रयायी
नीचैस्तथोपाचरदर्पितश्रीः (१) ।
मेने यथा तत्र जनः समेतः
वैदर्भमागन्तुमजं गृहेशम् ॥ ६२ ॥
तस्याधिकारपुरुषैः प्रणतैः प्रदिष्टां
प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भाम् (२) ।

तम् अजं तस्य अजस्य आगमेन आगमनेन आरूढः उत्पन्नः गुरुः प्रहर्षः यस्य सः क्रथकैशिकेन्द्रः विदर्भराजः, प्रवृद्धोर्मिः ऊर्मिमाली समुद्रः चन्द्रम् इव प्रत्युज्जगाम ॥ ६१ ॥

प्रवेश्येति। एनम् अजम् अग्रयायी सेवाधर्म्मेण पुरो गच्छन् इत्यर्थः नीचैः नम्रः पुरं प्रवेश्य प्रवेशं कारयित्वा प्रीत्या अर्पितश्रीः तथा तेन प्रकारेण उपाचरत् उपचरितवान् यथा येन प्रकारेण तत्र पुरे समेतः मिलितः जनः वैदर्भं भोजम् आगन्तुं प्राघुणिकं मेने, अजं गृहेशं गृहपतिं मेने ॥ ६२ ॥

तस्येति। रघुप्रतिनिधिः रघुकल्पः रघुतुल्यः इत्यर्थः।

---

(१) अर्पिता अजाय दत्ता श्रीः राजयोग्यसमृद्धिः निजाधिकारसर्वपात्रमध्यादुपभोग्यवस्तु सम्पत् इति यावत् येन स तथोक्तः।

(२) प्राक् द्वारं यस्याः सा प्राग्द्वारा, सा चासौ वेदिश्च। तत्र विनिवेशितः हैमः कुम्भो यस्याः सा इति दिनकरः।

रम्यां रघुप्रतिनिधिः स नवोपकार्य्यां
वाल्यात् परामिव दशां मदनोऽध्युवास ॥ ६३ ॥
तत्र स्वयंवरसमाहृतराजलोकं
कन्याललाम कमनीयमजस्य लिप्सोः।
भावावबोधकलुषा(१) दयितेव रात्रौ
निद्रा चिरेण नयनाभिमुखी बभूव ॥ ६४ ॥

उक्तञ्च दण्डिना साहश्यवाचकप्रस्तावे, "कल्पदेशीयदेश्यादि-प्रख्यप्रतिनिधी अपि" इति। सः अजः प्रणतैः नमस्कुर्वद्भिः। कर्त्तरि क्तः। तस्य भोजस्य अधिकारः नियोगः तस्य पुरुषैः अधिकृतैः इत्यर्थः। प्रदिष्टां निर्दिष्टां प्राग्द्वारस्य वेद्यां निनिवेशितः प्रतिष्ठापितः पूर्णकुम्भः यस्याः तां स्थापितमङ्गलकलसाम् इत्यर्थः। रम्यां रमणीयां नवोपकार्य्यां नूतनं राजभवनम्। "उपकार्य्या राजसद्मन्युपचारचितेऽन्यवत्" इति विश्वः। मदनः वाल्यात् परां शैशवात् अनन्तरां दशाम् इव यौवनम् इव इत्यर्थः अध्युवास अधिष्ठितवान्, तत्रोषितवान् इत्यर्थः। "उपान्वध्याङ्वसः" इति कर्म्मत्वम् ॥ ६३ ॥

तत्रेति। तत्र उपकार्य्यायां स्वयंवरनिमित्तं समाहृतः संमेलितः राजलोकः येन तत् कमनीयं स्पृहनीयं कन्याललाम कन्यासु श्रेष्ठम्। "ललामोऽस्त्री ललामापि प्रभावे पुरुषे ध्वजे। श्रेष्ठभूषापुण्ड्रशृङ्गपुच्छचिह्नाश्वलिङ्गिषु" इति

(1) Sankara explains this by "dissatisfied with her husband by her knowledge of his infidelity."

तं कर्णभूषणनिपीडितपीवरांसं
शय्योत्तरच्छदविमर्दकृशाङ्गरागम् ।
सूतात्मजाः(१) सवयसः प्रथितप्रबोधं
प्राबोधयन्नुषसि वाग्भिरुदारवाचः ॥ ६५ ॥
रात्रिर्गता मतिमतां वर मुञ्च शय्यां
धात्रा द्विधैव ननु धूर्जगतो विभक्ता ।

यादवः । लिप्सोः लब्धुम् इच्छोः । लभेः सनन्तादुप्रत्ययः । अजस्य भावावबोधे पुरुषस्य अभिप्रायपरिज्ञाने कलुषा असमर्था दयिता इव, रात्री निद्रा चिरेण नयनाभिमुखी बभूव । "राजानं कामिनं चौरं प्रविशन्ति प्रजागराः" इति भावः । अभिमुखीशब्दो ङीपन्तः च्व्यन्तो वा ॥ ६४ ॥

तमिति । कर्णभूषणाभ्यां निपीडितौ पीवरौ पीनौ अंसौ यस्य तं शय्यायाः उत्तरच्छदस्य उपर्यास्तरणवस्त्रस्य विमर्देन घर्षेण कृशः विरलः अङ्गरागः यस्य तं, न त्वङ्गनासङ्गात् इति भावः । प्रथितप्रबोधं प्रकटज्ञानं तम् एनम् अजं सवयसः समानवयस्काः उदारवाचः प्रगल्भगिरः सूतात्मजाः वन्दिपुत्राः, वैतालिका इति वा पाठः । "वैतालिका बोधकराः" इत्यमरः । वाग्भिः स्तुतिपाठैः उषसि प्राबोधयन् प्रबोधयामासुः ॥ ६५ ॥

रात्रिरिति । हे मतिमतां वर, निर्धारणे षष्ठी । रात्रिः गता, शय्यां मुञ्च विनिद्रो भव इत्यर्थः । विनिद्रत्वे फलमाह,

---

(1) A Suta was both a bard and a charioteer.. The patriarch of the race was लोमहर्षण, who recited the Puranas to Saunaka and

तामेकतस्तव बिभर्त्ति गुरुर्विनिद्र-
स्तस्या भवानपरधुर्य्यपदावलम्बी ॥ ६६ ॥

निद्रावशेन भवताप्यनपेक्षमाणा
पर्य्युत्सुकत्वमबला निशि खण्डितेव ।

धात्रेति । धात्रा ब्रह्मणा जगतः धूः भारः । "धूः स्याद्यानमुखे भारे" इति यादवः । द्विधा एव द्वयोरेव इत्यर्थः । एवकारः तृतीयनिषेधार्थः । विभक्ता ननु विभज्य स्थापिता खलु । तत् किमत आह, तां धुरम् एकतः एककोटौ तव गुरुः पिता विनिद्रः सन् बिभर्त्ति, तस्याः धुरः भवान् धुरं वहतीति धुर्य्यः भारवाही तस्य पदं वहनस्थानम् अपरं यत् धुर्य्यपदं तदवलम्बी ततो विनिद्रो भव इत्यर्थः । न ह्युभयवाह्यम् एको वहति इति भावः ॥ ६६ ॥

निद्रेति । चन्द्रारविन्दराजवनादयो लक्ष्मीनिवासस्थानानीति प्रसिद्धिमाश्रित्योच्यते । निद्रावशेन निद्राधीनेन स्त्र्यन्तरासङ्गो ध्वन्यते । भवता पर्य्युत्सुकत्वम् अपि त्वय्यनुरक्तत्वमपि

---

his companions in the Naimisaranya in Oude. "प्राप्यव्यासात् पुराणादि सूतो वै लोमहर्षणः । सुमतिश्चाग्निवर्चाश्च मित्रयुः शांशपायनः । अकृतव्रणोऽथ सावर्णिः षट् शिष्यास्तस्य चाभवन्" इति । This caste was originated both from Brahmans and Kshatriyas as observed by the sage याज्ञवल्क्य (ब्राह्मण्यां क्षत्रियात् सूतः).The dignity of their office and the sacredness of their person are evinced by the following verses quoted from the Vayupurana. "वैन्यस्य तु पृथोर्यज्ञे वर्त्तमाने महात्मनः । सुत्यायामभवत् सूतः प्रथमं वर्णवैकृतः । ऐन्द्रेण हविषा तत्र हविः पृक्तं बृहस्पतेः । जुहावेन्द्राय दैवेन ततः सूतो व्यजायत । शिष्यहव्येन सम्पृक्तमभिभूतं गुरोर्हविः । अधरोत्तरचारेण जज्ञे तत् वर्णवैकृतम्" । तस्मात् [illegible] ।

लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः(१) ॥६७॥

इत्यर्थः। प्रसितोत्सुकाभ्यां तृतीया चेति सप्तम्यर्थे तृतीया। अपिशब्दस्त्वद्विषयानुरागस्यानुपेक्ष्यत्वद्योतनार्थः। निशि खण्डिता भर्त्तुः अन्यासङ्गज्ञानकलुषिता अबला इव नायिका इव। "ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता" इति दशरूपके। अनपेक्षमाणा अविचारयन्ती सती उपेक्षमाणा इत्यर्थः लक्ष्मीः येन चन्द्रेण सह त्वदाननसदृशत्वात् इति भावः विनोदयति विनोदं करोति। विनोदशब्दात् "तत् करोति तदाचष्टे" इति णिच्। सादृश्यदर्शनादयो हि विरहिणां विनोदस्थानानि इति भावः। स चन्द्रोऽपि दिगन्तलम्बी पश्चिमाशां गतः सन् अस्तं गच्छन् इत्यर्थः अत एव त्वदाननरुचिं विजहाति त्वन्मुखसादृश्यं त्यजति इत्यर्थः। अतो निद्रां विहाय तां लक्ष्मीमनन्यशरणां ]परिगृहाण इति भावः। अथवा निद्रावशेन भवता अनपेक्ष्यमाणा अनिरीक्ष्यमाणा। कर्मणि शानच्। लक्ष्मीः प्रयोजककर्त्री येन चन्द्रेण प्रयोज्येन पर्युत्सुकत्वं त्वद्विरहवेदनाम्। "कालाक्षमत्वमौत्सुक्यं मनस्तापत्वरादिकृत्" इत्यलङ्कारे।

---

(1) Dinakara says that this stanza is an interpolation (क्षेपोऽयम्) He explains अनपेक्षमाणा by अनभिलषन्ती। Vallabba reads "भवता अनवेक्ष्यमाणा" and explains it saying भवता निद्रावशेन अनवेक्ष्यमाणा अवीक्ष्यमाणा सती &c। He explains खण्डिता by quoting "निद्राकषायमुकुलीकृतताम्रनेत्रः नारीनखव्रणविशेषविचित्रिताङ्गः। यस्याः कुतोऽपि गृहमेति पतिः प्रभाते सा खण्डितेति कथिता कविभिः पुराणैः॥"

तद्वल्गुना युगपदुन्मिषितेन तावत्
सद्यः परस्परतुलामधिरोहतां द्वे ।
प्रस्पन्दमानपरुषेतरतारमन्तः
चक्षुस्तव प्रचलितभ्रमरञ्च पद्मम् ॥ ६८ ॥
वृन्ताच्छ्लथं हरति पुष्पमनोकहानां(१)
संसृज्यते सरसिजैररुणांशुभिन्नैः ।

विनोदयति निरासयतीति योजना। शेषं पूर्ववत्। नाथस्तु, "अर्थोपपत्तिमपश्यन् इमं पक्षमुपैक्षिष्ट" ॥ ६७ ॥

तदिति। तत् तस्मात् लक्ष्मीपरिग्रहणात् वल्गुना मनोज्ञेन। "वल्गु स्थाने मनोज्ञे च वल्गु भाषितमन्यवत्" इति विश्वः। युगपत् तावत् उन्मिषितेन युगपत् एव उन्मीलितेन सद्यः द्वे अपि परस्परतुलाम् अन्योन्यसादृश्यम् अधिरोहतां प्राप्नुताम्। प्रार्थनायां लोट्। के द्वे अन्तः प्रस्पन्दमाना चलन्ती परुषेतरा स्निग्धा तारा कनीनिका यस्य तथोक्तम्। "तारकाक्ष्णः कनीनिका" इत्यमरः। तव चक्षुः, अन्तः प्रचलितभ्रमरं चलद्भृङ्गं पद्मञ्च। युगपदुन्मेषे सति सम्पूर्णसादृश्यलाभः इति भावः ॥ ६८ ॥

वृन्तादिति। विभातवायुः स्वाभाविकं नैसर्गिकं ते तव मुखमारुतस्य निश्वासपवनस्य सौरभ्यं तादृक् सौगन्ध्यम् इत्यर्थः परगुणेन अन्यदीयगुणेन सांक्रामिकगन्धेन इत्यर्थः ईप्सुः आप्तुमिच्छुः इव। आपज्ञप्यृधामीति ईकारादेशः। अनोकहानां वृक्षाणां श्लथं शिथिलं पुष्पं वृन्तात् पुष्पबन्धनात्। "वृन्तं प्रसव-

(१) अनसां शकटानां अकं गतिं हन्तीति अनोकहः। अनः शकटमस्त्रीत्यमरः।

स्वाभाविकं परगुणेन विभातवायुः
सौरभ्यमीप्सुरिव ते मुखमारुतस्य ॥ ६९ ॥

ताम्रोदरेषु पतितं तरुपल्लवेषु
निर्धौतहारगुलिकाविशदं हिमाम्भः ।
आभाति लब्धपरभागतयाऽधरोष्ठे
लीलास्मितं सदशनार्चिरिव त्वदीयम् ॥ ७० ॥

यावत् प्रतापनिधिराक्रमते न भानुः
अह्नाय तावदरुणेन तमो निरस्तम् ।

बन्धनम्" इत्यमरः । हरति आदत्ते, अरुणांशुभिन्नैः तरणिकिरणोद्बोधितैः सरसि जातैः सरसिजैः कमलैः सह । "तत्पुरुषे कृति बहुलम्" इति सप्तम्या अलुक् । संवल्गते सङ्गच्छते । वल्गेर्भ्वादिकात् कर्त्तरि लट् ॥ ६९ ॥

ताम्रेति । ताम्रोदरेषु अरुणाभ्यन्तरेषु तरुपल्लवेषु पतितं निर्धौता या हारगुलिका मुक्तामणयः तद्वत् विशदं हिमाम्भः लब्धपरभागतया लब्धोत्कर्षतया । "परभागो गुणोत्कर्षे" इति यादवः । अधरोष्ठे त्वदीयं सदशनार्चिः दन्तकान्तिसहितं लीलास्मितम् इव आभाति शोभते ॥ ७० ॥

यावदिति । प्रतापनिधिः तेजोनिधिः भानुः यावत् न आक्रमते न उद्गच्छति । "आङ उद्गमने" इत्यात्मनेपदम् । भानावनुदित एव इत्यर्थः । अह्नाय झटिति । "द्राक् झटित्यञ्जसाऽह्नाय" इत्यमरः । अरुणेन अनूरुणा । "सूरसूतोऽरुणोऽनूरुः" इत्यमरः ।

आयोधनाग्रसरतां(१) त्वयि वीर याते
किंवा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति ॥ ७१ ॥
शय्यां जहत्युभयपक्षविनीतनिद्राः(२)
स्तम्बेरमा मुखरशृङ्खलकर्षिणस्ते ।
येषां विभान्ति तरुणारुणरागयोगात्
भिन्नाद्रिगैरिकतटा इव दन्तकोशाः ॥ ७२ ॥

तावत् तमः निरस्तम्। तथाहि, हे वीर त्वयि आयोधनेषु युद्धेषु। "युद्धमायोधनं जन्यम्" इत्यमरः। अग्रसरतां पुरःसरतां याते सति तव गुरुः पिता रिपून् स्वयम् उच्छिनत्ति किंवा नोच्छिनत्त्येव इत्यर्थः। न खलु योग्यपुत्रन्यस्तभाराणां स्वामिनां स्वयं व्यापारखेदः इति भावः ॥ ७१ ॥

शय्यामिति। उभाभ्यां पक्षाभ्यां पार्श्वाभ्यां विनीता निद्रा येषां ते उभयपक्षविनीतनिद्राः। अत्र समासविषये उभशब्दस्थाने उभयशब्दप्रयोग एव साधुः इत्यनुसन्धेयम्। यथाह कैयटः, "उभादुदात्तो नित्यमिति नित्यग्रहणस्येदं प्रयोजनं वृत्तिविषये उभशब्दस्य प्रयोगो मा भूत् उभयशब्दस्यैव यथा स्यात् उभयपुत्र इत्यादि भवति" इति। मुखराणि उत्थानचलनात् शब्दायमानानि शृङ्खलानि निगडानि कर्षन्तीति तथोक्ताः ते तव स्तम्बे रमन्तीति स्तम्बेरमाः हस्तिनः। स्तम्बकर्णयोरमिजपोरित्यच्प्रत्ययः। हस्तिसूचकयोरिति वक्तव्यात्।

(१) "त्वयि संग्रामाग्रभूमिं प्राप्ते सतीति" चरमः।
(२) "विनीता विदिता" इति दिनकरः।

दीर्घेष्वमी नियमिताः पटमण्डपेषु
निद्रां विहाय वनजाक्ष वनायुदेश्याः (१) ।
वक्त्रोष्मणा मलिनयन्ति पुरोगतानि
लेह्यानि सैन्धवशिलाशकलानि वाहाः ॥ ७३ ॥
भवति विरलभक्तिर्म्लानपुष्पोपहारः

"इभः स्तम्बेरमः पद्मी" इत्यमरः । तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक् । शय्यां जहति त्यजन्ति । येषां स्तम्बेरमाणां दन्ताः कोशाः इव दन्तकोशाः दन्तकुड्मलाः तरुणारुणरागयोगात् बालार्कारुणसम्पर्कात् हेतोः भिन्नाद्रिगैरिकतटाः इव विभान्ति धातुरक्ता इव भान्ति इत्यर्थः ॥ ७२ ॥

दीर्घेष्विति । हे वनजाक्ष नीरजाक्ष "वनं नीरं वनं सलम्" इति शाश्वतः । दीर्घेषु पटमण्डपेषु नियमिताः बद्धाः वनायुदेश्याः वनायुदेशे भवाः । "पारसीका वनायुजाः" इति हलायुधः । अमी वाहाः अश्वाः निद्रां विहाय पुरोगतानि लेह्यानि आस्वाद्यानि सैन्धवशिलाशकलानि । "सैन्धवोऽस्त्री सितशिवं माणिमन्थञ्च सिन्धुजः" इत्यमरः । वक्त्रोष्मणा मलिनयन्ति मलिनानि कुर्वन्ति । उक्तञ्च सिद्धयोगसंग्रहे, "पूर्वाह्णकाले घाशानां मायमो लवणं हितम् । शूलमोहविबन्धघ्नं लवणं सैन्धवं वरम्" इत्यादि ॥ ७३ ॥

(1) The Vanayus were a people of the north-west of India, celebrated for their horses.

स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः ।
अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्ताम्
अनुवदति शुकस्ते मञ्जुवाक् पञ्जरस्थः ॥ ७४ ॥
इति विरचितवाग्भिर्वन्दिपुत्रैः कुमारः
सपदि विगतनिद्रस्तल्पमुज्झाञ्चकार ।
मदपटु निनदद्भिर्बोधितो राजहंसैः
सुरगज इव गाङ्गं सैकतं सुप्रतीकः ॥ ७५ ॥

भवतीति । स्नानः पुष्पोपहारः पुष्पपूजा स्नानत्वादेव विरलभक्तिः विरलरचनः भवति । प्रदीपाश्च स्वकिरणानां परिवेषस्य मण्डलस्य उद्भेदेन स्फुरणेन शून्याः भवन्ति निस्तेजस्का भवन्ति इत्यर्थः । अपि च अयं मञ्जुवाक् मधुरवचनः पञ्जरस्थः ते तव शुकः त्वत्प्रबोधनिमित्तं प्रयुक्ताम् उच्चारितां नः अस्माकं गिरं वाणीम् अनुवदति अनुकृत्य वदति इत्यर्थः । इत्थं प्रभातलिङ्गानि वर्त्तन्ते अतः प्रबोद्धव्यम् इति भावः ॥ ७४ ॥

इतीति । इति इत्थं विरचितवाग्भिः वन्दिपुत्रैः वैतालिकैः । पुत्रग्रहणं समानवयस्कत्वद्योतनार्थम् । सपदि विगतनिद्रः कुमारः तल्पं शय्याम् । "तल्पं शय्याट्टदारेषु" इत्यमरः । उज्झाञ्चकार विससर्ज । इजादेश्च गुरुमतोऽनृच्छ इत्याम्प्रत्ययः । कथमिव मदेन पटु मधुरं निनदद्भिः राजहंसैः बोधितः सुप्रतीकाख्यः सुरगजः ईशानदिग्गजः गङ्गायाः इदं गाङ्गं सैकतं पुलिनम् इव । "तोयोत्थितं तत् पुलिनं सैकतं सिकतामयम्"

अथ विधिमवसाय्य शास्त्रदृष्टं
दिवसमुखोचितमञ्चिताक्षिपक्ष्मा ।
कुशलविरचितानुकूलवेषः
क्षितिपसमाजमगात् स्वयंवरस्थम् ॥ ७६ ॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ अज-
स्वयंवराभिगमनो नाम पञ्चमः सर्गः ।

इत्यमरः। "सिकताशर्कराभ्यां च" इत्यण्प्रत्ययः। सुप्रतीकग्रहणं प्रायशः कैलासवासिनस्तस्य नित्यं गङ्गातटविहारसम्भवादित्यनुसन्धेयम् ॥ ७५ ॥

अथेति। अथ उत्थानानन्तरम् अञ्चितानि चारूणि अक्षिपक्ष्माणि यस्य स अजः शास्त्रे दृष्टम् अवगतं दिवसमुखोचितं प्रातःकालोचितं विधिम् अनुष्ठानम् अवसाय्य समाप्य। स्यतेर्ण्यन्तात् ल्यप्। कुशलैः प्रसाधनदक्षैः विरचितः अनुकूलः स्वयंवरोचितः वेषः नैपथ्यं यस्य स तथोक्तः सन् स्वयंवरस्थं क्षितिपसमाजं राजसमूहम् अगात् अगमत्। "इणो गा लुङि" इति गादेशः। पुष्पिताग्रावृत्तमेतत् तल्लक्षणम्, "अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति ॥ ७६ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरि-विरचितायां रघुवंशव्याख्यायां सञ्जीविनीसमाख्यायां पञ्चमः सर्गः।

---

## षष्ठः सर्गः।

---

स तत्र मञ्चेषु मनोज्ञवेषान्
सिंहासनस्थानुपचारवत्सु ।
वैमानिकानां मरुतामपश्यत्(१)
आकृष्टलीलान् नरलोकपालान् ॥ १ ॥

जाह्नवी मूर्द्धि पादे वा कालः कण्ठे वपुष्यथ ।
कामारिं कामतातं वा कञ्चिद्देवं जगामहे ॥

स इति। स अजः तत्र स्थाने उपचारवत्सु राजोपचारयुक्तेषु मञ्चेषु पर्य्यङ्केषु सिंहासनस्थान् मनोज्ञवेषान् मनोहरनेपथ्यान् वैमानिकानां विमानैश्चरताम्। चरतीति ठक्प्रत्ययः। मरुताम् अमराणाम्। "मरुतौ पवनामरौ" इत्यमरः। आकृष्टलीलान् गृहीतसौभाग्यान् आकृष्टमरुल्लीलान् इत्यर्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। नरलोकं पालयन्तीति नरलोकपालाः। कर्म्मण्यण्प्रत्ययः। तान् भूपालान् अपश्यत्। सर्गेऽस्मिन्नुपजातिः छन्दः ॥ १ ॥

---

(1) In the vedic hymns the Maruts are represented as allies to Indra. They are called इन्द्रज्येष्ठाः having Indra for their senior, or chief, पृश्निमातरः having पृश्नि ( earth ) for their mother, and स्वभानोः विद्युतो जाताः produced from the blazing lightning. The Maruts are invoked to kill वृत्र under Indra—"हतवृत्रं सुदानव इन्द्रेण सहसा युजा। मा नो दुःशंस ईशत" Rig. i 23. 7 12. They are also represented as allied to Agni and described as conver-

रतेर्गृहीतानुनयेन कामं
प्रत्यर्पितस्वाङ्गमिवेश्वरेण ।
काकुत्स्थमालोकयतां नृपाणां
मनो बभूवेन्दुमतीनिराशम् ॥ २ ॥

रतेरिति। "रतिः स्मरप्रियायाञ्च रागे च सुरते स्मृता" इति विश्वः। रतेः कामप्रियायाः गृहीतानुनयेन स्वीकृतप्रार्थनेन गृहीतरत्यनुनयेन इत्यर्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। ईश्वरेण हरेण प्रत्यर्पितस्वाङ्गं कामम् इव स्थितं काकुत्स्थम् अजम् आलोकयतां नृपाणां मनः इन्दुमतीनिराशं वैदर्भीनिस्पृहं बभूव। इन्दुमती सत्पतिमेनं विहाय नास्मान् वरिष्यतीति निश्चिक्युः इत्यर्थः। सर्व्वातिशयसौन्दर्यमस्य इति भावः ॥ २ ॥

---

sant with the phenomenon of rain, fierce-looking, unconquerable, devourers of foes, propelling the clouds, agitating the sea, sitting above the sun and extending to the sky with their rays. Rig i 19. 1-9. In the Puranas they are represented as sons of Diti and 49 in number. The story of their birth runs thus—Diti, retired one night without performing the ablution of her feet, and fell asleep. On which the Thunderer divided with his thunderbolt the embryo in her womb into seven portions. The child, thus mutilated, cried bitterly. Indra tried to console it by saying (मा रोदीः weep not), but failing in this, was so incensed as to divide each of the seven portions into seven, thereby calling into existence the forty-nine gods, known as Maruts. In later Sanskrit the word मरुत् came to be used as a term signifying gods in general.

वैदर्भनिर्दिष्टमसौ कुमारः
क्लृप्तेन सोपानपथेन मञ्चम्।
शिलाविभङ्गैर्मृगराजशावः
तुङ्गं नगोत्सङ्गमिवारुरोह(१) ॥ ३ ॥
परार्द्ध्यवर्णास्तरणोपपन्नम्
आसेदिवान् रत्नवदासनं सः।
भूयिष्टमासीदुपमेयकान्तिः
मयूरपृष्ठाश्रयिणा गुहेन ॥ ४ ॥

वैदर्भेति। असौ कुमारः वैदर्भेण भोजेन निर्दिष्टं प्रदर्शितं मञ्चं पर्य्यङ्कं क्लृप्तेन सुविहितेन सोपानपथेन, मृगराजशावः सिंहपोतः। "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः। शिलानां विभङ्गैः भङ्गीभिः तुङ्गम् उन्नतं नगोत्सङ्गं शैलाग्रम् इव, आरुरोह ॥ ३ ॥

परार्द्ध्येति। परार्द्ध्याः श्रेष्ठाः वर्णाः नीलपीतादयः यस्य तेन आस्तरणेन कम्बलादिना उपपन्नं सङ्गतं रत्नवत् रत्नखचितम् आसनं सिंहासनम् आसेदिवान् अधिष्ठितवान् स अजः मयूरपृष्ठाश्रयिणा गुहेन सेनान्या सह। "सेनानीरग्निभूर्गुहः" इत्यमरः। भूयिष्ठम् अत्यर्थम् उपमेयकान्तिः आसीत्। मयूरस्य विचित्ररूपत्वात् तत्साम्यं रत्नासनस्य तद्द्वारा च तदारूढयोरपि इति भावः ॥ ४ ॥

---

(१) "घोषीनृपडमघयविसृष्टो माघ भवमयिमा·" इत्यत्रापि उपरिभागरूपार्थे उत्सङ्गशब्दः प्रयुक्तः।

तासु श्रिया(१) राजपरम्परासु
प्रभाविशेषोदयदुर्निरीक्ष्यः ।
सहस्रधात्मा व्यरुचद्विभक्तः
पयोमुचां पङ्क्तिषु विद्युतेव ॥ ५ ॥

तेषां महार्हासनसंस्थितानाम्
उदारनेपथ्यभृतां स मध्ये ।
रराज धाम्ना रघुसूनुरेव
कल्पद्रुमाणामिव पारिजातः ॥ ६ ॥

तास्विति । तासु राजपरम्परासु श्रिया लक्ष्म्या कर्त्र्या, पयोमुचां मेघानां पङ्क्तिषु विद्युता इव, सहस्रधा विभक्तः तरङ्गेषु तरणिरिव स्वयमेक एव प्रत्येकं संक्रामितः इत्यर्थः । प्रभाविशेषस्य उदयेन आविर्भावेन दुर्निरीक्ष्यः दुर्दर्शनः आत्मा श्रियः स्वरूपं व्यरुचत् व्यद्योतिष्ट । द्युद्भ्यो लुङीति परस्मैपदं द्युतादित्वादङ्प्रत्ययः । तस्मिन् समये प्रत्येकं संक्रान्तलक्ष्मीकतया तेषां किमपि दुरासदं तेजः प्रादुरासीत् इत्यर्थः ॥ ५ ॥

तेषामिति । महार्हासनसंस्थितानां श्रेष्ठसिंहासनस्थानाम् उदारनेपथ्यभृताम् उज्ज्वलवेशधारिणां तेषां राज्ञां मध्ये, कल्पद्रुमाणां मध्ये पारिजातः इव सुरद्रुमविशेषः इव । "पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि

(१) श्रिया कान्त्यधिष्ठात्र्या देव्या इत्यर्थः ।

नेत्रव्रजाः पौरजनस्य तस्मिन्
विहाय सर्व्वान् नृपतीन् निपेतुः ।
मदोत्कटे रेचितपुष्पवृक्षाः
गन्धद्विपे(१) वन्य इव द्विरेफाः ॥ ७ ॥
अथ स्तुते वन्दिभिरन्वयज्ञैः
सोमार्कवंश्ये नरदेवलोके ।

वा हरिचन्दनम् ॥" इत्यमरः । स रघुसूनुः एव धाम्ना तेजसा रराज । भूम्नेति पाठे अतिशयेन इत्यर्थः । अत्र कल्पद्रुम-शब्दः पञ्चान्यतमविशेषवचनः उपकल्पयन्ति मनोरथानिति व्युत्पत्त्या सुरद्रुममात्रोपलक्षकतया प्रयुक्त इत्यनुसन्धेयम् । कल्पाः इति द्रुमाः कल्पद्रुमाः इति विग्रहः ॥ ६ ॥

नेत्रेति । पौरजनस्य नेत्रव्रजाः सर्व्वान् नृपतीन् विहाय तस्मिन् अजे निपेतुः स एव सर्व्वोत्कर्षेण ददृशे इत्यर्थः । कथमिव मदोत्कटे मदेन उद्भिन्नगण्डे निर्भरमदे वा वन्ये गन्धद्विपे गन्धप्रधाने द्विपे गजे रेचिताः रिक्तीकृताः पुष्पाणां वृक्षाः यैः ते त्यक्तपुष्पवृक्षाः इत्यर्थः द्विरेफाः भृङ्गाः इव । द्विपस्य वन्यविशेषणं द्विरेफाणां पुष्पवृक्षत्यागसम्भावनार्थं कृतम् ॥७॥

अथेति, पुरेति, मनुष्येति च त्रिभिर्विशेषकम् । अथ अन्वयज्ञैः राजवंशाभिज्ञैः वन्दिभिः स्तुतिपाठकैः । "वन्दिनः

(१) "यस्य गन्धं समाघ्राय न तिष्ठन्ति प्रतिद्विपाः । तं गन्धहस्तिनं प्राहुः नृपतेर्विजयावहम्" इति गजशास्त्रकाराः " इति दिनकरः ।

सञ्चारिते चागुरुसारयोनौ
धूपे समुत्सर्पति (१) वैजयन्तीः ॥ ८ ॥
पुरोपकण्ठोपवनाश्रयाणां
कलापिनामुद्धतनृत्यहेतौ ।
प्रध्मातशङ्खे परितो दिगन्तान्
तूर्य्यस्वने मूर्च्छति मङ्गलार्थे ॥ ६ ॥
मनुष्यवाह्यं चतुरस्रयानम्
अध्यास्य कन्या परिवारशोभि ।

स्तुतिपाठकाः" इत्यमरः । सोमार्कवंश्ये सोमसूर्य्यवंशभवे नरदेवलोके स्तुते सति, विवेशेत्युत्तरेण सम्बन्धः, एवमुत्तरत्रापि योज्यम् । सञ्चारिते समन्तात् प्रचारिते अगुरुसारः योनिः कारणं यस्य तस्मिन् धूपे च वैजयन्तीः पताकाः समुत्सर्पति सति अतिक्रम्य गच्छति सति ॥ ८ ॥

किञ्च, पुरस्य उपकण्ठे समीपे उपवनानि आश्रयः येषां तेषां कलापिनां बर्हिणाम् उद्धतनृत्यहेतौ मेघध्वनिसादृश्यात् ताण्डवकारणे प्रध्माताः पूरिताः शंखाः यत्र तस्मिन् मङ्गलार्थे मङ्गलप्रयोजनके तूर्य्यस्वने वाद्यघोषे परितः सर्व्वतः दिगन्तान् मूर्च्छति व्याप्नुवति सति ॥ ६ ॥

पतिं वृणोतीति पतिंवरा स्वयंवरा । "अथ स्वयंवरा पतिंवरा च वर्य्या च" इत्यमरः । संज्ञायां भृतृवृजीत्यादिना खच्-

---

(1) Dinakara reads "भूमिं दिवमाविलयन्तुमारं" ।

विवेश मञ्चान्तरराजमार्गं
पतिंवरा कॢप्तविवाहवेषा ॥ १० ॥
तस्मिन् विधानातिशये विधातुः
कन्यामये नेत्रशतैकलक्ष्ये।
निपेतुरन्तःकरणैर्नरेन्द्राः
देहैः स्थिताः केवलमासनेषु ॥ ११ ॥
तां प्रत्यभिव्यक्तमनोरथानां
महीपतीनां प्रणयाग्रदूत्यः।

प्रत्ययः। कॢप्तविवाहवेषा कन्या इन्दुमती मनुष्यैः वाह्यं परिवारेण परिजनेन शोभि चतुरस्रयानं (१) चतुरस्रवाहनशिबिकाम् अध्यास्य आरुह्य मञ्चान्तरे मञ्चमध्ये यः राजमार्गः, तं विवेश ॥ १० ॥

तस्मिन्निति। नेत्रशतानाम् एकलक्ष्ये एकदृश्ये कन्यामये कन्यारूपे तस्मिन् विधातुः विधानातिशये सृष्टिविशेषे नरेन्द्राः अन्तःकरणैः निपेतुः, आसनेषु देहैः केवलं देहैः एव स्थिताः, देहानपि विस्मृत्य तत्रैव दत्तचित्ता बभूवुः इत्यर्थः। अन्तःकरणकर्तृके निपतने नरेन्द्राणां कर्तृत्वव्यपदेशः आदरातिशयार्थः ॥ ११ ॥

तामिति। ताम् इन्दुमतीं प्रति अभिव्यक्तमनोरथानां प्रकटाभिलाषाणां महीपतीनां राज्ञां प्रणयाग्रदूत्यः। प्रणयः

(1) Vallabha reads "चतुरं च यानं" instead of चतुरस्रयानं and explains चतुरम् by मनोज्ञम्।

प्रवालशोभा इव पादपानां
शृङ्गारचेष्टा विविधा बभूवुः ॥ १२ ॥
कश्चित् कराभ्यामुपगूढनालम्
आलोलपत्राभिहतद्विरेफम् ।

प्रार्थना प्रेम वा । "प्रणयास्त्वमी विस्रम्भयाञ्चाप्रेमाणः" इत्यमरः । प्रणयेषु अग्रदूत्यः प्रथमदूतिकाः । प्रणयप्रकाशकत्वसाम्यात् दूतीत्वव्यपदेशः । विविधाः शृङ्गारचेष्टाः शृङ्गारविकाराः पादपानां प्रवालशोभाः पल्लवसम्पदः इव बभूवुः उत्पन्नाः। अत्र शृङ्गारलक्षणं रससुधाकरे, "विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः । नीता सदस्यरस्यत्वं रतिः शृङ्गार उच्यते ॥" रतिः इच्छाविशेषः । तच्चोक्तं तत्रैव, "यूनोरन्योन्यविषयस्थायिनीच्छा रतिः स्मृता" इति । चेष्टाशब्देन तदनुभावविशेषा उच्यन्ते । तेऽपि तत्रैवोक्ताः, "भावं मनोगतं साक्षात् स्वहेतुं व्यञ्जयन्ति ये । तेऽनुभावा इति ख्याता भ्रूविक्षेपस्मितादयः । ते चतुर्द्धा चित्तगात्रवाग्बुद्ध्यारम्भसम्भवाः ॥" इति । तत्र गात्रारम्भसम्भवान् चेष्टाशब्दोक्ताननुभावान् "कश्चित्"इत्यादिभिः श्लोकैर्वक्ष्यति । शृङ्गाराभासश्चायम् एकत्रैव प्रतिपादनात् । तदुक्तम्, "एकत्रैवानुरागश्चेत् तिर्य्यक्म्लेच्छगतोऽपि वा । योषितां बहुसक्तिश्चेत् रसाभासस्त्रिधा मतः" ॥ इति ॥ १२ ॥

शृङ्गारचेष्टा बभूवुरित्युक्तं ता एव दर्शयति, कश्चिदिति । कश्चित् राजा कराभ्यां पाणिभ्याम् उपगूढनालं गृहीतनालम् आलोलैः चञ्चलैः पत्रैः अभिहताः ताड़िताः द्विरेफाः भ्रमराः येन

रजोभिरन्तःपरिवेषवन्धि(१)
लीलारविन्दं भ्रमयाञ्चकार(२) ॥ १३ ॥
विस्रस्तमंसादपरो विलासी
रत्नानुविद्धाङ्गदकोटिलग्नम् ।
प्रालम्बमुत्कृष्य यथावकाशं
निनाय साचीकृतचारुवक्त्रः (३) ॥ १४ ॥

तत् तथोक्तं रजोभिः परागैः अन्तः परिवेषं मण्डलं बध्नातीति अन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयाञ्चकार। करस्थलीलारविन्दवत् त्वयाहं भ्रमयितव्यः इति नृपाभिप्रायः। हस्तघूर्णकोऽयमपलचणकः इति इन्दुमत्यभिप्रायः ॥ १३ ॥

विस्रस्तमिति। विलसनशीलः विलासी। "वौ कषलस कत्थस्रम्भः" इति घिणुन्प्रत्ययः। अपरः राजा अंसात् विस्रस्तं रत्नानुविद्धं रत्नखचितं यत् अङ्गदं केयूरं तस्य कोटिलग्नं प्रालम्बम् ऋजुलम्बिनीं स्रजम्। "प्रालम्बमृजुलम्बि स्यात् कण्ठात्" इत्यमरः। प्रावारपाठे उत्तरीयवस्त्रम्। उत्कृष्य उद्धृत्य साचीकृतं तिर्य्यक्कृतं चारु वक्त्रं यस्य स तथोक्तः सन् यथावकाशं स्वस्थानं निनाय। प्रावारोत्क्षेपच्छलेनाहं त्वामेवं परिरप्स्ये इति नृपाभिप्रायः। गोपनीय किञ्चिदङ्गेऽस्ति ततोऽयं प्रावृणुत इति इन्दुमत्यभिप्रायः ॥ १४ ॥

---

(१) रजोभिः घूर्णनात् पतितैः परागैः अन्तः मध्यमध्ये रात्रा पुरतः चाञ्चलीपार्श्वे स्वस्थं परिवेषं मण्डलं बध्नाति करोतीति अन्तः परिवेषबन्धि ।

(२) "हस्तावधिकेन चैला" इति दिनकर.

(३) "सुपत्र साचीकरणं वाउधी यथामदिमानयन च महारत्नपत्र" इति दिनकर ।

आकुञ्चिताग्राङ्गुलिना ततोऽन्यः
किञ्चित्समावर्जितनेत्रशोभः ।
तिर्य्यग्विसंसर्पिनखप्रभेण (१)
पादेन हैमं विलिलेख पीठम् ॥ १५ ॥
निवेश्य वामं भुजमासनार्द्धे
तत्सन्निवेशादधिकोन्नतांसः ।

आकुञ्चितेति । ततः पूर्वोक्तात् अन्यः अपरः राजा किञ्चित् समावर्जितनेत्रशोभः ईषदर्वाक्पातितनेत्रशोभः सन् आकुञ्चिताः आभुग्नाः अग्राङ्गुलयः यस्य तेन तिर्य्यग्विसंसर्पिण्यः नखप्रभाः यस्य तेन च पादेन हैमं हिरण्मयं पीठं पादपीठं विलिलेख लिखितवान् । पादाङ्गुलीनामाकुञ्चनेन त्वं मत्समीपमागच्छ इति नृपाभिप्रायः । भूमिविलेखकोऽयमपलक्षणकः इति इन्दुमत्याशयः । भूमिविलेखनन्तु लक्ष्मीविनाशहेतु ॥ १५ ॥

निवेश्येति । कश्चित् राजा वामं भुजम् आसनार्द्धे सिंहासनैकदेशे (२) निवेश्य संस्थाप्य तत्सन्निवेशात् तस्य वामभुजस्य सन्निवेशात् संस्थापनात् अधिकोन्नतः अंसः वामांसः एव यस्य

(1) Dinakara reads रत्नांशुसंसर्पिनखप्रभेण and explains by "रत्नरश्मिः संसर्पिणी संगच्छमाना नखानां प्रभा यस्य तेन". The purport of this stanza according to him is "इन्दुमतीदर्शनविभ्रमप्रकाशनम्"।

(२) आसनस्य अर्द्धः आसनार्द्धं क्लीबम् । पुंसि अर्द्धशब्दः एकदेशवाची आसनस्यार्द्धमिति विग्रहे तु "अर्द्धं नपुंसकम्" इत्यनेन अर्द्धस्य पूर्वनिपातः समासश्चेत्यं च सर्वं दिक्समर्थनम् ।

कश्चिद्विवृत्तत्रिकभिन्नहारः
सुहृत्समाभाषणतत्परोऽभूत् ॥ १६ ॥
विलासिनीविभ्रमदन्तपत्रम्(१)
आपाण्डुरं केतकबर्हमन्यः।
प्रियानितम्बोचितसन्निवेशैः
विपाटयामास युवा नखाग्रैः ॥ १७ ॥

स तथोक्तः विवृत्ते परावृत्ते त्रिके त्रिकप्रदेशे भिन्नहारः लुण्ठितहारः सन्। "पृष्ठवंशाधारे त्रिकम्" इत्यमरः। सुहृत्समाभाषणतत्परः अभूत् वामपार्श्ववर्त्तिनैव मित्रेण सम्भाषितुं प्रवृत्तः इत्यर्थः। अतएव विवृत्तत्रिकत्वं घटते। त्वया वामाङ्गे निवेशितया सह एवं वार्त्तां करिष्ये इति नृपाभिप्रायः। परं दृष्ट्वा पराङ्मुखोऽयं न कार्य्यकर्त्ता इति इन्दुमत्यभिप्रायः॥ १६ ॥

विलासिनीति। अन्यः युवा विलासिन्याः प्रियायाः विभ्रमार्थं दन्तपत्रं दन्तपत्रभूतम् आपाण्डुरं केतकबर्हं केतकदलम्। "दलेऽपि बर्हम्" इत्यमरः। प्रियानितम्बे उचितसन्निवेशैः अभ्यस्तनिवेशनैः नखाग्रैः विपाटयामास विदारयामास। अहं तव नितम्बे एवं नखव्रणादीन् दास्यामि इति नृपाशयः। तृणच्छेदकवत् पत्रपाटकोऽयमपलक्षणः इति इन्दुमत्याशयः॥ १७ ॥

---

(१) दन्तवत् शुभ्रं पत्रमस्येति दन्तपत्रं कुन्दम्। कुन्दाकारं कर्णाभरणमपि दन्तपत्रशब्देनाभिधीयते। हस्तिदन्तरचितं पत्राकारं कर्णाभरणं वा दन्तपत्रशब्दस्यार्थः।

कुशेशयाताम्रतलेन कश्चित्
करेण रेखाध्वजलाञ्छनेन ।
रत्नाङ्गुलीयप्रभयानुविद्धान्
उदीरयामास सलीलमक्षान् ॥ १८ ॥
कश्चिद्यथाभागमवस्थितेऽपि
स्वसन्निवेशात् व्यतिलङ्घिनीव ।
वज्रांशुगर्भाङ्गुलिरन्ध्रमेकं
व्यापारयामास करं किरीटे ॥ १९ ॥

कुशेशयेति । कश्चित् राजा कुशेशयं शतपत्रम् इव आताम्रं तलं यस्य तेन । "शतपत्रं कुशेशयम्" इत्यमरः । रेखारूपः ध्वजः लाञ्छनं यस्य तेन करेण अङ्गुलिषु भवानि अङ्गुलीयानि ऊर्मिकाः । "अङ्गुलीयकमूर्मिका" इत्यमरः । "जिह्वामूलाङ्गुलेश्छः" इति छप्रत्ययः । रत्नानाम् अङ्गुलीयानि तेषां प्रभया अनुविद्धान् व्याप्तान् अक्षान् पाशान् । "अक्षास्तु देवनाः पाशकाश्च ते" इत्यमरः । सलीलम् उदीरयामास उच्चिक्षेप । अहं त्वया सहैवं रंस्ये इति नृपाभिप्रायः । अक्षचातुर्य्यं कापुरुषोऽयम् इति इन्दुमत्यभिप्रायः । "अक्षैर्मा दीव्येत्" इति श्रुतिनिषेधात् ॥ १८ ॥

कश्चिदिति । कश्चित् यथाभागं यथास्थानम् । अवस्थिते अपि स्वसन्निवेशात् व्यतिलङ्घिनि इव स्वस्थानात् चलिते इव किरीटे वज्राणां किरीटगतानाम् अंशवः गर्भे येषां

ततो नृपाणां श्रुतवृत्तवंशा
पुंवत्(१) प्रगल्भा प्रतिहाररक्षी ।
प्राक् सन्निकर्षं मगधेश्वरस्य
नीत्वा कुमारीमवदत् सुनन्दा ॥ २० ॥
असौ शरण्यः शरणोन्मुखानाम्
अगाधसत्त्वो मगधप्रतिष्ठः ।

अङ्गुलिरन्ध्राणि यस्य तम् एकं करं व्यापारयामास । किरीटवन्मम शिरसि स्थितामपि त्वां भारं न मन्ये इति नृपाभिप्रायः । शिरसि न्यस्तहस्तोऽयमपलक्षणः इति इन्दुमत्यभिप्रायः ॥ १९ ॥

तत इति । ततः अनन्तरं नृपाणां श्रुतवृत्तवंशा श्रुतनृपवृत्तवंशा इत्यर्थः । सापेक्षत्वेऽपि गमकत्वात् समासः । प्रगल्भा वाग्मिनी सुनन्दा सुनन्दाख्या प्रतिहारं रक्षतीति प्रतिहाररक्षी द्वारपालिका । कर्मण्यण्प्रत्ययः । टिड्ढाणञित्यादिना ङीप् । प्राक् प्रथमं कुमारीम् इन्दुमतीं मगधेश्वरस्य सन्निकर्षं समीपं नीत्वा पुंवत् पुंसा तुल्यम् । तेन तुल्यं क्रिया चेद्वतिरिति वतिप्रत्ययः । अवदत् ॥ २० ॥

असाविति । असौ राजा । असाविति पुरोवर्त्तिनो निर्द्देशः, एवमुत्तरत्रापि द्रष्टव्यम् । शरणोन्मुखानां शरणार्थिनां शरण्यः शरणे रक्षणे साधुः । "तत्र साधुः" इति यत्प्रत्ययः । शरणं भवितुमर्हः शरण्य इति नाथनिरुक्तिर्नि-

(१) "पुंवत्" should better be referred to प्रगल्भा than to अवदत्। प्रगल्भतायां पुरुषसदृशी सुनन्देत्यर्थः।

राजा प्रजारञ्जनलब्धवर्णः
परन्तपो नाम यथार्थनामा (१) ॥ २१ ॥
कामं नृपाः सन्तु सहस्रशोऽन्ये
राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसङ्कुलापि
ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ २२ ॥

मूलैव । अगाधसत्त्वः गम्भीरस्वभावः । "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः" इति विश्वः । मगधाः जनपदाः तेषु प्रतिष्ठा आस्पदं यस्य सः मगधप्रतिष्ठः । "प्रतिष्ठा कृत्यमास्पदम्" इत्यमरः । प्रजारञ्जने लब्धवर्णः विचक्षणः यद्वा प्रजारञ्जनेन लब्धोत्कर्षः परान् शत्रून् तापयतीति परन्तपः परन्तपाख्यः । "द्विषत्परयोस्तापेः" इति खच्प्रत्ययः, खचि ह्रस्व इति ह्रस्वः, "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमः । नामेति प्रसिद्धौ यथार्थनामा शत्रुसन्तापनात् इति भावः ॥ २१ ॥

काममिति । अन्ये नृपाः कामं सहस्रशः सन्तु, भूमिम् अनेन राजन्वतीं शोभनराजवतीम् आहुः नैतादृक् कश्चिदस्ति इत्यर्थः । "सुराज्ञि देशे राजन्वान् स्यात् ततोऽन्यत्र राजवान्" इत्यमरः । "राजन्वान् सौराज्ये" इति निपातनात् साधुः । तथाहि, नक्षत्रैः अश्विन्यादिभिः ताराभिः साधारणैः

(१) "परन्तपत्वेन क्रूरत्वं लोकरञ्जकत्वं मता च इन्दुमत्या वैराग्यसूचकम् । मह-र्षिनिर्दिष्टेषु मुनिनिन्दापरत्वात् सर्वत्र दोषावहत्वाद्दोषावहमत्र" इति दिनकरः ।

क्रियाप्रबन्धादयमध्वराणाम्
अजस्रमाहूतसहस्रनेत्रः।
शच्याश्चिरं पाण्डुकपोललम्बान्
मन्दारशून्यानलकांश्चकार(१) ॥ २३ ॥
अनेन चेदिच्छसि गृह्यमाणं
पाणिं वरेण्येन कुरु प्रवेशे।

ज्योतिर्भिः ग्रहैः भौमादिभिश्च सङ्कुला अपि रात्रिः चन्द्रमसा एव ज्योतिरस्या अस्तीति ज्योतिष्मती, नान्येन ज्योतिषा इत्यर्थः ॥ २२ ॥

क्रियेति। अयं परन्तपः अध्वराणां क्रतूनां क्रियाप्रबन्धात् अनुष्ठानसातत्यात् अविच्छिन्नादनुष्ठानात् इत्यर्थः अजस्रं नित्यम् आहूतसहस्रनेत्रः सन् चिरं शच्याः अलकान् पाण्डुकपोलयोः लम्बान् स्रस्तान्। पचाद्यच्। मन्दारैः कल्पद्रुमकुसुमैः शून्यान् चकार। प्रोषितभर्तृका हि केशसंस्कारं न कुर्वन्ति, "प्रोषिते मलिना कृशा" इति, "क्रीड़ां शरीरसंस्कारं समाजोत्सवदर्शनम्। हास्यं परगृहे यानं त्यजेत् प्रोषितभर्तृका ॥" इति च स्मरणात् ॥ २३ ॥

अनेनेति। वरेण्येन वरणीयेन। वृणोतेरौणादिक एण्यप्रत्ययः। अनेन राज्ञा गृह्यमाणं पाणिम् इच्छसि चेत् पाणिग्रहणमिच्छसि चेत् इत्यर्थः प्रवेशे प्रवेशकाले प्रासादवातायन-

(१) "एतेन तस्य यज्वत्वं स्ववंशेन इन्द्रभया च राज्यस्थिरत्वं सूचितम्" इति दिनकरः।

प्रासादवातायनसंश्रितानां
नेत्रोत्सवं पुष्पपुराङ्गनानाम्(१) ॥ २४ ॥
एवं तयोक्ते तमवेक्ष्य किञ्चित्
विस्रंसिदूर्वाङ्कमधूकमाला (२) ।
ऋजु प्रणामक्रिययैव (३) तन्वी
प्रत्यादिदेशैनमभाषमाणा ॥ २५ ॥
तां सैव वेत्रग्रहणे नियुक्ता
राजान्तरं राजसुतां निनाय ।

संश्रितानां राजभवनगवाक्षस्थितानां पुष्पपुराङ्गनानां पाटलिपुराङ्गनानां नेत्रोत्सवं कुरु । सर्व्वोत्तमानां तासामपि दर्शनीया भविष्यसि इति भावः ॥ २४ ॥

एवमिति । एवं तया सुनन्दया उक्ते सति तं परन्तपम् अवेक्ष्य किञ्चित् विस्रंसिनी दूर्व्वाङ्का दूर्व्वाचिह्ना मधूकमाला गुड़पुष्पमाला यस्याः सा । "मधूके तु गुड़पुष्पमधुद्रुमौ" इत्यमरः । वरणे शिथिलप्रयत्ना इति भावः । तन्वी इन्दुमती एनं नृपम् अभाषमाणा ऋज्वा भावशून्यया प्रणामक्रियया एव प्रत्यादिदेश परिजहार ॥ २५ ॥

तामिति । सा एव न अन्या चित्तज्ञत्वात् इति भावः । वेत्र-

(1) Pushpapura is identical with the city of Pataliputra.
(2) A garland of Madhuka flowers interstrung with durvas is considered as auspicious. Compare "दूर्व्वावता पाण्डुमधूकदाम्ना यथाक्रमं काचिदुदारबन्धम्" । Kumara, Canto VII.
(३) "ऋजुः स्पष्टा विषमरहिता वा नमस्क्रिया तयैव" इति दिनकरः ।

समीरणोत्थेव तरङ्गलेखा
पद्मान्तरं मानसराजहंसीम् ॥ २६ ॥
जगाद चैनामयमङ्गनाथः(१)
सुराङ्गनाप्रार्थितयौवनश्रीः ।
विनीतनागः (२) किल सूत्रकारैः
ऐन्द्रं पदं भूमिगतोऽपि भुङ्क्ते ॥ २७ ॥

ग्रहणे नियुक्ता दौवारिकी सुनन्दा तां राजसुतां राजान्तरम् अन्यराजानं निनाय । नयतिर्द्विकर्म्मकः । कथमिव समीरणोत्था वातोत्पन्ना तरङ्गलेखा ऊर्म्मिपङ्क्तिः मानसे सरसि या राजहंसी तां पद्मान्तरम् इव ॥ २६ ॥

जगादेति । एनाम् इन्दुमतीं जगाद । किमिति अयम् अङ्गनाथः अङ्गदेशाधीश्वरः सुराङ्गनाभिः प्रार्थिता कामिता यौवनश्रीः यस्य सः तथोक्तः । पुरा किलैनमिन्द्रसाहाय्यार्थमिन्द्रपुरगामिनम् अकामयन्त अप्सरसः इति प्रसिद्धिः । किञ्च सूत्रकारैः गजशास्त्रकर्तृभिः पालकादिभिः महर्षिभिः विनीतनागः शिक्षितगजः । किलेत्यैतिह्ये । अतएव भूमिगतः अपि ऐन्द्रं पदम् ऐश्वर्य्यं भुङ्क्ते भूर्लोक एव स्वर्गसुखमनुभवति इत्यर्थः । गजाप्सरोदेवर्षिसेव्यत्वम् ऐन्द्रपदशब्दार्थः । पुरा किल कुतश्चि-

(1) Anga was the country about Bhagalpur, of which Champa was the ancient capital.

(2) Vallabha reads विनीतभागः and explains it by 'कल्पितयज्ञांशः' and remarks. "इन्द्र इव यज्ञभागं लभते, सुराङ्गनोपभुक्ततारुण्यश्च" ।

अनेन पर्य्यासयताश्रुविन्दून्
मुक्ताफलस्थूलतमान् स्तनेषु ।
प्रत्यर्पिताः शत्रुविलासिनीनाम्
उन्मुच्य सूत्रेण विनैव हाराः (१) ॥ २८ ॥
निसर्गभिन्नास्पदमेकसंस्थम्
अस्मिन् द्वयं श्रीश्च सरस्वती च ।
कान्त्या गिरा सूनृतया च योग्या
त्वमेव कल्याणि तयोस्तृतीया ॥ २९ ॥

च्छापकारणात् भुवमवतीर्य्यं दिग्गजवर्गमालोक्य स्वयमशक्ते-रिन्द्राभ्यनुज्ञया आनीतैर्देवर्षिभिः प्रणीतेन शास्त्रेण गजान् वशीकृत्य भुवि सम्प्रदायं प्रावर्त्तयदिति कथा गीयते ॥ २७ ॥

अनेनेति । शत्रुविलासिनीनां स्तनेषु मुक्ताफलस्थूलतमान् अश्रुविन्दून् । "अस्रमश्रुणि" इति विश्वः । पर्य्यासयता प्रस्तारयता भर्त्तृवधात् इति भावः । अनेन अङ्गनाथेन उन्मुच्य आच्छिद्य सूत्रेण विना हाराः एव प्रत्यर्पिताः । अविच्छिन्नाश्रुविन्दुप्रवर्त्तनादुत्सूत्रहारार्पणमेव कृतमिवेत्युत्प्रेक्षा गम्यते ॥२८॥

निसर्गेति । निसर्गतः स्वभावतः भिन्नास्पदं भिन्नाश्रयं सहावस्थानविरोधि इत्यर्थः श्रीश्च सरस्वती च इति द्वयम् अस्मिन् अङ्गनाथे एकत्र संस्था स्थितिः यस्य तत् एकसंस्थम् उभयमिह सङ्गतम् इत्यर्थः । हे कल्याणि वक्ष्यादिभ्यश्चेति

(1) On this Dinakara remarks. "शत्रुस्त्रीरुदनवर्णनं वैराग्यहेतुः ।"

अथाङ्गराजादवतार्य्य चक्षुः
याहीति जन्यामवदत्(१) कुमारी।
नासौ न काम्यो न च वेद सम्यक्
द्रष्टुं न सा भिन्नरुचिर्हि लोकः॥ ३०॥

ङीप्। कान्त्या सूनृतया सत्यप्रियया गिरा च योग्या संसर्गार्हा त्वम् एव तयोः श्रीसरस्वत्योः तृतीया। समानगुणयोर्युवयोः दाम्पत्यं युज्यत एव इति भावः। दक्षिणनायकलक्षणास्य ध्वन्यते। तदुक्तम्, "तुल्योऽनेकत्र दक्षिणः" इति॥ २९॥

अथेति। अथ कुमारी अङ्गराजात् चक्षुः अवतार्य्य अपनीय इत्यर्थः जन्यां मातृसखीं सुनन्दां याहि गच्छ इति अवदत् अथवा, जनीं वधूं वहन्तीति जन्याः वधूबन्धवः तान् यात गच्छत इति अवदत्। "जन्या मातृसखीमुदोः। जन्यो वरवधूज्ञातिप्रियतुल्यहितेषु च" इति यत्तद्वये अपि विश्वः। अथवा जन्याः वधूभृत्याः। "भृत्यायापि नवोढ़ायाः" इति केशवः। "संज्ञायां जन्या" इति यत्प्रत्ययान्तो निपातः। यदत्राह वृत्तिकारः, "जनीं वधूं वहन्तीति जन्याः जामातुर्वयस्याः" इति, यच्चामरः, "जन्याः स्निग्धा वरस्य ये" इति तत्सर्व्वमुपलक्षणार्थमित्यविरोधः। न चायमङ्गराजनिषेधो दृश्यदोषाद्वापि द्रष्टृदोषाद्वेत्याह, नेत्यादिना। असौ अङ्गराजः काम्यः कमनीयः न इति न, किन्तु काम्य एव इत्यर्थः। सा कुमारी च सम्यक् द्रष्टुं विवेक्तुं न वेद इति न, वेद इत्यर्थः। किन्तु लोकः जनः भिन्नरुचिः हि,

(1) Vallabha reads "जन्यान्" and explains the same by 'जन्यान्'।

ततः परं दुष्प्रसहं द्विषद्भिः
नृपं नियुक्ता प्रतिहारभूमौ ।
निदर्शयामास विशेषदृश्यम्
इन्दुं नवोत्थानमिवेन्दुमत्यै ॥ ३१ ॥

अवन्तिनाथोऽयमुदग्रबाहुः
विशालवक्षास्तनुवृत्तमध्यः ।
आरोप्य चक्रभ्रममुष्णतेजाः(१)
त्वष्ट्रेव यत्नोल्लिखितो विभाति ॥ ३२ ॥

रुचिरमपि किञ्चित् कस्मैचिन्न रोचते किं कुर्मो न ह्रीच्छा नियन्तुं शक्यते इत्यर्थः ॥ ३० ॥

तत इति । ततः अनन्तरं प्रतिहारभूमौ द्वारदेशे नियुक्ता दौवारिकी । "स्त्री द्वार्द्वारं प्रतीहारः" इत्यमरः । द्विषद्भिः शत्रुभिः दुष्प्रसहं दुःसहं शूरम् इत्यर्थः विशेषेण दृश्यं दर्शनीयं रूपवन्तम् इत्यर्थः । परम् अन्यं नृपं नवोत्थानं नवोदयम् इन्दुम् इव इन्दुमत्यै निदर्शयामास ॥ ३१ ॥

अवन्तीति । उदग्रबाहुः दीर्घबाहुः विशालवक्षाः तनुवृत्तमध्यः कृशवर्तुलमध्यः अयं राजा अवन्तिनाथः अवन्तिदेशाधी-

(1) Sanjna, (संज्ञा)the daughter of विश्वकर्मा and the wife of the sun; bore him three children मनु (वैवस्वत), यम and यमुना. Unable to endure the fervours of her lord, she gave him छाया as his handmaid and vanished. The sun, supposing छाया to be his wife संज्ञा, begot by her three children शनि, मनु (सावर्णि) and तपती. On

अस्य प्रयाणेषु समग्रशक्तेः
अग्रेसरैर्वाजिभिरुत्थितानि।
कुर्वन्ति सामन्तशिखामणीनां
प्रभाप्ररोहास्तमयं रजांसि॥ ३३॥

त्वष्टः त्वष्ट्रा विश्वकर्मणा। भर्त्तुस्ते जोवेगमसहमानया दुहित्रा संज्ञादेव्या प्रार्थितेन इति शेषः। चक्रभ्रमं चक्राकारयस्तोत्तेजनयन्त्रम्। "भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुन्दाख्ये शिल्पियन्त्रके" इति विश्वः। आरोप्य यत्नेन उल्लिखितः उत्पन्नतेजाः सूर्यः इव विभाति। अत्र मार्कण्डेयः, "विश्वकर्म्मा त्वनुज्ञातः शाकद्वीपे विवस्वता। भ्रममारोप्य तत्तेजःशातनायोपचक्रमे" इति॥३२॥

अस्येति। समग्रशक्तेः शक्तित्रयसम्पन्नस्य अस्य अवन्तिनाथस्य प्रयाणेषु यात्रासु अग्रेसरैः वाजिभिः अश्वैः उत्थितानि रजांसि सामन्तानां समन्तात् भवानां राज्ञां ये शिखामणयः चूडामणयः तेषां प्रभाप्ररोहास्तमयं तेजोऽङ्कुरनाशं कुर्व्वन्ति। नासीरैरेवास्य शत्रवः पराजीयन्ते इति भावः॥ ३३॥

---

one occasion छाया pronouncing an imprecation on यम, betrayed the secret that she was not his real mother. On this, the sun beheld संज्ञा by the eye of meditation, engaged in austerities in the figure of a mare in the region of उत्तरकुरु. Metamorphosing himself into a horse, he begot three other children, the two अश्विनीकुमार, and रेवन्त, and then brought her back to his own dwelling. To diminish his intensity, विश्वकर्मा placed him on his lathe, (शाण) to grind off some of his effulgence, and in this manner, reduced it an eighth: for more than that was inseparable. See Wilson's V. Purana Book III. 2.

असौ महाकालनिकेतनस्य(१)
वसन्नदूरे किल चन्द्रमौलेः ।
तमिस्रपक्षेऽपि सह प्रियाभिः
ज्योत्स्नावतो निर्विशति प्रदोषान् ॥ ३४ ॥
अनेन यूना सह पार्थिवेन
रम्भोरु कच्चिन्मनसो रुचिस्ते ।
सिप्रातरङ्गानिलकम्पितासु(२)
विहर्त्तुमुद्यानपरम्परासु ॥ ३५ ॥

असाविति । असौ अवन्तिनाथः महाकालं नाम स्थानविशेषः तत् एव निकेतनं स्थानं यस्य तस्य चन्द्रमौलेः ईश्वरस्य अदूरे समीपे वसन् अतएव हेतोः तमिस्रपक्षे कृष्णपक्षे अपि प्रियाभिः सह ज्योत्स्नावतः प्रदोषान् रात्रीः निर्विशति अनुभवति किल। नित्यज्योत्स्नाविहारत्वमेतस्यैव नान्यस्य इति भावः॥३४॥

अनेनेति । रम्भे कदलीस्तम्भौ इव ऊरू यस्याः सा रम्भोरूः तस्याः सम्बोधनं हे रम्भोरु "ऊरूत्तरपदादौपम्ये" इत्यूङ् प्रत्ययः, नदीत्वात् ह्रस्वः। यूना अनेन पार्थिवेन सह सिप्रा नाम तत्रत्या नदी. तस्याः तरङ्गाणाम् अनिलेन कम्पितासूद्यानानां परम्प-

(1) Maha'ka'la was also the name of the Linga consecrated at Ujjayini. It is referred to by Bhababhuti in his mahavira-charita and also by Kalidasa in his Meghaduta.

(2) सिप्रा flows by Ujjayini being a tributary of the Chambal. "अवन्तिदेशेन सुरम्याया चर्म्मण्वतीः" इति हिन्दवः ।

तस्मिन्नभिद्योतितबन्धुपद्मे
प्रतापसंशोषितशत्रु पङ्के ।
बबन्ध सा नोत्तमसौकुमार्य्या
कुमुद्वती भानुमतीव भावम् ॥ ३६ ॥

तामग्रतस्तामरसान्तराभाम्
अनूपराजस्य गुणैरनूनाम् ।
विधाय सृष्टिं ललितां विधातुः
जगाद भूयः सुदतीं सुनन्दा ॥ ३७ ॥

तासु पङ्क्तिषु विहर्त्तुं ते तव मनसः रुचिः कच्चित् स्पृहास्ति किमित्यर्थः । "अभिष्वङ्गे स्पृहायाञ्च गभस्तौ च रुचिः स्त्रियाम्" इत्यमरः ॥ ३५ ॥

तस्मिन्निति । उत्तमसौकुमार्य्या उत्कृष्टाङ्गमार्दवा सा इन्दुमती अभिद्योतितानि उद्भासितानि बन्धवः एव पद्मानि येन तस्मिन् प्रतापेन तेजसा संशोषिताः शत्रवः एव पङ्काः कर्दमाः येन तस्मिन् तस्मिन् अवन्तिनाथे कुमुद्वती । "कुमुदनड्वेतसेभ्यो ड्मतुप्" इति मतुप्प्रत्ययः । भानुमति अंशुमति इव भावं चित्तं न बबन्ध, न तत्रानुरागमकरोत् इत्यर्थः । बन्धूनां पद्मत्वेन शत्रूणां पङ्कत्वेन च रूपणं राज्ञः सूर्य्यसाम्यार्थम् ॥३६॥

तामिति । सुनन्दा तामरसान्तराभां पद्मोदरतुल्यकान्तिं कनकगौरीम् इत्यर्थः गुणैः अनूनाम् अधिकाम् इत्यर्थः शोभना दन्ताः यस्याः सा सुदती । "वयसि दन्तस्य दतृ" इति दत्रादेशः,

संग्रामनिर्विष्टसहस्रबाहु-
रष्टादशद्वीपनिखातयूपः।
अनन्यसाधारणराजशब्दो
बभूव योगी किल कार्त्तवीर्य्यः (१) ॥ ३८ ॥

"उगितश्च" इति ङीप्। तां तां प्रख्यातां प्रसिद्धां वा विधातुः ललितां सृष्टिं मधुरनिर्माणां स्त्रियम् इत्यर्थः। अनुगता आपः येषु ते अनूपाः नाम देशाः। "ऋक्पूरब्धूःपथामानक्षे" इत्यप्रत्ययः समासान्तः "ऊदनोर्देशे" इत्यूदादेशः। तेषां राज्ञः अनूपराजस्य अग्रतः विधाय व्यवस्थाप्य भूयः पुनः जगाद ॥ ३७ ॥

संग्रामेति। संग्रामेषु युद्धेषु निर्विष्टाः अनुभूताः सहस्रं बाहवः यस्य सः तथोक्तः युद्धादन्यत्र द्विभुज एव दृश्यते इत्यर्थः। अष्टादशसु द्वीपेषु निखाताः स्थापिताः यूपाः येन स तथोक्तः। सर्व्वक्रतुयाजी सार्व्वभौमश्च इति भावः। जरायुजादिसर्व्वभूतरञ्जनात् अनन्यसाधारणः राजशब्दः यस्य स तथोक्तः योगी ब्रह्मविद्वान् इत्यर्थः। स किल भगवतो दत्तात्रेयाल्लब्धयोगः इति प्रसिद्धिः। कृतवीर्य्यस्य अपत्यं पुमान् कार्त्तवीर्य्यः नाम राजा बभूव किल इति। अयञ्चास्य महिमा सर्व्वोऽपि दत्तात्रेयवरप्रसादलब्धः इति भारते दृश्यते ॥ ३८ ॥

(1) He was king of the Haihyas, a people of central India, and his capital माहिष्मती is identified with the modern Chuli-Maheswar on the Narmada. The country of the Haihayhs was probably intersected with as many rivulets as to be called Aunpa. "न नूनं कार्त्तवीर्य्यस्य गतिं यास्यन्ति पार्थिवाः। यज्ञैर्दानैस्तपोभिर्वा प्रश्रयेण श्रुतेन वा"। V. P. IV. 11. "बिभ्राममे कार्त्तवीर्य्यः सप्तद्वीपसमन्वागतस्य गाथां भ्रष्टादशद्वीपदा" इति मल्लमः।

अकार्य्यं चिन्तासमकालमेव
प्रादुर्भवंश्चापधरः पुरस्तात् ।
अन्तःशरीरेष्वपि यः प्रजानां
प्रत्यादिदेशाविनयं विनेता ॥ ३९ ॥
ज्यावन्धनिष्पन्दभुजेन यस्य(१)
विनिःश्वसद्वक्तुपरम्परेण ।

अकार्येति। विनेता शिक्षकः यः कार्त्तवीर्य्यः अकार्यस्य असत्कार्यस्य चिन्तायाः अहं चौर्य्यादिकं करिष्यामीति बुद्धाः समकालम् एककालम् एव यथा तथा पुरस्तात् अग्रे चापधरः प्रादुर्भवन् सन् प्रजानाम् । "प्रजा स्यात् सन्ततौ जने" इत्यमरः। अन्तःशरीरेषु अन्तःकरणेषु । शरीरशब्देन इन्द्रियं लक्ष्यते अविनयम् अपि प्रत्यादिदेश मानसापराधमपि निवारयामास इत्यर्थः। अन्ये तु वाक्कायापराधमात्रप्रतिकर्त्तारः इति भावः ॥ ३९ ॥

ज्याबन्धेति। ज्यायाः मौर्व्याः बन्धेन बन्धनेन निष्पन्दाः निश्चेष्टाः भुजाः यस्य तेन विनिःश्वसती ज्याबन्धोपरोधात् दीर्घं निःश्वसती वक्तुपरम्परा दशमुखी यस्य तेन निर्जितवासवेन इन्द्रविजयिना। अत्रेन्द्रादयोऽप्यनेन जितप्राया एव इति भावः। लङ्केश्वरेण दशास्येन यस्य कार्त्तवीर्य्यस्य कारागृहे बन्ध-

(१) "पूर्वं हि जलकेलिविलासिनीयामायाम् नर्मदाजलपरिघटकदेवतापाश-हतनिर्झरिणीपर्यं वचितं रथरनाद्रुतं रावणमद्य एव जित्वा कार्त्तवीर्यो निजपादबन्धेन बबन्धनाम:" इति वल्लभः।

कारागृहे निर्जितवासवेन
लङ्केश्वरेणोषितमाप्रसादात् ॥ ४० ॥

तस्यान्वये भूपतिरेष जातः
प्रतीप इत्यागमवृद्धसेवी ।
येन श्रियः संश्रयदोषरूढं
स्वभावलोलेत्ययशः प्रमृष्टम् ॥ ४१ ॥

आयोधने कृष्णगतिं सहायम्
अवाप्य यः क्षत्रियकालरात्रिम्(१) ।

नागारे। "कारा स्याद्बन्धनालये" इत्यमरः। आप्रसादात् अनुग्रहपर्यन्तम् उषितं स्थितम्। नपुंसके भावे क्तः। एतत्प्रसाद एव तस्य मोक्षोपायो न तु चात्रम् इति भावः ॥ ४० ॥

तस्येति। आगमवृद्धसेवी श्रुतवृद्धसेवी प्रतीपः इति ख्यातः इति शेषः। एषः भूपतिः तस्य कार्त्तवीर्य्यस्य अन्वये वंशे जातः। येन प्रतीपेन संश्रयस्य आश्रयस्य पुंसः दोषैः व्यसनादिभिः रूढ़म् उत्पन्नं श्रियः सम्बन्धि स्वभावलोला प्रकृतिचञ्चला इत्येवंरूपम् अयशः दुष्कीर्त्तिः प्रमृष्टं निरस्तम्। दुष्टाश्रयत्यागशीलायाः श्रियः प्रकृतिचापलप्रवादो मूढ़जनपरिकल्पितः इत्यर्थः। अयन्तु दोषराहित्यान्न कदाचिदपि त्यज्यते इति भावः ॥ ४१ ॥

आयोधन इति। यः प्रतीपः आयोधने युद्धे कृष्णगतिं कृष्ण-

(१) कालरात्रिं क्षत्त्रकालरात्रिम्।

धारां शितां रामपरश्वधस्य
सम्भावयत्युत्पलपत्रसाराम् ॥ ४२ ॥
अस्याङ्कलक्ष्मीर्भव दीर्घबाहो:
माहिष्मतीवप्रनितम्बकाञ्चीम् ।
प्रासादजालैर्जलवेणिरम्यां
रेवां यदि प्रेक्षितुमस्ति काम: ॥ ४३ ॥

वर्त्मानम् अग्निं सहायम् अवाप्य क्षत्रियाणां कालरात्रिं संहार-रात्रिम् इत्यर्थ:। रामपरश्वधस्य जामदग्न्यपरशो:। "द्वयो: कुठार: स्वधिति: परशुश्च परश्वध:" इत्यमर:। शितां तीक्ष्णां धारां मुखम्। "खड्गादीनाञ्च निशितमुखे धारा प्रकीर्त्तिता" इति विश्व:। उत्पलपत्रस्य सार: इव सार: यस्या: तां तथाभूतां सम्भावयति मन्यते। एतन्नगरजिगीषयागतान् रिपून् स्वयमेव धक्ष्यामि इति भगवता वैश्वानरेण दत्तवरोऽयं राजा, दहन्ति च तथागता: शत्रव: इति भारते कथानुसन्धेया ॥ ४२ ॥

अस्येति। दीर्घबाहो: अस्य मतोपस्य अङ्कलक्ष्मी: भव, एनं वृणीष्व इत्यर्थ:। अनेनायं विष्णुतुल्य: इति ध्वन्यते। माहिष्मती नाम अस्य नगरी तस्या: वप्र: प्राकार: एव नितम्ब: तस्य काञ्चीं रशनाभूतां जलानां वेण्या प्रवाहेण रम्याम्। "ओघ: प्रवाहो वेणी च" इति हलायुध:। रेवां नर्मदां प्रासादजालै: गवाक्षै:। "जालं समूह आनायो गवाक्षचारकावपि" इत्यमर:। प्रेक्षितुं काम: इच्छा अस्ति यदि ॥ ४३ ॥

तस्याः प्रकामं प्रियदर्शनोऽपि
न स क्षितीशो रुचये बभूव।
शरत्प्रमृष्टाम्बुधरोपरोधः
शशीव पर्य्याप्तकलो नलिन्याः॥ ४४॥

सा शूरसेनाधिपतिं(१) सुषेणम्
उद्दिश्य लोकान्तरगीतकीर्त्तिम् (२)।
आचारशुद्धोभयवंशदीपं
शुद्धान्तरक्ष्या जगदे कुमारी॥ ४५॥

तस्या इति। प्रकामं प्रियं प्रीतिकरं दर्शनं यस्य सः अपि दर्शनीयोऽपि इत्यर्थः स क्षितीशः शरदा प्रमृष्टाम्बुधरोपरोधः निरस्तमेघावरणः पर्य्याप्तकलः पूर्णकलः शशी नलिन्याः इव तस्याः इन्दुमत्याः रुचये न बभूव रुचिं नाजीजनत् इत्यर्थः। लोको भिन्नरुचिः इति भावः॥ ४४॥

सेति। लोकान्तरे स्वर्गादौ अपि गीतकीर्त्तिम् आचारेण शुद्धयोः उभयोः वंशयोः मातापितृकुलयोः दीपं प्रकाशकम्। उभयवंशेत्यत्रोभयपक्षवद्विवाहः। शूरसेनानां देशानाम् अधि-

(1) The Surasenas were the people of Mathura. Their country seems to have been once very extensive and flourishing, for one of the principal and most refined subdivisions of the Prakrita language was named after them—"पुरुषाणामनीचानां संस्कृतं स्यात् प्रयोजकम्। शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम्" इति साहित्यदर्पणम्।

(2) Both Dinakara and Vallabha read "देशान्तरगीतकीर्त्तिम्"।

नीपान्वयः(१) पार्थिव एष यज्वा
गुणैर्यमाश्रित्य परस्परेण।
सिद्धाश्रमं शान्तमिवेत्य(२) सत्वैः
नैसर्गिकोऽप्युत्ससृजे विरोधः ॥ ४६ ॥

यस्यात्मगेहे नयनाभिरामा
कान्तिर्हिमांशोरिव सन्निविष्टा।

पतिं सुषेणं नाम नृपतिम् उद्दिश्य अभिसन्धाय, शुद्धान्तरक्षा अन्तःपुरपालिकया। कर्म्मण्यण्, टिड्ढेति ङीप्। सा कुमारी जगदे ॥ ४५ ॥

नीपेति। यज्वा विधिवदिष्टवान्। "सुयजोर्ङ्वनिप्" इति ङ्वनिप्प्रत्ययः। एषः पार्थिवः नीपः नाम अन्वयोऽस्येति नीपान्वयः नीपवंशजः, यं सुषेणम् आश्रित्य गुणैः ज्ञानमौनादिभिः शान्तं प्रसन्नं सिद्धाश्रमम् ऋष्याश्रमम् एत्य प्राप्य, सत्वैः गजसिंहादिभिः प्राणिभिः इव, नैसर्गिकः स्वाभाविकः अपि परस्परेण विरोधः उत्ससृजे त्यक्तः ॥ ४६ ॥

यस्येति। हिमांशोः कान्तिः चन्द्रकिरणः इव नयनयोः अभिरामा यस्य सुषेणस्य कान्तिः शोभा आत्मगेहे स्वभवने सन्निविष्टा संक्रान्ता। अविषह्यं विसोढुमशक्यं तेजः प्रतापस्तु हर्म्याग्रेषु धनिकमन्दिरप्रान्तेषु। "हर्म्यादि धनिनां

(1) The Nipas were a branch of the Panchalas who occupied the districts lying between the Chumbul and north of the Ganges.

(२) शान्तं शमगुणप्रधानं साधारणास्पदमिति यावत्।

हर्म्याग्रसंरूढतृणाङ्कुरेषु
तेजोऽविषह्यं रिपुमन्दिरेषु (१) ॥ ४७ ॥
यस्यावरोधस्तनचन्दनानां
प्रक्षालनाद्वारिविहारकाले।
कलिन्दकन्या(२) मथुरां गतापि
गङ्गोर्म्मिसंसक्तजलेव भाति (३) ॥ ४८ ॥

वासः" इत्यमरः। संरूढ़ाः तृणाङ्कुराः येषां तेषु शून्येषु इत्यर्थः - रिपुमन्दिरेषु, शत्रुनगरेषु। "मन्दिरं नगरे गृहे" इति विश्वः। सन्निविष्टम्। स्वजनाह्लादको द्विषत्तपश्च इति भावः॥ ४७॥

यस्येति। यस्य सुषेणस्य वारिविहारकाले जलक्रीड़ासमये अवरोधानाम् अन्तःपुराङ्गनानां स्तनेषु चन्दनानांमलयजानां प्रक्षालनात् हेतोः, कलिन्दः नाम शैलः तत्कन्या यमुना। "कालिन्दी सूर्य्यतनया यमुना शमनस्वसा" इत्यमरः। मथुरा नाम अस्य राज्ञः नगरी तां गता अपि गङ्गाया विप्रकृष्टापि इत्यर्थः। मथुरायां गङ्गाभावं (गङ्गायाः अभावम्) सूचयत्ययिमशब्दः। कालिन्दीतीरे मथुरा लवणासुरवधकाले शत्रुघ्नेन निर्म्मास्यत इति वक्ष्यति तत्कथमधुना मथुरासम्भव इति चिन्त्यम्। मथुरा

(१) "अति क्रूरत्वं न राज्यहेतुः" इति दिनकरः।

(२) "धृतापि तरुणातपं कनकदा लक्ष्मी यथा भासुरतद्गुणिगी वर्णयिता मते-र्विशुता। कलिन्दगिरिनन्दिनीतटसुरद्रुमालम्बिनी मदीयमतिचुम्बिनी भवतु कापि कादम्बिनी" इति रसमञ्जर्य्यामपि कलिन्दनन्दीऽद्रिविशेषे वर्णते इति।

(३) "एतेन धर्मःपुराधिकावर्णनमभिप्रायहेतुः" इति दिनकरः।

त्रस्तेन (१) तार्च्यात्(२) किल कालियेन
मणिं विसृष्टं यमुनौकसा यः ।
वक्षःस्थलव्यापिरुचं दधानः
सकौस्तुभं ह्रेपयतीव कृष्णम् ॥ ४९ ॥
सम्भाव्य भर्त्तारममुं युवानं
मृदुप्रवालोत्तरपुष्पशय्ये (३) ।

मथुरापुरीति शब्दभेदः यद्वा सान्वेति । गङ्गायाः भागीरथ्याः ऊर्म्मिभिः संसक्तजला इव भाति धवलचन्दनसंसर्गात् प्रयागादन्यत्राप्यत्र गङ्गासङ्गतेव भाति इत्यर्थः । "सितासिते हि गङ्गायमुने" इति यथाप्रथः॥ ४८ ॥

त्रस्तेनेति । तार्च्यात् गरुड़ात् त्रस्तेन यमुना ओकः स्थानं यस्य तेन कालियेन नाम नागेन विसृष्टं किल अभयदाननिष्क्रयत्वेन दत्तं किलेति ऐतिह्ये वक्षःस्थलव्यापिरुचं मणिं दधानः यः सुषेणः सकौस्तुभं कृष्णं विष्णुं ह्रेपयति इव व्रीड़यति इव । अर्चिर्ह्रीत्यादिना पुगागमः । कौस्तुभमणेरप्युत्कृष्टोऽस्य मणिः इति भावः ॥ ४९ ॥

सम्भाव्येति । युवानम् अमुं सुषेणं भर्त्तारं सम्भाव्य मत्वा

(1) Both Dinakara and Vallabha read "त्रातेन" ।

(२) तार्च्यस्य कश्यपस्य अपत्यं पुमान् तार्च्यो गरुड़ः ।

(३) "कोमलकिसलयाधिककुसुमशयनीये । उत्तरशब्द आधिक्यं ब्रूयात्: एवम् भिन्नस्वभाव । यथा "दूर्व्वायवाङ्कुरप्रवलगुभिस्फुटकोत्तरं, जातिकर्म्म प्रयुक्तं च भोजभीराजमेधिवि." । इति वल्लभः ।

वृन्दावने चैत्ररथादनूने
निर्विश्यतां सुन्दरि यौवनश्रीः ॥ ५० ॥
अध्यास्य चाम्भःपृषतोक्षितानि
शैलेयगन्धीनि(१) शिलातलानि ।
कलापिनां प्रावृषि पश्य नृत्यं
कान्तासु गोवर्द्धनकन्दरासु ॥ ५१ ॥

पतितेनाङ्गीकृत्य इत्यर्थः मृदुप्रवालोत्तरा उपरिप्रस्तारित-कोमलपल्लवा पुष्पशय्या यस्मिन् तत् तस्मिन् चैत्ररथात् कुवेरोद्यानात् अनूने वृन्दावने वृन्दावननामके उद्याने हे सुन्दरि यौवनश्रीः यौवनफलं निर्विश्यतां भुज्यताम् ॥ ५० ॥

अध्यास्येति । किञ्च, प्रावृषि वर्षासु कान्तासु गोवर्द्धनस्य अद्रेः कन्दरासु दरीषु । "दरी तु कन्दरो वा स्त्री" इत्यमरः । अम्भसः पृषतैः विन्दुभिः उक्षितानि सिक्तानि शिलायां भवं शैलेयम् । "शिलाजतु च शैलेयम्" इति यादवः । यद्वा, शिलापुष्पाख्यः ओषधिविशेषः । "कालानुसार्य्यवृद्धाश्मपुष्पशीतशिवानि तु शैलेयम्" इत्यमरः । 'शिलायाम्ढः' इत्यत्र शिलाया इति योगविभागादिवार्थे ढप्रत्ययः । तद्गन्धवन्ति शैलेयगन्धीनि शिलातलानि अध्यास्य अधिष्ठाय कलापिनां वर्हिणां नृत्यं पश्य ॥ ५१ ॥

---

(1) Vallabha reads [illegible] and explains the same by "[illegible]" ।

नृपं तमावर्त्तमनोज्ञनाभिः
सा व्यत्यगादन्यवधूर्भविन्नी ।
महीधरं मार्गवशादुपेतं
स्रोतोवहा सागरगामिनीव (१) ॥ ५२ ॥
अथाङ्गदाश्लिष्टभुजं भुजिष्या
हेमाङ्गदं नाम कलिङ्गनाथम् ।
आसेदुषीं सादितशत्रुपक्षं
बालामबालेन्दुमुखीं बभाषे ॥ ५३ ॥

नृपमिति । "स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः । आवर्त्त-मनोज्ञा नाभिः यस्याः सा, इदञ्च नदीसाम्यार्थमुक्तम् । अन्य-वधूः अन्यपत्नी भविन्नी भाविनी सा कुमारी तं नृपं, सागर-गामिनी सागरं गन्त्री स्रोतोवहा नदी मार्गवशात् उपेतं प्राप्तं महीधरं पर्व्वतम् इव, व्यत्यगात् अतीत्य गता ॥ ५२ ॥

अथेति । अथ भुजिष्या किङ्करी सुनन्दा । "भुजिष्या किङ्करी मता" इति हलायुधः । अङ्गदाश्लिष्टभुजं केयूरनद्धबाहुं सादितशत्रुपक्षं विनाशितशत्रुवर्गं हेमाङ्गदं नाम कलिङ्गनाथम् आसेदुषीम् आसन्नाम् अबालेन्दुमुखीं पूर्णेन्दुमुखीं बालाम् इन्दुमतीं बभाषे ॥ ५३ ॥

---

(१) मार्गं अभिगच्छतीति, सागरगामिनी, भविष्यतीति, गम्यादिरित्यनेन, णिनिः ।

असौ महेन्द्राद्रिसमानसारः(१)
पतिर्महेन्द्रस्य महोदधेश्च ।
यस्य क्षरत्सैन्यगजच्छलेन
यात्रासु यातीव पुरो महेन्द्रः ॥ ५४ ॥

ज्याघातरेखे सुभुजो भुजाभ्यां
बिभर्त्ति यश्चापभृतां पुरोगः ।
रिपुश्रियां(२) साञ्जनवाष्पसेके
वन्दीकृतानामिव पद्धती द्वे ॥ ५५ ॥

असाविति । महेन्द्राद्रेः समानसारः तुल्यसत्त्वः असौ हेमाङ्गदः महेन्द्रस्य नाम कुलपर्व्वतस्य महोदधेश्च पतिः स्वामी । महेन्द्रमहोदधी एवास्य गिरिजलदुर्गे इति भावः । यस्य यात्रासु क्षरतां मदस्राविणां सैन्यगजानां छलेन महेन्द्रः महेन्द्राद्रिः पुरः अग्रे याति इव, अद्रिकल्पा अस्य गजाः इत्यर्थः ॥ ५४ ॥

ज्याघातेति । सुभुजः चापभृतां पुरोगः धनुर्धराग्रेसरः यः वन्दीकृतानां प्रगृहीतानाम् । "प्रग्रहोपग्रहौ वन्द्याम्" इत्यमरः । रिपुश्रियां साञ्जनः वाष्पसेकः ययोः ते कज्जलमिश्राश्रुसिक्ते इत्यर्थः । पद्धती इव द्वे ज्याघातानां मौर्व्वीकिणानां रेखे

---

(१) "'महेन्द्र इन्द्रः, अद्रिः सूर्य्यः, तयोः समानबल' इति वल्लभः ।

(२) Dinakara reads 'रिपुश्रिया' and Vallabha 'रिपुश्रियः' । The singular number is preferable.

यमात्मनः(१) सद्मनि सन्निकृष्टः (२)
मन्द्रध्वनित्याजितयामतूर्य्यः ।
प्रासादवातायनदृश्यवीचिः
प्रबोधयत्यर्णव एव सुप्तम् ॥ ५६ ॥

अनेन सार्द्धं विहराम्बुराशेः
तीरेषु तालीवनमर्म्मरेषु ।
द्वीपान्तरानीतलवङ्गपुष्पैः
अपाकृतस्वेदलवा मरुद्भिः ॥ ५७ ॥

राज्ञो भुजाभ्यां बिभर्त्ति। द्विवचनात् सव्यसाचित्वं गम्यते रिपुश्रियां भुजाभ्यामेवाहरणात् तद्गतरेखयोस्तत्पद्धतित्वेनोत्प्रेक्षा तयोः श्यामत्वात् साञ्जनाश्रुसेकोक्तिः ॥ ५५ ॥

यमिति। आत्मनः सद्मनि सुप्तं यं हेमाङ्गदं सन्निकृष्टः समीपस्थः अत एव प्रासादवातायनैः दृश्यवीचिः मन्द्रेण गम्भीरेण। "मन्द्रस्तु गम्भीरे" इत्यमरः। ध्वनिना त्याजितं विवर्जितं यामस्य तूर्य्यप्रहरावसानसूचकं वाद्यं येन सः तथोक्तः। "द्वौ यामप्रहरौ समौ" इत्यमरः। अर्णवः एव प्रबोधयति। अर्णवस्यैव तूर्य्यकार्य्यकारित्वात् तद्वैयर्थ्यम् इत्यर्थः। समुद्रस्यापि सेव्यः किमन्येषाम् इति भावः ॥ ५६ ॥

अनेनेति। अनेन राज्ञा सार्द्धं तालीवनैः मर्म्मरेषु मर्म्मरेति

(१) "यमात्मन इति कुप्रकीतिकरं चिन्त्यम्" इति दिनकरः।

(2) Vallabha reads "सन्निविष्टम्" and translates into 'अतीपभोगम्'।

प्रलोभिताप्याकृतिलोभनीयम्(१)
विदर्भराजावरजा तयैवम् ।
तस्मादपावर्त्तत दूरकृष्टा
नीत्येव लक्ष्मीः प्रतिकूलदैवात् ॥ ५८ ॥
अथोरगाख्यस्य पुरस्य नाथं
दौवारिकी देवसरूपमेत्य ।

ध्वनत्सु । "अथ मर्म्मरः स्वनिते वस्त्रपर्णानाम्" इत्यमरवचनात् गुणपरस्यापि मर्म्मरशब्दस्य गुणिपरत्वं प्रयोगादवसेयम् । अम्बुराशेः समुद्रस्य तीरेषु द्वीपान्तरेभ्यः आनीतानि लवङ्गपुष्पाणि देवकुसुमानि यैः तैः । "लवङ्गं देवकुसुमम्" इत्यमरः । मरुद्भिः वातैः अपाकृताः प्रशमिताः स्वेदस्य लवाः विन्दवः यस्याः सा तथाभूता सती विहर क्रीड़ ॥ ५७ ॥

प्रलोभितेति । आकृत्या रूपेण लोभनीया आकर्षणीया न तु वर्णनमात्रेण इत्यर्थः । विदर्भराजावरजा भोजानुजा इन्दुमती तया सुनन्दया एवं प्रलोभिता प्रचोदिता अपि, नीत्या पुरुषकारेण दूरकृष्टा दूरम् आनीता लक्ष्मीः प्रतिकूलं दैवं यस्य तस्मात् पुंसः इव, तस्मात् हेमाङ्गदात् अपावर्त्तत प्रतिनिवृत्ता ॥ ५८ ॥

अथेति । अथ द्वारे नियुक्ता दौवारिकी सुनन्दा । तत्र नियुक्त इति ठक्प्रत्ययः । द्वारादीनाञ्चेत्यौ आगमः ।

---

(१) "यादृशेन रूपेण इयं लोभ्यते तादृशं रूपं तस्मिन् नृपे नास्तीति भावः" इति दिनकरः ।

इतश्चकोराक्षि विलोकयेति
पूर्वानुशिष्टां निजगाद भोज्याम् ॥ ५९ ॥
पाण्ड्योऽयमंसार्पितलम्बहारः
क्लृप्ताङ्गरागो हरिचन्दनेन ।
आभाति बालातपरक्तसानुः
सनिर्झरोद्गार इवाद्रिराजः ॥ ६० ॥

आकारेण देवसरूपं देवतुल्यम् उरगाख्यस्य पुरस्य पाण्ड्यदेशे कान्यकुब्ज-तीरवर्त्ति-नागपुरस्य नाथम् एत्य प्राप्य, हे चकोराक्षि इतो विलोकय इति पूर्वानुशिष्टां पूर्व्वम् उक्तां भोजस्य राज्ञः गोत्रापत्यं स्त्रियं भोज्याम् इन्दुमतीम् । क्रौड्यादिभ्यश्चेत्यत्र भोजात् क्षत्रियादित्युपसंख्यानात् ष्यङ् प्रत्ययः, यङश्चापिति चाप् । निजगाद इतो विलोकयेति पूर्व्वमुक्ता यथावक्तव्यं निजगाद इत्यर्थः ॥ ५९ ॥

पाण्ड्य इति । अंसयोः अर्पिताः लम्बन्ते इति लम्बाः हाराः यस्य स हरिचन्दनेन गोशीर्षाख्येन चन्दनेन । "तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम्" इत्यमरः । क्लृप्ताङ्गरागः सिद्धानुलेपनः अयं पाण्ड्नां जनपदानां राजा पाण्ड्यः पाण्डोर्जनपदशब्दात् क्षत्रियात् ड्यण्वक्तव्य इति ड्यण्प्रत्ययः तस्य राजन्यपत्यवदिति वचनात् । बालातपेन रक्ताः अरुणाः सानवः यस्य स सनिर्झरोद्गारः प्रवाह-स्पन्दन-सहितः । "वारिप्रवाहो निर्झरो झरः" इत्यमरः । अद्रिराजः इव आभाति ॥ ६० ॥

विन्ध्यस्य संस्तम्भयिता(१) महाद्रेः
निःशेषपीतोज्झितसिन्धुराजः (२) ।
प्रीत्याश्वमेधावभृथार्द्रमूर्त्तेः
सौस्नातिको यस्य भवत्यगस्त्यः ॥ ६१ ॥
अस्त्रं हरादाप्तवता दुरापं
येनेन्द्रलोकावजयाय दृप्तः ।

विन्ध्यस्येति । विन्ध्यस्य नाम्नः महाद्रेः तपनमार्गनिरोधाय वर्द्धमानस्य इति शेषः संस्तम्भयिता निवारयिता निःशेषं पीतः उज्झितः पुनः त्यक्तः सिन्धुराजः समुद्रः येन स अगस्त्यः अश्वमेधस्य अवभृथे दीक्षान्ते कर्म्मणि । "दीक्षान्तोऽवभृथो यज्ञः" इत्यमरः । आर्द्रमूर्त्तेः स्नातस्य इत्यर्थः यस्य पाण्ड्यस्य प्रीत्या स्नेहेन न तु दाक्षिण्येन सुस्नातं पृच्छतीति सौस्नातिकः भवति । पृच्छती सुस्नातादिभ्य इत्युपसंख्यानात् ठक् ॥ ६१ ॥

अस्त्रमिति । पुरा पूर्वं जनस्थानस्य खरालयस्य विमर्द्दशङ्की हतः उद्धतः लङ्काधिपतिः रावणः दुरापं दुर्लभम् अस्त्रं ब्रह्मशिरोनामकं हरात् आप्तवता येन पाण्ड्येन सन्धाय इन्द्र-

(१) पुरा किल गिरिः वर्द्धमानं तपनमार्गनिरोधिनं विन्ध्याद्रिं देवानुरोधादुपगम्य प्रणतं तं शिष्यमूर्त्तं "यावत् ईदृशेन तिष्ठ तावदहं निवर्त्तिष्ये" इत्युक्त्वा महर्षिरगस्त्यः दक्षिणापथमभिगतः न पुनरायातः । अतो हि 'अगस्त्ययात्रा' इति लोकानामाभाणकम् ।

(२) समुद्रगह्वरे कालकेयादिभिरसुरैर्वसद्भिः निभृतमुषित्वा मत्तं शक्रप्रेरितैः अभिद्रुता अतिविपन्ना देवा अगस्त्यं शरणं ययुः । स किल महर्षिः गण्डूषेण महोदधिं निःशेषं पीत्वा तान् दैत्यानघातयदिति पुराणवार्त्ता ।

पुरा जनस्थानविमर्दशङ्की(१)
सन्धाय लङ्काधिपतिः प्रतस्थे ॥ ६२ ॥
अनेन पाणौ विधिवद्गृहीते
महाकुलीनेन महीव गुर्वी ।
रत्नानुविद्धार्णवमेखलाया:
दिशः सपत्नी भव दक्षिणस्याः ॥ ६३ ॥
ताम्बूलवल्लीपरिणद्धपूगा-
स्वेलालतालिङ्गितचन्दनासु ।

लोकावजयाय इन्द्रलोकं जेतुं प्रतस्थे । इन्द्रविजयिनो रावणस्यापि विजेता इत्यर्थः ॥ ६२ ॥

अनेनेति । महाकुलीनेन महाकुले जातेन । "महाकुलादञ्खञौ" इति खञ्प्रत्ययः । अनेन पाण्ड्येन पाणौ त्वदीये विधिवत् यथाशास्त्रं गृहीते सति गुर्व्वी गुरुः । वोतोगुणवचनादिति ङीप् । मही इव रत्नैः अनुविद्धः व्याप्तः अर्णवः एव मेखला यस्याः तस्याः । इदं विशेषणं मह्यामिन्दुमत्याञ्च योज्यम् । दक्षिणस्याः दिशः सपत्नी भव । अनेन सपत्न्यन्तराभावो ध्वन्यते ॥ ६३ ॥

ताम्बूलेति । ताम्बूलवल्लीभिः नागवल्लीभिः परिणद्धाः परि-

(1) Janasthana lay along a portion of the Karamandal Coast comprising probably the northern districts of the Karnatic and forming formerly a part of the Dandakaranya.

तमालपत्रास्तरणासु रन्तुं
प्रसीद शश्वन्मलयस्थलीषु (१) ॥ ६४ ॥
इन्दीवरश्यामतनुर्नृपोऽसौ
त्वं रोचनागौरशरीरयष्टिः (२) ।
अन्योन्यशोभापरिवृद्धये वां
योगस्तडित्तोयदयोरिवास्तु (३) ॥ ६५ ॥

रव्याः पूगाः क्रमुकाः यासु । "ताम्बूलवल्ली ताम्बूली नागवल्ल्यपि" इति, "घोण्टा तु पूगः क्रमुकः" इति च अमरः । एलालताभिः आलिङ्गिताः चन्दनाः मलयजाः यासु तासु । "गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्" इत्यमरः । तमालस्य तापिच्छस्य पत्राणि एव आस्तरणानि यासु तासु । "कालस्कन्धस्तमालः स्यात् तापिच्छोऽपि" इत्यमरः । मलयस्थलीषु शश्वत् मुहुः सदा वा रन्तुं प्रसीद अनुकूला भव ॥ ६४ ॥

इन्दीवरेति । असौ नृपः इन्दीवरश्यामतनुः, त्वं रोचना गोरोचना इव गौरी शरीरयष्टिः यस्याः सा, ततः तडित्तोयदयोः विद्युन्मेघयोः इव वां युवयोः योगः समागमः अन्योन्यशोभायाः परिवृद्धये अस्तु ॥ ६५ ॥

---

(१) मलयस्थलीषु मलयाद्रेरुपत्यकासु इत्यर्थः ।

(२) "यष्टिशब्दः शरीरार्थः" इति दिनकरः । यष्टिशब्दो हि शरीरादिशब्दात् परं प्रयुक्तः पीनतां बोधयन् शैथिल्यं गमयतीत्यनुसन्धेयम् ।

(३) "घनविद्युतोः पवित्रशोभात् मेरायोतिः" इति दिनकरः ।

स्वसुर्विदर्भाधिपतेस्तदीयः
लेभेऽन्तरं चेतसि नोपदेशः ।
दिवाकरादर्शनबद्धकोशे
नक्षत्रनाथांशुरिवारविन्दे ॥ ६६ ॥

सञ्चारिणी दीपशिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः ॥ ६७ ॥

तस्यां रघोः सूनुरुपस्थितायां
वृणीत मां नेति समाकुलोऽभूत् ।

स्वसुरिति । विदर्भाधिपतेः भोजस्य स्वसुः इन्दुमत्याः चेतसि तदीयः सुनन्दासम्बन्धी उपदेशः वाक्यं दिवाकरस्य अदर्शनेन बद्धकोशे मुकुलिते अरविन्दे नक्षत्रनाथांशुः चन्द्रकिरणः इव अन्तरम् अवकाशं न लेभे ॥ ६६ ॥

सञ्चारिणीति । पतिंवरा सा इन्दुमती रात्रौ सञ्चारिणी दीपशिखा इव यं यं भूपालं व्यतीयाय अतीत्य गता स स भूमिपालः स सर्वः इत्यर्थः । नित्यवीप्सयोरिति वीप्सायां द्विर्वचनम् । नरेन्द्रमार्गे राजपथे अट्टाख्यः गृहभेदः इव । "स्यादट्टः क्षौममस्त्रियाम्" इत्यमरः । विवर्णभावं मिच्छायत्वम् वाहस्य तमोहतत्वं प्रपेदे ॥ ६७ ॥

तस्यामिति । तस्याम् इन्दुमत्याम् उपस्थितायाम् आस-

वामेतरः संशयमस्य बाहुः (१)
केयूरबन्धोच्छ्वसितैर्नुनोद(२) ॥ ६८ ॥
तं प्राप्य सर्व्वावयवानवद्यं
व्यावर्त्ततान्योपगमात् कुमारी।
न हि प्रफुल्लं सहकारमेत्य
वृक्षान्तरं काङ्क्षति षट्पदाली ॥ ६९ ॥

मायां सत्यां रघोः सूनुः अजः मां वृणीत न वा इति समाकुलः संशयितः अभूत्। अथ अस्य अजस्य वामेतरः वामात् इतरः दक्षिणः बाहुः केयूरं बध्यते अत्र इति केयूरबन्धः अङ्गदस्थानं तस्य उच्छ्वसितैः स्फुरणैः संशयं नुनोद ॥ ६८ ॥

तमिति। कुमारी सर्वेषु अवयवेषु अनवद्यम् अदोषं तम् अजं प्राप्य अन्योपगमात् राजान्तरोपगमात् व्यावर्त्तत निवृत्ता। तथाहि, षट्पदाली भृङ्गावलिः प्रफुल्लतीति प्रफुल्लं विकसितं पुष्पितम् इत्यर्थः। प्रपूर्व्वात् फुल्लतेः पचाद्यच्, फलतेस्तु प्रफुल्लं इति पठितव्यम्, अनुपसर्गादिति निषेधादित्युभयथापि न कदाचिदनुपपत्तिरित्युक्तं प्राक्। सहकारं चूतविशेषम् एत्य।

(१) "पुंसोहि दक्षिणभुजस्फुरणं प्रियाप्तिम्" सूचयति। अत इन्दुमती मत्कीर्त्तिः दक्षिणभुजस्य स्फुरणमिति संशयमपनीतवानिति दिनकरः। Compare "मातर्मिदं वामनयनं स्फुरति च बाहुः इतः दक्षिणमिदानीम्। कदा भविष्यन्ती तानि भवन्ति सर्वत्र" इति शाकुन्तले।

(२) "केयूरस्य अङ्गदस्य बन्धो यस्मिन् भुजस्य स्थानात् यानि उच्छ्वसितानि स्फुरितानि तैः" इति दिनकरः।

तस्मिन् समावेशितचित्तवृत्तिम्
इन्दुप्रभामिन्दुमतीमवेत्य ।
प्रचक्रमे वक्तुमनुक्रमज्ञा
सविस्तरं वाक्यमिदं सुनन्दा ॥ ७० ॥
इक्ष्वाकुवंश्यः ककुदं नृपाणां
ककुत्स्थ इत्याहितलक्षणोऽभूत् (१)।

"आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः" इत्यमरः। वृक्षान्तरं न काङ्क्षति। न हि सर्व्वोत्कृष्टवस्तुलाभेऽपि वस्त्वन्तरस्याभिलाषः स्यात् इत्यर्थः ॥ ६८ ॥

तस्मिन्निति। तस्मिन् अजे समावेशिता संक्रामिता चित्तवृत्तिः यया ताम् इन्दोः प्रभा इव प्रभा यस्याः ताम्। आह्लादकत्वादिन्दुसाम्यम्। इन्दुमतीम् अवेत्य अनुक्रमज्ञा वाक्यपौर्व्वापर्य्याभिज्ञा सुनन्दा इदं वक्ष्यमाणं सविस्तरं सप्रपञ्चम्। प्रथमे वावशब्दे इति घञो निषेधात् "ऋदोरप्" इति अप्प्रत्ययः। "विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः" इत्यमरः। वाक्यं वक्तुं प्रचक्रमे ॥ ७० ॥

इक्ष्वाकिति। इक्ष्वाकोः मनुपुत्रस्य वंशे भवः नृपाणां ककुदं श्रेष्ठः। "ककुच्च ककुदं श्रेष्ठे वृषांसे राजलक्ष्मणि" इति विश्वः।

*(1) Kakutstha was the son of शशाद and grand-son of Ikshvaku. His original name was पुरञ्जय. He was able to destroy the Asuras, because the supreme God Vishnu, propitiated by the prayers of the gods, consented to infuse a portion of his divine spirit into his person. See V. P. Book I. V. chp ii.

काकुत्स्थशब्दं यत उन्नतेच्छाः
श्लाघ्यं दधत्युत्तरकोशलेन्द्राः ॥ ७१ ॥
महेन्द्रमास्थाय महोक्षरूपं
यः संयति प्राप्तपिनाकिलीलः ।
चकार बाणैरसुराङ्गनानां
गण्डस्थलीः प्रोषितपत्रलेखाः ॥ ७२ ॥

माहितलक्षणः प्रख्यातगुणः । "गुणैः प्रतीते तु कृतलक्षणाहित-लक्षणौ" इत्यमरः । ककुदि वृषांसे तिष्ठतीति ककुत्स्थः इति प्रसिद्धः कश्चित् राजा अभूत्, यतः ककुत्स्थात् आरभ्य उन्नतेच्छाः महाशयाः । "महेच्छस्तु महाशयः" इत्यमरः । उत्तरकोशलेन्द्राः राजानः दिलीपादयः श्लाघ्यं प्रशस्तं ककुत्स्थस्य अपत्यं पुमान् काकुत्स्थः इति शब्दं संज्ञां दधति बिभ्रति । तन्नामसंस्पर्शोऽपि वंशस्य कीर्त्तिकरः इति भावः । पुरा किल पुरञ्जयो नाम साक्षाद्भगवतो विष्णोरंशावतारः कश्चिदैक्ष्वाको राजा देवैः सह समयबन्धेन देवासुरयुद्धे महोक्षरूपधारिणो महेन्द्रस्य ककुदि स्थित्वा पिनाकिलीलया निखिलमसुरकुलं निहत्य काकुत्स्थसंज्ञां लेभे इति पौराणिकी कथानुसन्धेया, वक्ष्यते चायमेवार्थः उत्तर-श्लोके ॥ ७१ ॥

महेन्द्रमिति । यः ककुत्स्थः संयति युद्धे महान् उक्षा महोक्षः । अचतुरेति निपातः । तस्य रूपम् इव रूपं यस्य तं महेन्द्रम् आस्थाय आरुह्य अत एव प्राप्ता पिनाकिनः (पिनाक-

ऐरावतास्फालनविश्लथं यः
सङ्घट्टयन्नङ्गदमङ्गदेन।
उपेयुषः स्वामपि मूर्त्तिमग्र्याम्
अर्द्धासनं गोत्रभिदोऽधितष्ठौ (१) ॥ ७३ ॥

पाणेः शिवस्य, ईश्वरस्य लीला येन स तथोक्तः सन् वाणैः असुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखाः निवृत्तपत्ररचनाः चकार तद्भर्त्तॄनसुरानवधीदित्यर्थः। न हि विधवाः प्रसाध्यन्ते इति भावः ॥ ७२ ॥

ऐरावतेति। यः ककुत्स्थः, ऐरावतस्य स्वर्गजस्य आस्फालनेन ताड़नेन विश्लथं शिथिलम् अङ्गदम् ऐन्द्रम् अङ्गदेन स्वकीयेन सङ्घट्टयन् सङ्घर्षयन् स्वाम् अग्र्यां श्रेष्ठां मूर्त्तिम् उपेयुषः अपि प्राप्तस्य अपि गोत्रभिदः इन्द्रस्य अर्द्धम् आसनस्य अर्द्धासनम्। अर्द्धं नपुंसकमिति समासः। अधितष्ठौ अधिष्ठितवान्। स्थादिष्वभ्यासेन चाभ्यासस्येति अभ्यासेन व्यवायेऽपि षत्वम्। न केवलं महोक्षरूपधारिण एव तस्य ककुदमारुरुक्षत् किन्तु निजरूपधारिणोऽपि इन्द्रस्यार्द्धासनमित्यपिशब्दार्थः। अथवा, अर्द्धासनमपीत्यपेरन्वयः ॥ ७३ ॥

(१) गां पृथ्वीं त्रायन्ते इति गोत्राः भूधराः, तान् भिनत्तीति गोत्रभित्। पुरा किल महेन्द्रः सपक्षान् पर्वतान् दैत्यान् दैत्यान्तरसुतृपस्य प्रजाभयकारिणः वज्रेण पातयति स्म इति पुराणवार्त्ता। Sankara observes, गोत्र is a cow-pen and means metaphorically a cloud, where the cows of heaven (rain-waters) are concealed. In the Vedic hymns he is described as having broken asunder with his thunder-bolt, the mountains (clouds) and liberated the heavenly cows (rain-waters).

जातः कुले तस्य किलोरुकीर्त्तिः
कुलप्रदीपो नृपतिर्दिलीपः।
अतिष्ठदेकोनशतक्रतुत्वे
शक्राभ्यसूयाविनिवृत्तये यः ॥ ७४ ॥

यस्मिन् महीं शासति वाणिनीनां
निद्रां विहारार्द्धपथे(१) गतानाम्।
वातोऽपि नास्रंसयदंशुकानि
को लम्बयेदाहरणाय हस्तम् ॥ ७५ ॥

जात इति। उरुकीर्त्तिः महायशाः कुलप्रदीपः दिलीपः नृपतिः तस्य ककुत्स्थस्य कुले जातः किल, यः दिलीपः शक्राभ्यसूयाविनिवृत्तये न त्वशक्तया इति भावः एकेन ऊनाः शतं क्रतवः यस्य स एकोनशतक्रतुः तस्य भावे तत्त्वे अतिष्ठत् इन्द्रप्रीतये शततमं क्रतुमवशेषितवान् इत्यर्थः ॥ ७४ ॥

यस्मिन्निति। यस्मिन् दिलीपे महीं शासति सति विहरन्त्यत्रेति विहारः क्रीड़ास्थानं तस्य अर्द्धपथे निद्रां गतानां वाणिनीनां मत्ताङ्गनानाम्। "वाणिनी नर्त्तकी मत्ता विदग्धवनितासु च" इति विश्वः, "वाणिन्यौ नर्त्तकीमत्ते" इत्यमरश्च। अंशुकानि वस्त्राणि वातः अपि न अस्रंसयत् न अकम्पयत् आहरणाय अपहर्त्तुं कः हस्तं लम्बयेत्। तस्य आज्ञासिद्धला-

(१) अर्द्धः पन्था अर्द्धपथः तस्मिन् मार्गैकदेशे इत्यर्थः।

पुत्रो रघुस्तस्य पदं प्रशास्ति
महाक्रतोर्विश्वजितः प्रयोक्ता ।
चतुर्दिगावर्ज्जितसम्भृतां यः
मृत्पावशेषामकरोद्विभूतिम् ॥ ७६ ॥

आरूढमद्रीनुदधीन् वितीर्णं
भुजङ्गमानां वसतिं प्रविष्टम् ।
ऊर्द्ध्वं गतं यस्य न चानुबन्धि(१)
यशः परिच्छेत्तुमियत्तयालम् ॥ ७७ ॥

इकुतोभयसञ्चाराः प्रजाः इत्यर्थः । अर्द्धश्चासौ पन्थाश्चेति विग्रहः, समप्रविभागे प्रमाणाभावात् नैकदेशिसमासः ॥ ७५ ॥

पुत्र इति । विश्वजितः नाम महाक्रतोः प्रयोक्ता अनुष्ठाता तस्य दिलीपस्य पुत्रः रघुः पदं पैत्रम् एव प्रशास्ति पालयति, यः रघुः चतसृभ्यः दिग्भ्यः आवर्ज्जितसम्भृतां विभूतिं सम्पदं मृत्पात्रम् एव शेषः यस्याः ताम् अकरोत् विश्वजिद्-यागस्य सर्व्वस्वदक्षिणकत्वात् इत्यर्थः ॥ ७६ ॥

आरूढमिति । किञ्च, अद्रीन् आरूढम् उदधीन् वितीर्णम् अवगाढं सकलभूगोलव्यापकम् इत्यर्थः भुजङ्गमानां वसतिं पातालं प्रविष्टम् ऊर्द्ध्वं स्वर्गादिकं गतं व्याप्तम् इत्थं सर्व्वदिग्-व्यापि इत्यर्थः अनुबध्नाति इति अनुबन्धि च अविच्छेदकाल-व्यापकञ्च इत्यर्थः अत एव एवंभूतं यस्य यशः इयत्तया देशतः

(१) अनुबन्धि च "अद्यापि प्रसरत्यहो(?)" इति वल्लभः ।

असौ कुमारस्तमजोऽनुजातः
त्रिविष्टपस्येव पतिं जयन्तः।
गुर्वीं धुरं यो भुवनस्य पित्रा
धुर्य्येण दम्यः सदृशं बिभर्त्ति ॥ ७८ ॥
कुलेन कान्त्या वयसा नवेन
गुणैश्च तैस्तैर्विनयप्रधानैः।

कालतः वा केनचित् मानेन परिच्छेत्तुं परिमातुं न अलं न शक्यम् ॥ ७७ ॥

असाविति। असौ अजाख्यः कुमारः त्रिविष्टपस्य स्वर्गस्य पतिम् इन्द्रं जयन्तः इव। "जयन्तः पाकशासनिः" इत्यमरः। तं रघुम् अनुजातः तस्माज्जातः इत्यर्थः। तज्जातोऽपि तदनुजातो भवति जन्यजनकयोरानन्तर्यात्। "गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च" इति क्तः। सोपसृष्टत्वात् सकर्मकत्वम्। आह चात्रैव सूत्रे वृत्तिकारः, "श्लिषादयः सोपसृष्टाः सकर्मका भवन्ति" इति। दम्यः शिक्षणीयावस्थः यः अजः गुर्वीं भुवनस्य धुरं धुर्य्येण धुरन्धरेण चिरनिरूढेन पित्रा सदृशं तुल्यं यथा तथा बिभर्त्ति। यथा कश्चिद्दम्यतरोऽपि धुर्य्येण महोक्षेण समं वहतीत्युपमालङ्कारो ध्वन्यते। "दम्यवत्सतरौ समौ" इत्यमरः ॥ ७८ ॥

कुलेनेति। कुलेन कान्त्या लावण्येन नवेन वयसा यौवनेन विनयः प्रधानं येषां तैः तैः गुणैः श्रुतशीलादिभिश्चात्मनः

त्वमात्मनस्तुल्यममुं वृणीष्व
रत्नं समागच्छतु काञ्चनेन ॥ ७९ ॥
ततः सुनन्दावचनावसाने
लज्जां तनूकृत्य नरेन्द्रकन्या ।
दृष्ट्या प्रसादामलया कुमारं
प्रत्यग्रहीत् संवरणस्रजेव ॥ ८० ॥
सा यूनि तस्मिन्नभिलाषबन्धं
शशाक शालीनतया न वक्तुम् ।
रोमाञ्चलक्ष्येण स गात्रयष्टिम्
भित्त्वा निराक्रामदरालकेश्याः ॥ ८१ ॥

तुल्यं स्वानुरूपम् अमुम् अजं त्वं वृणीष्व, किं बहुना रत्नं काञ्चनेन समागच्छतु सङ्गच्छताम् । प्रार्थनायां लोट् । रत्नकाञ्चनयोरिवात्यन्तानुरूपत्वाद्युवयोः समागमः प्रार्थ्यते इत्यर्थः ॥७९॥

तत इति । ततः सुनन्दावचनस्य अवसाने अन्ते नरेन्द्रकन्या इन्दुमती लज्जां तनूकृत्य सङ्कोच्य प्रसादेन मनःप्रसादेन अमलया प्रसन्नया दृष्ट्या संवरणस्य स्रजा स्वयं वरणार्थं स्रजा इव कुमारम् अजं प्रत्यग्रहीत् स्वीचकार । सम्यक् सानुरागमपश्यत् इत्यर्थः ॥ ८० ॥

सेति । सा कुमारी यूनि तस्मिन् अजे अभिलाषबन्धम् अनुरागग्रन्थिं शालीनतया अधृष्टतया । "स्यादधृष्टस्तु शालीनः"

तथागतायां परिहासपूर्वं
सख्यां सखी वेत्रभृदावभाषे।
आर्य्ये व्रजामोऽन्यत इत्यथैनां
वधूरसूयाकुटिलं ददर्श ॥ ८२ ॥

सा चूर्णगौरं रघुनन्दनस्य
धात्रीकराभ्यां करभोपमोरूः।
आसञ्जयामास यथाप्रदेशं
कण्ठे गुणं मूर्त्तमिवानुरागम् ॥ ८३ ॥

इत्यमरः। शालीनकौपीने अधृष्टाकार्य्ययोरिति निपातः। वक्तुं न शशाक, तथापि अरालकेश्याः (कुटिलकुञ्चितकेश्याः) सः अभिलाषबन्धः रोमाञ्चलक्षेण पुलकव्याजेन। "व्याजोऽपदेशो लक्षञ्च" इत्यमरः। गात्रयष्टिं भित्वा निराक्रामत् सात्त्विकाविर्भावलिङ्गेन प्रकाशितः इत्यर्थः ॥ ८१ ॥

तथेति। सख्याम् इन्दुमत्यां तथागतायां तथाभूतायां दृष्टानुरागायां सत्याम् इत्यर्थः सखी सहचरी। सख्यशिश्वीति भाषायामिति निपातनात् ङीप्। वेत्रभृत् सुनन्दा हे आर्य्ये पूज्ये अन्यतः अन्यं प्रति व्रजामः इति परिहासपूर्व्वम् आबभाषे। अथ वधूः इन्दुमती एनां सुनन्दाम् असूयया रोषेण कुटिलं ददर्श अन्यगमनस्यासह्यत्वात् इत्यर्थः ॥ ८२ ॥

सेति। करभः करप्रदेशविशेषः। "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः। करभः उपमा ययोः तौ तथ-

तया स्रजा मङ्गलपुष्पमय्या
विशालवक्षःस्थललम्बया सः ।
अमंस्त कण्ठार्पितबाहुपाशां
विदर्भराजावरजां वरेण्यः ॥ ८४ ॥
शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।

यस्याः सा करभोपमोरूः । "ऊरूत्तरपदादौपम्ये" इत्यूङ्प्रत्ययः । सा कुमारी चूर्णेन मङ्गलचूर्णेन गौरं लोहितं गुणं स्रजं मूर्तं मूर्तिमन्तम् अनुरागम् इव धात्र्याः उपमातुः सुनन्दायाः कराभ्यां रघुनन्दनस्य अजस्य कण्ठे यथाप्रदेशं यथास्थानम् आसञ्जयामास आसक्तं कारयामास न तु स्वयमाससञ्ज अनौचित्यात् ॥ ८३ ॥

तयेति । वरेण्यः वरणीयः उत्कृष्टः । वृञ एण्यः । सः अजः मङ्गलपुष्पमय्या मधूकादिकुसुममय्या विशालवक्षःस्थले लम्बया लम्बमानया तया प्रकृतया स्रजा विदर्भराजावरजाम् इन्दुमतीं कण्ठार्पितौ बाहू एव पाशौ यया ताम् अमंस्त । मन्यतेर्लुङ् । बाहुपाशकल्पसुखमन्वभूत् इत्यर्थः ॥ ८४ ॥

शशिनमिति । तत्र स्वयंवरे समगुणयोः तुल्यगुणयोः इन्दुमतीरघुनन्दनयोः योगेन प्रीतिः येषां ते समगुणयोगप्रीतयः पौराः पुरे भवाः जनाः इयम् अजसङ्गता इन्दुमती मेघैः मुक्तं शशिनं शरच्चन्द्रम् उपगता कौमुदी, अनुरूपं सदृशं जलनिधिम्

इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥ ८५ ॥
प्रमुदितवरपक्षमेकतस्तत्
क्षितिपतिमण्डलमन्यतो वितानम् ।
उषसि सर इव प्रफुल्लपद्मं
कुमुदवनप्रतिपन्ननिद्रमासीत् ॥ ८६ ॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
स्वयंवरवर्णनो नाम षष्ठः सर्गः ।

अवतीर्णा प्रविष्टा जह्नुकन्या भागीरथी तत्सदृशी इत्यर्थः इत्येवं नृपाणां श्रवणयोः कटु परुषम् एकम् अविसंवादि वाक्यम् एकवाक्यं विवव्रुः । मालिनीवृत्तम् ॥ ८५ ॥

प्रमुदितेति । एकतः एकत्र प्रमुदितः हृष्टः वरस्य जामातुः पक्षः वर्गः यस्य तत् तथोक्तम्, अन्यतः अन्यत्र वितानं शून्यं भग्नाशत्वादप्रहृष्टम् इत्यर्थः तत् क्षितिपतिमण्डलम् उषसि प्रभाते प्रफुल्लपद्मं कुसुदवनेन प्रतिपन्ननिद्रं प्राप्तनिमीलनं सरः इव सरस्तुल्यम् आसीत् । पुष्पिताग्रा वृत्तमेतत् ॥ ८६ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरि-विरचितायां
रघुवंशव्याख्यायां सञ्जीविनीसमाख्यायां षष्ठः सर्गः।

# सप्तमः सर्गः ।

---

अथोपयन्त्रा सदृशेन (१) युक्तां
स्कन्देन साक्षादिव देवसेनाम् (२) ।
स्वसारमादाय विदर्भनाथः
पुरप्रवेशाभिमुखो बभूव ॥ १ ॥
सेनानिवेशान् पृथिवीक्षितोऽपि
जग्मुर्विभातग्रहमन्दभासः ।

भजेमहि निपीयैकं मुहुरन्यं पयोधरम् ।
मार्गस्तं बालमालोक्य स्वसन्तावादिदम्पती ॥

अथेति । अथ विदर्भनाथः भोजः सदृशेन उपयन्त्रा वरेण युक्ताम् अत एव साक्षात् प्रत्यक्षम् । "साक्षात् प्रत्यक्षतुल्ययोः" इत्यमरः । स्कन्देन युक्तां देवसेनाम् इव देवसेना नाम देवपुत्री स्कन्दपत्नी ताम् इव स्थितां स्वसारं भगिनीम् इन्दुमतीम् आदाय गृहीत्वा पुरप्रवेशाभिमुखः बभूव । उपजातिवृत्तं सर्गेऽस्मिन् ॥ १ ॥

सेनेति । भोजस्य राज्ञः गोत्रापत्यं स्त्री भोज्या ताम् इन्दु-

---

(1) See stanza 79 canto VI.

(२) "पूर्वं हि ब्रह्मणा निर्मिते देवसेनादैत्यसेने कन्यके अभूतां । ततः पूर्वस्याः पतित्वे कुमारोऽभिषिक्त इत्यागमः" इति वल्लभः ।

भोज्यां प्रति व्यर्थमनोरथत्वात्
रूपेषु वेषेषु च साभ्यसूयाः ॥ २ ॥
सान्निध्ययोगात् किल तत्र शच्याः(१)
स्वयंवरक्षोभकृतामभावः।
काकुत्स्थमुद्दिश्य समत्सरोऽपि
शशाम तेन क्षितिपाललोकः ॥ ३ ॥

सतीं प्रति व्यर्थमनोरथत्वात् रूपेषु आकृतिषु वेषेषु नेपथ्येषु च साभ्यसूयाः ईर्ष्येति निन्दन्तः किन्तु विभाते प्रातःकाले ये ग्रहाः चन्द्रादयः ते इव मन्दभासः क्षीणकान्तयः पृथिवीक्षितः नृपाः अपि सेनानिवेशान् शिबिराणि जग्मुः ॥ २ ॥

ननु क्षुद्राः विद्युध्यन्तां तत्राह, सान्निध्येति। तत्र स्वयंवरक्षेत्रे शच्याः इन्द्राण्याः सन्निधिः एव सान्निध्यं तस्य योगात् सद्भावात् हेतोः स्वयंवरस्य क्षोभकृतां विघ्नकारिणाम् अभावः किल। किलेति स्वयंवरविघातकाः शच्या विनाश्यन्ते इत्यागमसूचनार्थम्। तेन हेतुना काकुत्स्थम् अजम् उद्दिश्य समत्सरः अपि क्षितिपाललोकः शशाम न अक्षुभ्यत् ॥ ३ ॥

---

(१) "पात्रस्थसिततण्डुलपुञ्जे शचीमावाह्य षोड़शोपचारैः पूजयेत् तां च कन्यैवं प्रार्थयेत् "देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि। विवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे"। इति नारायणभट्टः प्रयोगरत्नाकरे। The queen of Indra शची is looked upon as the best and most fortunate of wives as is said in the following—"इन्द्राणीमासु नारीषु सुपत्नीमहमश्रवं न ह्यस्या अपरं च न जरसा मरते पतिः" and also "इन्द्राणीवाविधवा अदितिरिव सुपुत्रा" इति।

तावत्(१) प्रकीर्णाभिनवोपचारम्
इन्द्रायुधद्योतिततोरणाङ्कम्।
वरः स वध्वा सह राजमार्गं
प्राप ध्वजच्छायनिवारितोष्णम् ॥ ४ ॥
ततस्तदालोकनतत्पराणां
सौधेषु चामीकरजालवत्सु।
बभूवुरित्थं पुरसुन्दरीणां
त्यक्तान्यकार्य्याणि विचेष्टितानि ॥ ५ ॥

तावदिति। "यावत् तावच्च साकल्ये" इत्यमरः। तावत् प्रकीर्णाः साकल्येन प्रसारिताः अभिनवाः नूतनाः उपचाराः पुष्पप्रकारादयः यस्य तं तथोक्तम् इन्द्रायुधानि इव द्योतितानि प्रकाशितानि तोरणानि अङ्काः चिह्नानि यस्य तं ध्वजानां छाया ध्वजच्छायम्। "छायाबाहुल्ये" इति नपुंसकत्वम्। तेन निवारितः उष्णः आतपः यत्र तं राजमार्गं स वरः वोढ़ा वध्वा सह प्राप विवेश ॥ ४ ॥

तत इति। ततः तदनन्तरं चामीकरजालवत्सु सौवर्णगवाक्षयुक्तेषु सौधेषु तस्य अजस्य आलोकने तत्पराणाम् आसक्तानां पुरसुन्दरीणाम् इत्थं वक्ष्यमाणप्रकाराणि त्यक्तानि अन्य-

---

(१) "यावत्ते राजानो गताः तावदेव स वरः" इत्यादि वल्लभः। "इन्द्रायुधैरिवाभिर्भिर्भासमानं तोरणमेव चर्च्चितं यस्य" इति दिनकरः।

आलोकमार्गं(१) सहसा व्रजन्त्या
कयाचिदुद्वेष्टनवान्तमाल्यः ।
बद्धुं न सम्भावित एव तावत्
करेण रुद्धोऽपि च केशपाशः ॥ ६ ॥
प्रसाधिकालम्बितमग्रपादम्
आक्षिप्य काचित् द्रवरागमेव ।

कार्य्याणि केशबन्धनादीनि येषु तानि विचेष्टितानि व्यापाराः बभूवुः ॥ ५ ॥

तान्येवाह पञ्चभिः श्लोकैः, आलोकेति । सहसा आलोकमार्गं गवाक्षपथं व्रजन्त्या कयाचित् उद्वेष्टनवान्तमाल्यः उद्वेष्टनः द्रुतगतिवशात् उन्मुक्तबन्धनः अत एव वान्तमाल्यः बन्धविश्लेषेण उद्गीर्णमालः करेण रुद्धः गृहीतः अपि च केशपाशः केशकलापः। "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे" इत्यमरः। तावत् आलोकमार्गप्राप्तिपर्य्यन्तं बद्धुं बन्धनार्थं न सम्भावितः न चिन्तितः एव ॥ ६ ॥

प्रसाधिकेति । काचित् प्रसाधिकया अलङ्कर्त्र्या आलम्बितं रञ्जनार्थं धृतं द्रवरागम् एव आर्द्रालक्तकम् एव, अग्रश्चासौ पादश्च इति अग्रपादः इति कर्म्मधारयसमासः । "हस्ताग्राग्र-

(१) आलोक्यते यस्मात् इति आलोकः। अपादाने घञ्। यतोऽवलोकनं भवति तत्र स्थले। "केशपाशः केशकलापः बद्धुं तावन्न सम्भावित एव न मथितः परं नापि करेण रुद्धः। यस्य करेणापि न रोधस्तस्य बन्धो न संभवतीति भावः" इति दिनकरः।

उत्सृष्टलीलागतिरागवाक्षात्
अलक्तकाङ्कां पदवीं ततान ॥ ७ ॥
विलोचनं दक्षिणमञ्जनेन
सम्भाव्य तद्वञ्चितवामनेत्रा ।
तथैव वातायनसन्निकर्षं
ययौ शलाकामपरा वहन्ती ॥ ८ ॥
जालान्तरप्रेषितदृष्टिरन्या
प्रस्थानभिन्नां न बबन्ध नीवीम् ।

हस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्" इति वामनः । तम् आक्षिप्य आकृष्य उत्सृष्टलीलागतिः त्यक्तमन्दगमना सती आ गवाक्षात् गवाक्षमर्यन्तं पदवीं पन्थानम् अलक्तकाङ्कां लाक्षारागचिह्नां ततान विस्तारयामास ॥ ७ ॥

विलोचनमिति । अपरा स्त्री दक्षिणं विलोचनम् अञ्जनेन सम्भाव्य अलङ्कृत्य संभ्रमात् इति भावः । तद्वञ्चितं तेन अञ्जनेन वर्जितं वामनेत्रं यस्याः सा सती तथैव शलाकाम् अञ्जनगुलिकां वहन्ती सती वातायनसन्निकर्षं गवाक्षसमीपं ययौ । दक्षिणग्रहणं सम्भ्रमात् व्युत्क्रमकरणद्योतनार्थम्, "सव्यमक्षि हि पूर्वं मनुष्या अञ्जते" इति श्रुतेः ॥ ८ ॥

जालेति । अन्या स्त्री जालान्तरप्रेषितदृष्टिः गवाक्षमध्यप्रेरितदृष्टिः सती प्रस्थानेन गमनेन भिन्नां त्रुटितां नीवीं वसनग्रन्थिम् । "नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससः" इति

नाभिप्रविष्टाभरणप्रभेण
हस्तेन तस्थाववलम्ब्य वासः ॥ ९ ॥
अर्द्धाञ्चिता सत्वरमुत्थितायाः
पदे पदे दुर्निमिते गलन्ती ।
कस्याश्चिदासीद्रशना तदानीम्
अङ्गुष्ठमूलार्पितसूत्रशेषा ॥ १० ॥
तासां मुखैरासवगन्धगर्भैः
व्याप्तान्तराः सान्द्रकुतूहलानाम् (१) ।

विघ्नः । न बवन्ध किन्तु नाभिप्रविष्टा आभरणानां कङ्कणादीनां प्रभा यस्य तेन । प्रभैव नाभेराभरणमभूत् इति भावः । हस्तेन वासः अवलम्ब्य गृहीत्वा तस्थौ ॥ ९ ॥

अर्द्धेति । सत्वरम् उत्थितायाः कस्याश्चित् अर्द्धाञ्चिता मणिभिः अर्द्धगुम्फिता दुर्निमिते संभ्रमात् दुरुत्क्षिप्ते । "डुमिञ् प्रक्षेपणे" इति धातोः कर्म्मणि क्तः । पदेपदे प्रतिपदम् । वीप्सायां द्विर्भावः । गलन्ती गलद्रत्ना सती रशना मेखला तदानीम् अङ्गुष्ठमूले अर्पितं सूत्रम् एव शेषः यस्याः सा आसीत् ॥ १० ॥

तासामिति । तदानीं सान्द्रकुतूहलानां तासां स्त्रीणाम् आसवगन्धः गर्भे येषां तैः विलोलानि नेत्राणि एव भ्रमराः येषां तैः मुखैः व्याप्तान्तराः छन्नावकाशाः गवाक्षाः सहस्रपत्रा-

(१) "सान्द्रमधिकं कुतूहलं यासां तासाम्" इति दिनकरः ।

विलोलनेत्रभ्रमरैर्गवाक्षाः
सहस्रपत्राभरणा इवासन् ॥ ११ ॥
ता राघवं दृष्टिभिरापिबन्त्यः
नार्य्यो न जग्मुर्विषयान्तराणि।
तथाहि शेषेन्द्रियवृत्तिरासां
सर्व्वात्मना चक्षुरिव प्रविष्टा (१) ॥ १२ ॥
स्थाने वृता भूपतिभिः परोक्षैः
स्वयंवरं साधुममंस्त भोज्या।

भरणाः इव कमलालङ्कृताः इव। "सहस्रपत्रं कमलम्" इत्यमरः। आसन् ॥ ११ ॥

ता इति। ताः नार्य्यः रघोरपत्यं राघवम् अजम्। तस्यापत्यमित्यण्प्रत्ययः। दृष्टिभिः आपिबन्त्यः अतितृष्णया पश्यन्त्यः विषयान्तराणि अन्यान् विषयान् न जग्मुः न विविदुः इत्यर्थः। तथाहि, आसां नारीणां शेषेन्द्रियवृत्तिः चक्षुर्व्यतिरिक्तश्रोत्रादीन्द्रियव्यापारः सर्व्वात्मना स्वरूपकार्त्स्न्येन चक्षुः प्रविष्टा इव। श्रोत्रादीनीन्द्रियाणि स्वातन्त्र्येण ग्रहणाशक्तेः चक्षुरेव प्रविश्य कौतुकात् स्वयमप्येनम् उपलभन्ते किमु, अन्यथा स्वविषयाधिगमः किं न स्यात् इति भावः ॥ १२ ॥

- शृण्वन् कथा इति वक्ष्यति ताः कथयति, स्थाने इत्यादिभिस्त्रिभिः। भोज्या इन्दुमती परोक्षैः अदृष्टैः भूपतिभिः वृता समै-

(१) प्रविश्यतेर्गन्धर्वेणाम् कर्त्तरि क्तः।

पद्मेव नारायणमन्यथासौ
लभेत कान्तं कथमात्मतुल्यम् ॥ १३ ॥
परस्परेण स्पृहणीयशोभं
नचेदिदं द्वन्द्वमयोजयिष्यत्।
अस्मिन् द्वये रूपविधानयत्नः
पत्युः प्रजानां वितथोऽभविष्यत् ॥ १४ ॥

वैदर्भिमिति प्रार्थिता अपि स्वयंवरम् एव साधु हितम् अमंस्त मेने न तु परोक्षमेव कञ्चित् प्रार्थकं वव्रे, स्थाने युक्तमेतत्। "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः। कुतः अन्यथा स्वयंवराभावे असौ इन्दुमती पद्ममस्या अस्तीति पद्मा लक्ष्मीः। "अर्श आदिभ्योऽच्" इत्यच्प्रत्ययः। नारायणम् इव आत्मतुल्यं स्वानुरूपं कान्तं पतिं कथं लभेत न लभेत एव सदसद्विवेकासौकर्य्यात् इति भावः ॥ १३ ॥

परस्परेणेति। स्पृहणीयशोभं सर्व्वाशास्यसौन्दर्य्यम् इदं द्वन्द्वं मिथुनम्। द्वन्द्वं रहस्येत्यादिना निपातः। परस्परेण न अयोजयिष्यत् चेत् न योजयेत् यदि, तर्हि प्रजानां पत्युः विधातुः अस्मिन् द्वये द्वन्द्वे रूपविधानयत्नः सौन्दर्य्यनिर्म्माणप्रयासः वितथः अभविष्यत् एतादृशानुरूपस्त्रीपुंसान्तराभावात् इति भावः। लिङ्निमित्ते लृङ् क्रियातिपत्ताविति लृङ्। "कुतश्चित् कारणवैगुण्यात् क्रियाया अनभिनिष्पत्तिः क्रियातिपत्तिः" इति वृत्तिकारः ॥ १४ ॥

रतिस्मरौ(१) नूनमिमावभूतां
राज्ञां सहस्रेषु तथाहि बाला।
गतेयमात्मप्रतिरूपमेव
मनो हि जन्मान्तरसङ्गतिज्ञम् ॥ १५ ॥
इत्युद्गताः पौरवधूमुखेभ्यः
शृण्वन् कथाः श्रोत्रसुखाः कुमारः।

रतीति। रतिस्मरौ यौ नित्यसहचरौ इत्यभिप्रायः नूनं तौ एव इयञ्च अयञ्च इमौ दम्पती अभूताम् एतद्रूपेण उत्पन्नौ। कुतः तथाहि इयं बाला राज्ञां सहस्रेषु राजसहस्रमध्ये सत्यपि व्यत्यासकारणी इति भावः। आत्मप्रतिरूपं स्वतुल्यम् एव। "तुल्यसङ्काशनीकाशप्रकाशप्रतिरूपकाः" इति दण्डी। गता प्राप्ता। तदपि कथं जातमत आह, हि यस्मात् मनः जन्मान्तरसङ्गतिज्ञं भवति। तदेवेदमिति प्रत्यभिज्ञाभावेऽपि वासनाविशेषवशादनुभूतार्थेषु मनःप्रवृत्तिरस्तीति ॥१५॥

इतीति। इति "स्थाने हृता" इत्याद्युक्तप्रकारेण पौरवधूमुखेभ्यः उद्गताः उत्पन्नाः श्रोत्रयोः सुखाः मधुराः। सुखशब्दो विशेष्यनिघ्नः। "पापपुण्यसुखादि च" इत्यमरः। कथाः गिरः शृण्वन् कुमारः अजः मङ्गलसंविधाभिः मङ्गलरचनाभिः उद्भासितं

(1) Dinakara reads रतिस्मरौ and explains the same by "अरमीति अरः। पचाद्यच्। जातिः चरी जातिचरी। मयीचरवत्"।

उद्भासितं मङ्गलसंविधाभिः(१)
सम्बन्धिनः सद्म समाससाद ॥ १६ ॥
ततोऽवतीर्य्याशु करेणुकायाः
स कामरूपेश्वरदत्तहस्तः(२) ।
वैदर्भनिर्द्दिष्टमथो विवेश
नारीमनांसीव चतुष्कमन्तः ॥ १७ ॥
महार्हसिंहासनसंस्थितोऽसौ
सरत्नमर्घ्यं मधुपर्कमिश्रम् ।

शोभितं सम्बन्धिनः कन्यादायिनः सद्म गृहं समाससाद प्राप ॥ १६ ॥

तत इति । ततः अनन्तरं करेणुकायाः हस्तिन्याः सकाशात् आशु शीघ्रम् अवतीर्य्य कामरूपेश्वरे दत्तः हस्तः येन स अजः अथो अनन्तरं वैदर्भेण निर्द्दिष्टं प्रदर्शितम् अन्तश्चतुष्कं चत्वरं नारीणां मनांसि इव विवेश ॥ १७ ॥

महार्हेति । महार्हसिंहासने संस्थितः असौ अजः भोजेन

(1) The following stanza, quoted from the Bha'gavata Pura'na, enumerates a number of articles used on such auspicious occasions. "संसिक्तरथ्यापणमार्गचत्वरां प्रकीर्णमाल्याङ्कुरलाजतण्डुलां । आपूर्णकुम्भैर्दधिचन्दनोक्षितैः प्रसूनदीपावलिभिः सपल्लवैः । सवृन्दरम्भाक्रमुकैः सकेतुभिः स्वलङ्कृतद्वारगृहां सपट्टिकैः । तां (मथुरां) संप्रविष्टौ वसुदेवनन्दनौ" ।

(2) Kamrupa is in Assam. It is looked upon as a famous strong-hold of Ta'ntrika mysticism.

भोजोपनीतञ्च दुकूलयुग्मं
जग्राह सार्द्धं वनिताकटाक्षैः ॥ १८ ॥

दुकूलवासाः स वधूसमीपं
निन्ये विनीतैरवरोधदक्षैः ।
वेलासकाशं स्फुटफेनराजि-
र्नवैरुदन्वानिव चन्द्रपादैः (१) ॥ १९ ॥

तत्रार्च्चितो भोजपतेः पुरोधाः
हुत्वाग्निमाज्यादिभिरग्निकल्पः(२) ।
तमेव चाधाय विवाहसाक्ष्ये(३)
वधूवरौ सङ्गमयाञ्चकार ॥ २० ॥

उपनीतं रत्नैः सहितं सरत्नं मधुपर्कमिश्रम् अर्घ्यं पूजासाधनद्रव्यं दुकूलयोः क्षौमयोः युग्मञ्च वनिताकटाक्षैः अन्यस्त्रीणाम् अपाङ्गदर्शनैः सार्द्धं जग्राह गृहीतवान् ॥ १८ ॥

दुकूलेति । दुकूलवासाः सः अजः विनीतैः नम्रैः अवरोधदक्षैः अन्तःपुराधिकृतैः वधूसमीपं निन्ये । तत्र दृष्टान्तः, स्फुटफेनराजिः उदन्वान् समुद्रः नवैः नूतनैः चन्द्रपादैः चन्द्रकिरणैः वेलायाः सकाशं समीपम् इव । पूर्णदृष्टान्तोऽयम् ॥ १९ ॥

तत्रेति । तत्र सद्मनि अर्च्चितः पूजितः अग्निकल्पः अग्नि-

---

(1) The 17th, 18th, and 19th stanzas are omitted in the Bombay edition.

(२) आज्यादिभिः "आज्यसमीपसमाज्यैः" इति दिनकरः ।

(3) See कुशण्डिका ।

हस्तेन हस्तं परिगृह्य वध्वाः

स राजसूनुः सुतरां चकाशे।

अनन्तराशोकलताप्रवालं

प्राप्येव चूतः प्रतिपल्लवेन॥ २१॥

आसीद् वरः कण्टकितप्रकोष्ठः

स्विन्नाङ्गुलिः संववृते कुमारी।

सुतः भोजपतेः भोजदेशाधीश्वरस्य पुरोधाः पुरोहितः। "पुरोधास्तु पुरोहितः" इत्यमरः। आज्यादिभिः द्रव्यैः अग्निं हुत्वा तम् एव चाग्निं विवाहसाक्ष्ये आधाय साक्षिणं कृत्वा इत्यर्थः वधूवरौ सङ्गमयाञ्चकार योजयामास॥ २०॥

हस्तेनेति। स राजसूनुः हस्तेन स्वकीयेन वध्वाः हस्तं परिगृह्य, अनन्तरायाः सन्निहितायाः अशोकलतायाः प्रवालं पल्लवं प्रतिपल्लवेन स्वकीयेन प्राप्य चूतः आम्रः इव, सुतरां चकाशे॥२१॥

आसीदिति। वरः कण्टकितः पुलकितः प्रकोष्ठः यस्य स आसीत्। "सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः" इत्यमरः। कुमारी स्विन्नाङ्गुलिः संववृते बभूव। अन्योन्यं घ्नते, तस्मिन् द्वये मिथुने तत्क्षणम् भावहृत्तिः सात्त्विकोदयरूपा वृत्तिः मनोभवेन कामेन समं विभक्ता इव पृथक् कृता इव। अपरार्द्धस्य पाठान्तरे (१) व्याख्यानान्तरम्। पाणिसमागमेन पाण्योः संसर्गेण कर्त्रा तयोः वधूवरयोः मनोभवस्य वृत्तिः स्थितिः समं विभक्ता

(१) पाठान्तरं यथा—"वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य" इति।

तस्मिन् द्वये तत्क्षणमात्मवृत्तिः
समं विभक्तेव मनोभवेन ॥ २२ ॥
तयोरपाङ्गप्रतिसारितानि
क्रियासमापत्तिनिवर्त्तितानि ।
ह्रीयन्त्रणामानशिरे मनोज्ञाम्
अन्योन्यलोलानि विलोचनानि ॥ २३ ॥

इव समीकृतेव इत्यर्थः । प्राक्सिद्धस्याप्यनुरागसाम्यस्य संप्रति तत्कार्य्यदर्शनात् पाणिस्पर्शकृतत्वमुत्प्रेक्ष्यते । अथ वात्स्यायनः, "कन्या तु प्रथमसमागमे स्विन्नाङ्गुलिः स्विन्नमुखी च पुरुषस्तु रोमाञ्चितो भवति एभिरनयोर्भावं परीक्षेत" इति । स्त्रीपुरुषयोः स्वेदरोमाञ्चाभिधानं सात्त्विकमात्रोपलक्षणं न तु प्रतिनियमो विवक्षितः एभिरिति बहुवचनसामर्थ्यात् । एवं सति कुमारसम्भवे "रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत्" इति व्युत्क्रमवचनं न दोषायेति ॥ २२ ॥

तयोरिति । अपाङ्गेषु नेत्रप्रान्तेषु प्रतिसारितानि प्रवर्त्तितानि क्रिययोः निरीक्षणलक्षणयोः समापत्त्या यदृच्छासङ्गत्या निवर्त्तितानि प्रत्याकृष्टानि अन्योन्यस्मिन् लोलानि सतृष्णानि । "लोलश्चलसतृष्णयोः" इत्यमरः । तयोः दम्पत्योः विलोचनानि दृष्टयः मनोज्ञां रम्यां ह्रिया निमित्तेन यन्त्रणां सङ्कोचम् आनशिरे प्रापुः ॥ २३ ॥

प्रदक्षिणप्रक्रमणात् कृशानो-
रुदर्चिषस्तन्मिथुनं चकाशे।
मेरोरुपान्तेष्विव वर्त्तमानम्
अन्योन्यसंसक्तमहस्त्रियामम् ॥ २४ ॥

नितम्बगुर्वी गुरुणा प्रयुक्ता
वधूर्विधातृप्रतिमेन तेन।
चकार सा मत्तचकोरनेत्रा(१)
लज्जावती लाजविसर्गमग्नौ ॥ २५ ॥

प्रदक्षिणेति। तत् मिथुनम् उदर्चिषः उन्नतज्वालस्य कृशानोः वह्नेः प्रदक्षिणप्रक्रमणात् प्रदक्षिणीकरणात्, मेरोः उपान्तेषु समीपेषु वर्त्तमानम् आवर्त्तमानं मेरुं प्रदक्षिणीकुर्व्वत् इत्यर्थः अन्योन्यसंसक्तं परस्परसङ्गतं, मिथुनस्याप्येतद्विशेषणम्, अहश्च त्रियामा च अहस्त्रियामं रात्रिन्दिवम् इव। समाहारे द्वन्द्वैकवद्भावः। चकाशे दिदीपे ॥ २४ ॥

नितम्बेति। नितम्बेन गुर्वी अलघ्वी। "दुर्वारालघुनोर्गुर्वी" इति यादवः। विधातृप्रतिमेन ब्रह्मतुल्येन तेन गुरुणा याजकेन प्रयुक्ता जुहुधीति नियुक्ता मत्तचकोरस्य इव नेत्रे यस्याः सा लज्जावती सा वधूः अग्नौ लाजविसर्गं चकार ॥ २५ ॥

(१) इतस्ततश्चक्षुर्विक्षेपेण धूमेनाकुलितलोचनत्वात् तस्यास्तयोः कामोन्मत्त-चकोर-नेत्राभ्यां साम्यमवगन्तव्यम्।

हविःशमीपल्लवलाजगन्धी
पुण्यः कृशानोरुदियाय धूमः।
कपोलसंसर्पिशिखः स तस्याः
मुहूर्त्तकर्णोत्पलतां प्रपेदे ॥ २६ ॥

तदञ्जनक्लेदसमाकुलाक्षं
प्रम्लानबीजाङ्कुरकर्णपूरम्(१)।
वधूमुखं पाटलगण्डलेखम्
आचारधूमग्रहणाद् बभूव ॥ २७ ॥

हविरिति। हविषः आज्यादेः शमीपल्लवानां लाजानां च गन्धः अस्यास्तीति हविःशमीपल्लवलाजगन्धी। "शमीपल्लवमिश्रान् लाजान् अञ्जलिना वपति" इति कात्यायनः। पुण्यः धूमः कृशानोः पावकात् उदियाय उद्भूतः। कपोलयोः संसर्पिणी प्रसरणशीला शिखा यस्य सः तथोक्तः सः धूमः तस्याः वध्वाः मुहूर्त्तं कर्णोत्पलतां प्रपेदे ॥ २६ ॥

तदिति। तत् वधूमुखम् आचारेण प्राप्तात् धूमग्रहणात् अञ्जनस्य क्लेदः अञ्जनक्लेदः अञ्जनमिश्रबाष्पोदकम् इत्यर्थः तेन समाकुलाक्षं प्रम्लानः बीजाङ्कुरः यवाङ्कुरः एव कर्णपूरः अवतंसः यस्य तत् पाटलगण्डलेखम् अरुणगण्डस्थलञ्च बभूव ॥ २७ ॥

---

(१) "बीजात् निर्गता अङ्कुरा बीजाङ्कुराः। लाजहोमं कृत्वा धूममाजिघ्रेत् इति गृह्यविदः। वर्धे तु इत्याचारात् धूमग्रहणमित्याहुः" इति दिनकरः।

तौ(१) स्नातकैर्बन्धुमता च राज्ञा
पुरन्ध्रिभिश्च क्रमशः प्रयुक्तम्।
कन्याकुमारौ कनकासनस्थौ
आर्द्राक्षतारोपणमन्वभूताम्(२) ॥ २८ ॥

ताविति। कनकासनस्थौ तौ कन्याकुमारौ स्नातकैः गृहस्थविशेषैः। "स्नातकस्त्वाप्लुतव्रती" इत्यमरः। बन्धुमता बन्धुपुरःसरेण इत्यर्थः राज्ञा च पुरन्ध्रिभिः पतिपुत्रवतीभिः नारीभिश्च

(१) "त्रिविधा हि स्नातकाः। विद्यास्नातको, व्रतस्नातको, विद्याव्रतस्नातकश्चेति। उक्तं च। "गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया, वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा" इति दिनकरः। "महद्भूतं स्नातको भवतीति विज्ञायते"। आश्वलायन।३।८।८

(२) "एष हि लोकाचारः" इति वल्लभः। यदुक्तं आश्वलायनपरिशिष्टे—"तैजसेन पात्रेण क्षीरमानीय घृतमासिच्य मध्ये लाजाक्षततण्डुलान्। अथ तथास्थितयोर्वधूवरयोर्मङ्गलकर्मैतत् कारयेत्। वरः प्रक्षालितपाणिर्वध्वाः प्रक्षालितेऽञ्जलौ क्षीरघृतं पाणिना द्विरुपस्तीर्य द्विस्तण्डुलाञ्जलीनावपति यथा पूर्वेण ततो द्विरुपरिष्टादभिघारयति एवं वराञ्जलावन्यस्तण्डुलापूरणं कुर्यात्। दाता तयोरञ्जल्योः हिरण्यमवदध्यात्। अथ वरः कन्याञ्जलौ स्वाञ्जलिं धारयेत् दाता कन्यां धारयेत् "दक्षिणाः पान्तु बहुधेयधासु पुष्टं महं तां भान्ति पुष्टिपुष्टिपाषु तिथिकरणमुहूर्तनक्षत्रसम्पदम्" इत्युक्त्वा कन्याञ्जलिस्थ तदञ्जल्यक्षतान् वरमूर्ध्न्यारोपयेत् वरोऽपि तन्मूर्ध्नि स्वाञ्जल्यक्षतानारोपयेत्। एवं त्रिः। इदानीं दाता वराय गोभूमिदासीयानशयनमन्नादिकमनुदानं दद्यात्। अथ पुरोधाः कांस्ये पय आसिच्य शीतुम्बर्याङ्गया मालया सपल्लवया सहिरण्यपविमया सदूर्वापविमया अभिषिञ्चेत्। अथ वधूवरौ अन्योन्यपुष्पं क्षीरघृतेनाभ्यज्य परस्परतिलकं कुरुतः कण्ठे स्रजपाशबन्धः कौतुकसूत्रं च करे बध्नीयाताम्। अथ पुरोधास्तयोरुत्तरीयान्तयोः पञ्चपूगफलानि विन्यस्य तदुपरि ग्रन्थिं गणाधिपमनुस्मृत्य बध्नीयात्। अथ दाता समभ्यर्च्य इष्टाः गुरुभ्यो ज्ञातिबान्धवान् क्षमादायौर्भिरार्द्राक्षतारोपणं कुर्युः।" ।१।१५।

इति स्वसुर्भोजकुलप्रदीपः
सम्पाद्य पाणिग्रहणं स राजा ।
महीपतीनां पृथगर्हणार्थं
समादिदेशाधिकृतानधिश्रीः ॥ २९ ॥
लिङ्गैर्मुदः संवृतविक्रियास्ते
ह्रदाः प्रसन्ना इव गूढनक्राः ।
वैदर्भमामन्त्र्य ययुस्तदीयां
प्रत्यर्प्य पूजामुपदाच्छलेन ॥ ३० ॥

क्रमशः प्रयुक्तं घातकादीनां पूर्व्वपूर्व्ववैशिष्ठ्यात् क्रमेण कृतम् आर्द्राक्षतानाम् आरोपणम् अन्वभूताम् अनुभूतवन्तौ ॥ २८ ॥

इतीति । अधिश्रीः अधिकसम्पत्: भोजकुलप्रदीपः स राजा इति स्वसुः इन्दुमत्याः पाणिग्रहणं विवाहं सम्पाद्य कारयित्वा महीपतीनां राज्ञां पृथक् एकैकशः अर्हणार्थं पूजार्थम् अधिकृतान् अधिकारिणः समादिदेश आज्ञापयामास ॥ २९ ॥

लिङ्गैरिति । मुदः सन्तोषस्य लिङ्गैः चिह्नैः कपटहासादिभिः संवृतविक्रियाः निगूहितमत्सराः अत एव प्रसन्नाः वहिर्निर्मलाः गूढनक्राः अन्तर्लीननक्राः ह्रदा इव स्थिताः ते नृपाः वैदर्भं भोजम् आमन्त्र्य आपृच्छ्य तदीयां वैदर्भीयां पूजाम् उपदाच्छलेन उपायनमिषेण प्रत्यर्प्य ययुः गतवन्तः ॥ ३० ॥

स राजलोकः कृतपूर्वसंवित्
आरम्भसिद्धौ समयोपलभ्यम् (१)।
आदास्यमानः प्रमदामिषं तत्
आवृत्य पन्थानमजस्य तस्थौ ॥ २१ ॥
भर्त्तापि तावत् क्रथकैशिकानाम्
अनुष्ठितानन्तरजाविवाहः।

स इति। आरम्भसिद्धौ कार्य्यसिद्धौ विषये पूर्व्वं कृता कृतपूर्व्वा। सुप्सुपेति समासः। कृतपूर्व्वा संवित् सङ्केतः मार्गावरोधरूपः उपायः येन सः तथोक्तः। "संविद् युद्धे प्रतिज्ञायां सङ्केताचारनामसु" इति केशवः। सः राजलोकः समयोपलभ्यम् अजप्रस्थानकाले लभ्यं तदा तस्यैकाकित्वात् इति भावः। समरोपलभ्यमिति पाठे युद्धसाध्यम् इत्यर्थः। तत् प्रमदा एव आमिषं भोग्यवस्तु। "आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि" इति केशवः। आदास्यमानः ग्रहीष्यमाणः सन् अजस्य पन्थानम् आवृत्य अवरुध्य तस्थौ ॥ २१ ॥

भर्त्तेति। अनुष्ठितः सम्पादितः अनन्तरजायाः अनुजायाः विवाहः येन सः तथोक्तः क्रथकैशिकानां देशानां भर्त्ता स्वामी भोजः अपि तावत् तदा सत्वानुरूपम् उत्साहानुरूपं यथा तथा आ समन्तात्। अनेनानियतवसुदानम् इत्यर्थः। हरणां

(१) "समरेण मरणेन उपलभ्यं प्रमदैवामिषं रत्नादिकार्यं वस्तु भोग्यमस्तु वा" इति दिनकरः।

सत्त्वानुरूपाहरणीकृतश्रीः(१)
प्रास्थापयद्राघवमन्वगाच्च ॥ ३२ ॥
तिस्रस्त्रिलोकीप्रथितेन सार्द्धम्
अजेन मार्गे वसतीरुषित्वा ।
तस्मात् अपावर्त्तत कुण्डिनेशः
पर्व्वात्यये(२) सोम इवोष्णरश्मेः ॥ ३३ ॥
प्रमन्यवः प्रागपि कोशलेन्द्रे
प्रत्येकमात्तस्वतया बभूवुः ।

कन्यायै देयं धनम् । "यौतुकादि तु यद्देयं स दायो हरणञ्च तत्" इत्यमरः । अहरणं हरणीकृता श्रीः येन तथोक्तः सन् राघवम् अजं प्रास्थापयत् प्रस्थापितवान् स्वयम् अन्वगात् अनुजगाम च ॥ ३२ ॥

तिस्र इति । कुण्डिनं विदर्भनगरं तस्य ईशः भोजः त्रिषु लोकेषु प्रथितेन अजेन सार्द्धं मार्गे पथि तिस्रः वसतीः रात्रीः उषित्वा । "वसती रात्रिवेश्मनोः" इत्यमरः । "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया । पर्व्वात्यये दर्शान्ते उष्णरश्मेः सूर्य्यात् सोमः चन्द्रः इव, तस्मात् अजात् अपावर्त्तत तं विसृज्य निवृत्तः इत्यर्थः ॥ ३३ ॥

प्रमन्यव इति । नृपाः राजानः प्राक् अपि प्रत्येकम् आत्त-

(1) Vallabha reads सत्त्वानुरूपाभरणीकृतश्रीः and explains by "आभरणीकृता यथाशक्ति दत्ता श्रीर्येन सः" ।

(1) अमावस्यायां हि सूर्याचन्द्रमसौ एकनक्षत्रस्थायेन परस्परेण संगच्छेतामिति भावः ।

अतो नृपाश्चक्षमिरे समेताः
स्त्रीरत्नलाभं न तदात्मजस्य ॥ ३४ ॥
तमुद्वहन्तं पथि भोजकन्यां
रुरोध राजन्यगणः स दृप्तः ।
बलिप्रदिष्टां श्रियमाददानं
त्रैविक्रमं पादमिवेन्द्रशत्रुः (१) ॥ ३५ ॥
तस्याः स रक्षार्थमनल्पयोधम्
आदिश्य पित्र्यं सचिवं कुमारः ।

स्वतया दिग्विजये गृहीतधनत्वेन कोशलेन्द्रे रघौ प्रमन्यवः रूढवैराः बभूवुः, अतः हेतोः समेताः सङ्गताः सन्तः तदात्मजस्य रघुसूनोः स्त्रीरत्नलाभं न चक्षमिरे न सेहिरे ॥ ३४ ॥

तमिति । दृप्तः उद्धतः सः राजन्यगणः राजसङ्घातः भोजकन्याम् उद्वहन्तं नयन्तं तम् अजं बलिना वैरोचनिना प्रदिष्टां दत्तां श्रियम् आददानं स्वीकुर्वाणं त्रिविक्रमस्य इमं त्रैविक्रमं पादम् इन्द्रशत्रुः प्रह्लादः इव पथि रुरोध । तथा च ब्रह्माण्डपुराणे, "वैरोचनविरोधेऽपि प्रह्लादः पावनं स्मरन् । विष्णोस्तु, क्रममाणस्य पादाम्भोजं रुरोध ह ।" इति ॥ ३५ ॥

तस्या इति । सः कुमारः अजः तस्याः इन्दुमत्याः रक्षार्थम् अनल्पयोधं बहुभटं पितुरागतं पित्र्याम् आप्तम् [illegible]

(१) As इन्द्र is not known as [illegible], Vallabha explains [illegible] शत्रुषिः ।

प्रत्यग्रहीत् पार्थिववाहिनीं तां
भागीरथीं(१) शोण इवोत्तरङ्गः ॥ ३६ ॥

पत्तिः पदातिं रथिनं रथेशः
तुरङ्गसादी तुरगाधिरूढम् ।
यन्ता गजस्याभ्यपतद्गजस्थं
तुल्यप्रतिद्वन्द्वि बभूव युद्धम् ॥ ३७ ॥

सचिवम् आदिश्य आज्ञाप्य तां पार्थिववाहिनीं राजसेनाम् । "ध्वजिनी वाहिनी सेना" इत्यमरः । भागीरथीम् उत्तरङ्गः शोणः शोणाख्यः नदः इव, प्रत्यग्रहीत् अभियुक्तवान् ॥ ३६ ॥

पत्तिरिति । पत्तिः पादचारः योद्धा पदातिं पादचारम् अभ्यपतत् । पादाभ्याम् अततीति पदातिः । पादस्य पदित्यादिना पदादेशः । "पदातिपत्तिपदगपादातिकपदाजयः" इत्यमरः । रथेशः रथिकः रथिनं रथारोहम् अभ्यपतत्, तुरङ्गसादी अश्वारोहः तुरगाधिरूढम् अश्वारोहम् अभ्यपतत् । "रथिनः स्यन्दनारोहाः अश्वारोहास्तु सादिनः" इत्यमरः । गजस्य यन्ता हस्त्यारोहः गजस्थं पुरुषम् अभ्यपतत्, इत्थम् अनेन प्रकारेण तुल्यप्रतिद्वन्द्वि एकजातीयप्रतिभटं युद्धं बभूव । अन्योन्यं द्वन्द्वं कलहोऽस्त्येषामिति प्रतिद्वन्द्विनः योधाः । "द्वन्द्वं कलहयुग्मयोः" इत्यमरः ॥ ३७ ॥

---

(१) Both Dinakara and Vallabha read ज्योतीरथां in place of Bhagirathi. The Jyotiratha is noticed both in the Vishnupurana and Mahabharata and rises probably in the Vindhya mountains.

नदत्सु तूर्य्येष्वविभाव्यवाचः
नोदीरयन्ति स्म कुलोपदेशान्।
बाणाक्षरैरेव परस्परस्य
नामोर्ज्जितं चापभृतः शशंसुः ॥ ३८ ॥

उत्थापितः संयति रेणुरश्वैः
सान्द्रीकृतः स्यन्दनवंशचक्रैः।
विस्तारितः कुञ्जरकर्णतालै-
र्नेत्रक्रमेणोपरुरोध सूर्य्यम् ॥ ३९ ॥

नदत्स्विति। तूर्य्येषु नदत्सु सत्सु अविभाव्यवाचः अनवधार्य्यगिरः चापभृतः धानुष्काः कुलमुपदिश्यते प्रख्याप्यते यैः ते कुलोपदेशाः तान् कुलनामानि न उदीरयन्ति स्म न उच्चारयामासुः श्रोतुमशक्यत्वाद्वाचो नाब्रुवन् इत्यर्थः। किन्तु बाणाक्षरैः बाणेषु लिखिताक्षरैः एव परस्परस्य अन्योन्यस्य ऊर्ज्जितं प्रख्यातं नाम शशंसुः ऊचुः ॥ ३८ ॥

उत्थापित इति। संयति संग्रामे अश्वैः उत्थापितः, स्यन्दनवंशानां रथसमूहानां चक्रैः रथाङ्गैः सान्द्रीकृतः घनीकृतः। "वंशः पृष्ठास्थि गेहोर्द्ध्वकाष्ठे वेणौ गणे कुले" इति केशवः। कुञ्जरकर्णानां तालैः ताड़नैः विस्तारितः प्रसारितः रेणुः नेत्रक्रमेण अंशुकपरिपाट्या अंशुकमिव इत्यर्थः। "स्याज्जटांशुकयोर्नेत्रम्" इति, "क्रमोऽङ्घ्रौ परिपाट्यां च" इति च केशवः। सूर्य्यम् उपरुरोध आच्छादयामास ॥ ३९ ॥

मत्स्यध्वजा वायुवशाद्विदीर्णैः
मुखैः प्रवृद्धध्वजिनीरजांसि ।
बभुः पिबन्तः परमार्थमत्स्याः
पर्य्याविलानीव नवोदकानि ॥ ४० ॥
रथो रथाङ्गध्वनिना विजज्ञे
विलोलघण्टाक्वणितेन नागः
स्वभर्तृनामग्रहणाद् बभूव
सान्द्रे रजस्यात्मपरावबोधः ॥ ४१ ॥
आवृण्वतो लोचनमार्गमाजौ
रजोऽन्धकारस्य विजृम्भितस्य ।

मत्स्येति। वायुवशात् विदीर्णैः विवृतैः मुखैः प्रवृद्धानि ध्वजिनी-रजांसि सैन्यरेणून् पिबन्तः गृह्णन्तः मत्स्यध्वजाः मत्स्याकाराः ध्वजाः, पर्य्याविलानि परितः कलुषाणि नवोदकानि पिबन्तः परमार्थमत्स्याः इव बभुः भान्ति स्म ॥ ४० ॥

रथ इति। सान्द्रे प्रवृद्धे रजसि रथः रथाङ्गध्वनिना चक्रस्वनेन विजज्ञे ज्ञातः, नागः हस्ती विलोलानां घण्टानां क्वणितेन नादेन विजज्ञे। आत्मपरावबोधः स्वपरविवेकः योधानाम् इति शेषः स्वभर्तृणां स्वस्वामिनां नामग्रहणात् नामोच्चारणात् बभूव रजोऽन्धतया सर्वे स्वं परञ्च शब्दादेवानुमाय प्रजज्ञुः इत्यर्थः ॥ ४१ ॥

आवृण्वत इति। लोचनमार्गम् आवृण्वतः दृष्टिपथम् उप-

शस्त्रक्षताश्वद्विपवीरजन्मा
बालारुणोभूद्रुधिरप्रवाहः ॥ ४२ ॥

स च्छिन्नमूलः क्षतजेन रेणु-
स्तस्योपरिष्टात् पवनावधूतः।
अङ्गारशेषस्य हुताशनस्य
पूर्वोत्थितो धूम इवावभासे ॥ ४३ ॥

प्रहारमूर्च्छापगमे रथस्था
यन्तॄनुपालभ्य निवर्त्तिताश्वान्(१)।
यैः सादिता लक्षितपूर्व्वकेतून्
तानेव सामर्षतया निजघ्नुः ॥ ४४ ॥

रुन्धतः आजौ युद्धे विजृम्भितस्य व्याप्तस्य रजः एव अन्धकारं तस्य, शस्त्रक्षतेभ्यः अश्वद्विपवीरेभ्यः जन्म यस्य स तथोक्तः रुधिरप्रवाहः बालारुणः बालार्कः अभूत्। "अरुणः भास्करेऽपि स्यात्" इत्यमरः। बालविशेषणं रुधिरसावर्ण्यार्थम् ॥ ४२ ॥

स इति। क्षतजेन रुधिरेण छिन्नमूलः त्याजितभूतलसम्बन्धः इत्यर्थः तस्य क्षतजस्य उपरिष्टात् पवनावधूतः वाताहतः स रेणुः अङ्गारशेषस्य हुताशनस्य अग्नेः पूर्व्वोत्थितः धूमः, इव, आवभासे दिदीपे ॥ ४३ ॥

प्रहारेति। रथस्थाः रथिनः, प्रहारेण या मूर्च्छा तस्याः अपगमे सति। मूर्च्छितानामन्यत्र नीत्वा संरक्षणं सारथिधर्मः,

(१) "निवर्त्तिताश्वान्" इत्यत्र "निवर्त्तिताश्वाः" इति पाठोऽपि दृश्यते।

40.

अप्यर्द्धमार्गे परबाणलूनाः
धनुर्भृतां हस्तवतां पृषत्काः।
संप्रापुरेवात्मजवानुवृत्त्या
पूर्वार्द्धभागैः फलिभिः शरव्यम्॥ ४५॥
आधोरणानां गजसन्निपाते
शिरांसि चक्रैर्निशितैः क्षुराग्रैः।
हृतान्यपि श्येननखाग्रकोटि-
व्यासक्तकेशानि चिरेण पेतुः॥ ४६॥

इति कृत्वा निवर्त्तिताश्वान् यन्तॄन् सारथीन् उपालभ्य असाधु कृतम् इत्यधिक्षिप्य पूर्वं यैः स्वयं सादिताः हताः, लक्षितपूर्वकेतून् पूर्वदृष्टैः केतुभिः प्रत्यभिज्ञातान् इत्यर्थः, तान् एव सामर्षतया सकोपत्वेन हेतुना निजघ्नुः प्रजह्नुः॥ ४४॥

अपीति। अर्द्धश्चासौ मार्गश्च तस्मिन् अर्द्धमार्गे परेषां बाणैः लूनाः छिन्नाः अपि हस्तवतां कृतहस्तानां धनुर्भृतां पृषत्काः शराः आत्मजवानुवृत्त्या स्ववेगानुबन्धेन हेतुना फलिभिः लोहाग्रवद्भिः। "शस्त्रबाणाग्रयोः फलम्" इति विश्वः। पूर्व्वार्द्धभागैः शृणातीति शरुः तस्मै हितं शरव्यं लक्ष्यम्। "उगवादिभ्यो यत्" इति यत्प्रत्ययः। "लक्षं लक्ष्यं शरव्यञ्च" इत्यमरः। संप्रापुः एव न तु मध्ये पतिताः इत्यर्थः॥ ४५॥

आधोरणानामिति। गजसन्निपाते गजयुद्धे निशितैः अत एव क्षुराग्रैः क्षुरस्य अग्रमिव अग्रं येषां तैः चक्रैः आयुधविशेषैः

पूर्वं प्रहर्त्ता न जघान भूयः
प्रतिप्रहाराक्षमम् अश्वसादी ।
तुरङ्गमस्कन्धनिषण्णदेहं
प्रत्याश्वसन्तं रिपुमाचकाङ्क्ष ॥ ४७ ॥
तनुत्यजां वर्म्मभृतां विकोशैः
बृहत्सु दन्तेष्वसिभिः पतद्भिः ।
उद्यन्तमग्निं शमयाम्बभूवुः
गजा विविग्नाः करसीकरेण ॥ ४८ ॥

क्षतानि छिन्नानि अपि श्येनानां पक्षिविशेषाणाम् । "पक्षी श्येनः" इत्यमरः । नखाग्रकोटिषु व्यासक्ताः केशाः येषां तानि आधोरणानां हस्त्यारोहाणाम् । "आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः । शिरांसि चिरेण पेतुः पतितानि । शिरःपातात् प्रागेवारुह्य पश्चादुत्पततां पक्षिणां नखेषु केशसङ्गश्चिरपातहेतुः इति भावः ॥ ४६ ॥

पूर्वमिति । पूर्व्वं प्रथमं प्रहर्त्ता अश्वसादी तौरङ्गिकः प्रतिप्रहारे अक्षमम् अशक्तं तुरङ्गमस्कन्धे निषण्णदेहं मूर्च्छितम् इत्यर्थः रिपुं भूयः न जघान पुनः न प्रजहार किन्तु प्रत्याश्वसन्तं पुनः उज्जीवन्तम् आचकाङ्क्ष । "नायुधव्यसनं प्राप्तं नार्त्तं नातिपरिक्षतम्" इति निषेधात् इति भावः ॥ ४७ ॥

तनुत्यजामिति । तनुत्यजां तनुषु निस्पृहाणाम् इत्यर्थः वर्म्मभृतां कवचिनां सम्बन्धिभिः बृहत्सु दन्तेषु पतद्भिः अत एव,

शिलीमुखोत्कृत्तशिरःफलाढ्या (१)
च्युतैः शिरस्त्रैश्चषकोत्तरेव(२) ।
रणक्षितिः शोणितमद्यकुल्या
रराज मृत्योरिव पानभूमिः ॥ ४९ ॥

विकोशैः पिधानात् उद्धृतैः । "कोषोऽस्त्री कुड्मले खड्गपिधाने" इत्यमरः । असिभिः खड्गैः उद्यन्तम् उत्थितम् अग्निं विविग्नाः भीताः गजाः करसीकरेण शुण्डादण्डजलकणेन प्रशमयाम्बभूवुः शान्तं चक्रुः ॥ ४८ ॥

शिलीमुखेति । शिलीमुखैः वाणैः उत्कृत्तानि शिरांसि एव फलानि तैः आढ्या सम्पन्ना च्युतैः भ्रष्टैः शिरांसि त्रायन्ते इति शिरस्त्राणि शीर्षण्यानि । "शीर्षण्यञ्च शिरस्त्रे" इत्यमरः । तैः चषकोत्तरा चषकः पानपात्रम् उत्तरं(१)यस्यां सा इव । चषकोऽस्त्री पानपात्रम्" इत्यमरः । शोणितानि एव मद्यं तस्य कुल्याः प्रवाहाः यस्यां सा । "कुल्याल्पा कृत्रिमा सरित्" इत्यमरः । रणक्षितिः युद्धभूमिः, मृत्योः पानभूमिः इव, रराज ॥ ४९ ॥

---

(1) Literally *silimukha* means an arrow with a point of stone : perhaps in pre-historic times before the use of iron was known, an arrow thus made was in vogue. Though such weapons were subsequently superseded by arrows having iron points ( which were called *ayomukha* ) the original appellation ( *silimukha* ) was retained and came to mean arrows in general.

(१) उत्तरं प्रधानं यत्र ।

उपान्तयोर्निष्कुषितं (१) विहङ्गै-
राक्षिप्य तेभ्यः पिशितप्रियापि(२)।
केयूरकोटिक्षततालुदेशा
शिवा भुजच्छेदमपाचकार ॥ ५० ॥
कश्चित् द्विषत्खड्गहृतोत्तमाङ्गः
सद्यो विमानप्रभुतामुपेत्य (३)।

उपान्तयोरिति। उपान्तयोः प्रान्तयोः विहङ्गैः पक्षिभिः निष्कुषितं खण्डितम्। इणनिष्ठायामितीडागमः। भुजच्छेदं भुजखण्डं तेभ्यः विहङ्गेभ्यः आक्षिप्य आच्छिद्य पिशितप्रिया मांसप्रिया अपि शिवा क्रोष्ट्री। "शिवः कीलः शिवा क्रोष्ट्री" इति विश्वः। केयूरकोट्या अङ्गदाग्रेण क्षतः तालुदेशः यस्याः सा सती अपाचकार अपसारयामास। किरतेः करोतेर्वा लिट् ॥ ५० ॥

कश्चिदिति। द्विषतः खड्गेन हृतोत्तमाङ्गः छिन्नशिराः कश्चित् वीरः सद्यः विमानप्रभुतां विमानाधिपत्यं देवत्वम् इत्यर्थः उपेत्य प्राप्य वामाङ्गसंसक्ता सव्योत्सङ्गसङ्गिनी सुराङ्गना यस्य स

(१) "पार्श्वयोः पक्षिभिर्निष्कुषितम्" इति दिनकरः।

(२) "पिशितप्रिया" इत्यत्र आहिताग्न्यादिष्विति परनिपातः।

(३) "आहवेषु मिथोऽन्योन्यं जिघांसन्तो महीक्षितः। युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः" । मनु। ७। ८९।

वामाङ्गसंसक्तसुराङ्गनः स्वं
नृत्यत् कबन्धं समरे ददर्श(१) ॥ ५१ ॥
अन्योन्यसूतोन्मथनादभूतां
तावेव सूतौ रथिनौ च कौचित् ।
व्यश्वौ गदाव्यायतसंप्रहारौ
भग्नायुधौ बाहुविमर्दनिष्ठौ(२) ॥ ५२ ॥
परस्परेण क्षतयोः प्रहर्त्रोः
उत्क्रान्तवाय्वोः समकालमेव ।

तथोक्तः सन् समरे नृत्यत् स्वं निजं कबन्धं विशिरस्कं कलेवरं ददर्श। "कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरः ॥५१॥

अन्योन्येति । कौचित् वीरौ अन्योन्यस्य सूतयोः सारथ्योः उन्मथनात् निधनात् तौ एव सूतौ रथिनौ च योद्धारौ अभूतां, तौ एव व्यश्वौ नष्टाश्वौ सन्तौ गदाभ्यां व्यायतः दीर्घः संप्रहारः युद्धं ययोः तौ अभूतां, ततः भग्नायुधौ भग्नगदौ सन्तौ बाहुविमर्दे निष्ठा नाशः ययोः तौ अभूताम् । "निष्ठा निष्पत्तिनाशान्ताः" इत्यमरः ॥ ५२ ॥

परस्परेणेति । परस्परेण अन्योन्यं क्षतयोः क्षततन्वोः सम-

(१) "यस्मिन् युद्धे भटानां सहस्रं हन्यते तत्रैको कबन्धो नृत्यतीति आगमः । एतेनाय महान् युद्धं जातमिति घोत्यते । पुरुषस्य वामभागे स्त्रीणां स्थितिरिति इत्याचारः" इति दिनकरः ।

(२) "बाहाबाहवियुद्धवेदिप्तसुक्रम्" इति वल्लभः । बाहुयुद्धेन युगपत् द्वयोर्निधनस्य असम्भावितत्वात्, बाहुविमर्दे निष्ठा आस्था ययोः, तौ बाहुयुद्धनिरतौ इति व्याख्यानमेव युक्ततरं प्रतिभाति ।

अमर्त्यभावेऽपि कयोश्चिदासीत्
एकाप्सरःप्रार्थितयोर्विवादः (१) ॥ ५३ ॥
व्यूढावुभौ तावितरेतरस्मात्
भङ्गं जयञ्चापतुरव्यवस्थम्।

कालम् एककालं यथा तथा उत्क्रान्तवायूः युगपदुद्गतप्राणयोः एका एव अप्सराः प्रार्थिता याभ्यां तयोः एकाप्सरःप्रार्थितयोः प्रार्थितैकाप्सरसोः इत्यर्थः। वाहिताग्न्यादिष्विति परनिपातः। अथवा, एकस्याम् अप्सरसि प्रार्थितं प्रार्थना ययोः इति विग्रहः। स्त्रियां बह्वप्स्वप्सरस इति बहुत्वाभिधानं प्रायिकम्। कयोश्चित् महर्त्तोः योधयोः अमर्त्यभावे अपि देवत्वे अपि विवादः कलहः आसीत्। एकामिषाभिलाषो हि महद्वैरबीजम् इति भावः॥५३॥

व्यूढाविति। तौ उभौ व्यूढौ सेनासङ्घातौ। "व्यूहस्तु बल-

(१) “यस्तु रणे म्रियते समरोर्मिन दिव्यवपुरुपगतं तमप्सरसोऽनुगच्छन्ति: समायान्ती-भावमः। इह तु युगपत् पराभूतासुपगतयोरेकस्यामिवाप्सरसि दिव्याङ्गनायां कामुकयोः सतोरपि युद्धमासीदिति भावः” इति दिनकरः। In vedic literature the Apsarasas are represented as personifications of physical phenomena, and wives of the Gandharvas, who are also described as the fire of the sun, fire of lightning, rays of the moon and other attributes of the elementary life of heaven. The Apsarasas are likewise personified as the vapours attracted by the sun, sunbeams, planets and constellations. The Ramayana makes them arise from the ocean when it was churned. Manu represents them as one of the creations of the seven Manus, themselves created by the seven Risis, Marichi, Atri &. And in later mythology, they are considered daughters of Kasyapa. See Goldstucker's Sanskrit Dictionary.

पश्चात्पुरोमारुतयोः प्रवृद्धौ
पर्य्यायवृत्त्येव महार्णवोर्म्मी ॥ ५४ ॥
परेण भग्नेऽपि बले महौजाः
ययावजः प्रत्यरिसैन्यमेव।
धूमो निवर्त्त्येत समीरणेन
यतस्तु कक्षस्तत एव वह्निः ॥ ५५ ॥
रथी निषङ्गी कवची धनुष्मान्
दृप्तः(१) स राजन्यकमेकवीरः।

विन्यासः" इत्यमरः। पश्चात् पुरश्च यौ मारुतौ तयोः पर्य्यायवृत्त्या क्रमवृत्त्या प्रवृद्धौ महार्णवोर्म्मी इव इतरेतरस्मात् अन्योन्यस्मात् अव्यवस्थं व्यवस्थारहितम् अनियतं जयं भङ्गं पराजयं च आपतुः प्राप्तवन्तौ ॥ ५४ ॥

परेणेति। बले स्वसैन्ये परेण परबलेन भग्ने अपि महौजाः महाबलः अजः अरिसैन्यं प्रति एव ययौ। तथाहि, समीरणेन वायुना धूमः निवर्त्त्येत कक्षात् अपसार्य्येत। वर्त्तेर्ण्यन्तात् कर्म्मणि सम्भावनायां लिङ्। वह्निस्तु यतः यत्र कक्षः तृणम्। "कक्षौ तु तृणवीरुधौ" इत्यमरः। ततः एव तत्रैव प्रवर्त्तते इति शेषः। सार्व्वविभक्तिकस्तसिः ॥ ५५ ॥

रथीति। रथी रथारूढः निषङ्गी तूणीरवान्। "तूणी-

(1) Both Dinakara and Vallabha read दृप्त', for दृप्तः, and "दिवीक्षमाणाः" for 'निवारयामास'।

निवारयामास महावराहः

कल्पक्षयोद्वृत्तमिवार्णवाम्भः(१) ॥ ५६ ॥

स दक्षिणं तूणमुखेन(२) वामं

व्यापारयन् हस्तमलक्ष्यताजौ।

पासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः" इत्यमरः। कवची वर्मधरः धनुष्मान् धनुर्धरः हस्तः रणहस्तः एकवीरः असहायशूरः स अजः राजन्यकं राजसमूहम्। गोत्रोक्षेत्यादिना वुञ्प्रत्ययः। महावराहः वराहावतारो विष्णुः कल्पक्षये कल्पान्तकाले उद्वृत्तम् उद्वेलम् अर्णवाम्भः इव निवारयामास ॥ ५६ ॥

स इति। स अजः आजौ संग्रामे दक्षिणं हस्तं तूणमुखेन

---

(1) A Kalpa is equivalent to one day of Brahma and comprises the reigns of fourteen Manus or a thousand cycles, a cycle constituting a revolution of the four ages सत्य, त्रेता द्वापर and कलि। The age satya is equal to 4800, Treta to 3600, Drapara to 2400 and Kali tr 1200 years of the Gods (a year of men being equivalent to a day of the Gods). This is a minor Kalpa, a great kalpa being the measure of one hundred such years and forming the duration of the life of Brahma. Both kalpas and mahakalpas are periodical. At the end of the latter not only all the gods and all other forms are annihilated, but the elements are again merged into primary substance, besides which one only spiritual being exists. A minor kalpa affects only the forms of inferior creatures, and lower worlds, leaving the substance of the universe entire, and sages and gods unharmed. See V P. Book I chap III.

(2) Dinakara explains by "दक्षिणं हस्तं तूणीरस्य मुखे व्यापारयन् आक-र्षात न वामं हस्तं प्रसारयन् सन्:" Vallabha concurs with him.

आकर्णकृष्टा सकृदस्य योद्धुः
मौर्वीव बाणान् सुषुवे रिपुघ्नान् ॥ ५७ ॥
स रोषदष्टाधिकलोहितोष्ठैः
व्यक्तोर्द्ध्वरेखा(१) भ्रुकुटीर्वहद्भिः ।
तस्तार गां भल्लनिकृत्तकण्ठैः
हुङ्कारगर्भैर्द्विषतां शिरोभिः ॥ ५८ ॥
सर्वैर्बलाङ्गैर्द्विरदप्रधानैः
सर्वायुधैः कङ्कटभेदिभिश्च ।

निषङ्गविवरेण वामम् अतिसुन्दरम् । "वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे" इति विश्वः । व्यापारयन् अलक्ष्यत शर-सन्धानादयस्तु दुर्लक्ष्याः इत्यर्थः । सकृत् आकर्णकृष्टा योद्धुः अस्य अजस्य मौर्व्वी ज्या रिपून् हन्तीति रिपुघ्नाः तान् । "अमनुष्य-कर्त्तृके च" इति टक्प्रत्ययः। बाणान् सुषुवे इव, इत्युत्प्रेक्षा ॥५७॥

स इति। स अजः रोषेण दष्टाः अत एव अधिकलोहिताः ओष्ठाः येषां तानि तैः व्यक्ता ऊर्द्ध्वा रेखा यासां ताः भ्रुकुटीः भ्रूभङ्गान् वहद्भिः भल्लनिकृत्ताः बाणविशेषच्छिन्नाः कण्ठाः येषां तैः हुङ्कारगर्भैः सहुङ्कारैः हुङ्कुर्वद्भिः इत्यर्थः । द्विषतां शिरोभिः गां भूमिं तस्तार छादयामास ॥ ५८ ॥

सर्वैरिति । द्विरदप्रधानैः गजमुख्यैः सर्वैः बलाङ्गैः सेनाङ्गैः। "हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्" इत्यमरः।

(१) "व्यक्तोर्द्ध्वरेखा इत्यनेन छिन्नभिन्नरेखी रेखावर्ण जायते इत्युक्त" इति दिनकरः।

सर्वप्रयत्नेन च भूमिपालाः ।
तस्मिन् प्रजह्रुर्युधि सर्व एव ॥ ५९ ॥
सोऽस्त्रव्रजैश्छन्नरथः परेषां
ध्वजाग्रमात्रेण बभूव लक्ष्यः ।
नीहारमग्नो दिनपूर्वभागः
किञ्चित्प्रकाशेन विवस्वतेव ॥ ६० ॥
प्रियंवदात् प्राप्तमसौ कुमारः
प्रायुङ्क्त राजस्वधिराजसूनुः ।

कङ्कटभेदिभिः कवचभेदिभिः । "उरश्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियाम्" इत्यमरः । सर्व्वायुधैश्च । वाह्यबलमुक्त्वा आन्तरमाह, सर्वप्रयत्नेन च सर्व्वे एव भूमिपालाः युधि तस्मिन् अजे प्रजह्रुः तं प्रजह्रुः इत्यर्थः । सर्वत्र सर्वकारकशक्तिसम्भवात् कर्म्मणोऽप्यधिकरणविवक्षायां सप्तमी । तदुक्तम्, "अनेकशक्तियुक्तस्य विश्वस्यानेककर्म्मणः । सर्वदा सर्वथाभावात् क्वचित् किञ्चित् विवक्ष्यते" । इति ॥ ५९ ॥

स इति । परेषां द्विषाम् अस्त्रव्रजैः छन्नरथः स अजः, नीहारैः हिमैः मग्नः दिनपूर्वभागः प्रातःकालः किञ्चित्प्रकाशेन ईषल्लक्ष्येण विवस्वता इव, ध्वजाग्रमात्रेण लक्ष्यः बभूव ध्वजाग्रादन्यत्र किञ्चिन्नलक्ष्यते स्म इत्यर्थः ॥ ६० ॥

प्रियंवदादिति । अधिराजसूनुः महाराजपुत्रः कुसुमास्त्रकान्तः मदनसुन्दरः स्वप्ननिवृत्तलौल्यः स्वप्नविलग्नः जागरूकः

गान्धर्वमस्त्रं कुसुमास्त्रकान्तः
प्रस्वापनं स्वप्ननिवृत्तलौल्यः ॥ ६१ ॥

ततो धनुष्कर्षणमूढहस्तम्
एकांसपर्यस्तशिरस्त्रजालम्।
तस्थौ ध्वजस्तम्भनिषण्णदेहं
निद्राविधेयं नरदेवसैन्यम् ॥ ६२ ॥

ततः प्रियोपात्तरसेऽधरौष्ठे(१)
निवेश्य दध्मौ जलजं कुमारः।

इत्यर्थः असौ कुमारः अजः प्रियंवदात् पूर्व्वोक्तात् गन्धर्व्वात् प्राप्तं गान्धर्वं गन्धर्वदेवताकम्। सास्य देवतेत्यण्। प्रस्वापयतीति प्रस्वापनं निद्राजनकम् अस्त्रं राजसु प्रायुङ्क्त प्रयुक्तवान् ॥६१॥

तत इति। ततः धनुष्कर्षणे मूढहस्तम् अव्यापृतहस्तम् एकस्मिन् अंसे पर्य्यस्तं स्रस्तं शिरस्त्राणां शीर्षण्यानां जालं समूहः यस्य तत् ध्वजस्तम्भेषु निषण्णाः अवष्टब्धाः देहाः यस्य तत् नरदेवानां राज्ञां सेना एव सैन्यम्। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् प्रत्ययः। निद्राविधेयं निद्रापरतन्त्रं तस्थौ ॥ ६२ ॥

तत इति। ततः कुमारः अजः प्रियायाः इन्दुमत्याः उपा-

(१) "अथास्त्रवणाशिनौ ब्रह्मचारिणौ अलङ्कुर्वाणावधःशायिनौ स्याताम्। अत ऊर्द्ध्वं त्रिरात्रं द्वादशरात्रम्"। आश्वलायन। १। ८। १०-११। "अतो गृहप्रवेशनीयहोमादूर्द्ध्वं त्रिरात्रं द्वादशरात्रं वा नियतौ स्याताम् इति नारायणः। उक्तनियमात् "प्रियोपात्तरसेऽधरोष्ठे" इति यत् उक्तं तत् चिन्त्यं। यद्वा यथयथा उपात्तमन्दरस मदपाईरसेऽधरे, भवत्या सौम्रतांस्य:।

तेन स्वहस्तार्जितमेकवीरः
पिबन् यशो मूर्त्तमिवावभासे ॥ ६३ ॥
शङ्खस्वनाभिज्ञतया निवृत्ताः
तं सन्नशत्रुं ददृशुः स्वयोधाः ।
निमीलितानामिव पङ्कजानां
मध्ये स्फुरन्तं प्रतिमाशशाङ्कम् ॥ ६४ ॥
सशोणितैस्तेन शिलीमुखाग्रैः
निक्षेपिताः केतुषु पार्थिवानाम् ।

रसे आस्वादितमाधुर्य्ये अतिश्लाघ्ये इति भावः अधरोष्ठे जलजं शङ्खं निवेश्य। "जलजं शङ्खपद्मयोः" इति विश्वः। दध्मौ मुखमारुतेन पूरयामास, तेनोष्ठनिविष्टेन शङ्खेन एकवीरः स स्वहस्तार्जितं मूर्त्तं मूर्त्तिमत् यशः पिबन् इव आवभासे यशसः शुभ्रत्वात् इति भावः ॥ ६३ ॥

शङ्खेति। शङ्खस्वनस्य अजशङ्खध्वनेः अभिज्ञतया प्रत्यभिज्ञातत्वात् निवृत्ताः प्राक् पलाय्य संप्रति प्रत्यागताः स्वयोधाः सन्नशत्रुं निद्राणशत्रुं तम् अजं, निमीलितानां मुकुलितानां पङ्कजानां मध्ये स्फुरन्तं प्रतिमा चासौ शशाङ्कश्च तं प्रतिमाशशाङ्कं प्रतिबिम्बचन्द्रम् इव, ददृशुः ॥ ६४ ॥

सशोणितैरिति। संप्रति राघवेण रघुपुत्रेण। पूर्वं रघुणा इति भावः। हे राजानः वः युष्माकं यशः हृतं जीवितं तु कृपया न हृतं न लयक्षया इति भावः इत्येवंरूपा वर्णाः एतदर्थप्रति-

यशो हृतं संप्रति राघवेण
न जीवितं वः कृपयेति वर्णाः ॥ ६५ ॥
स चापकोटीनिहितैकबाहुः
शिरस्त्रनिष्कर्षणभिन्नमौलिः।
ललाटबद्धश्रमवारिबिन्दुः
भीतां प्रियामेत्य वचो बभाषे ॥ ६६ ॥
इतः परानर्भकहार्य्यशस्त्रान्
वैदर्भि पश्यानुमता मयासि(१)।

पादकं वाक्यम् इत्यर्थः सशोणितैः शोणितदिग्धैः शिलीमुखाग्रैः बाणाग्रैः साधनैः तेन अजेन प्रयोजककर्त्रा पार्थिवानां राज्ञां केतुषु ध्वजस्तम्भेषु निक्षेपिताः प्रयोज्यैरन्यैर्निवेशिता लेखिताः इत्यर्थः। क्षिपतेर्ण्यन्तात् कर्म्मणि क्तः ॥ ६५ ॥

स इति। चापकोट्यां निहितः एकबाहुः येन स शिरस्त्रस्य निष्कर्षणेन अपनयनेन भिन्नमौलिः श्लथकेशबन्धः। "चूड़ा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः। ललाटे बद्धाः श्रमवारिबिन्दवः यस्य सः स अजः भीतां प्रियाम् इन्दुमतीम् एत्य आसाद्य वचः बभाषे ॥ ६६ ॥

किमित्याह, इत इति। हे वैदर्भि इन्दुमति इतः इदानीम् अर्भकहार्य्यशस्त्रान् बालकापहार्य्यायुधान् परान् शत्रून् पश्य

(१) "परान् शत्रून् पश्य। परयुद्धपान् कथं पश्यामीत्यत आह। मया अनुमता अनुज्ञातासि मदनुज्ञया पश्येत्यर्थः" इति दिनकरः।

एवंविधेनाहवचेष्टितेन
त्वं प्रार्थ्यसे हस्तगता ममैभिः ॥ ६७ ॥

तस्याः प्रतिद्वन्द्विभवाद्विषादात्
सद्यो विमुक्तं मुखमाबभासे ।
निश्वासबाष्पापगमात् प्रपन्नः
प्रसादमात्मीयमिवात्मदर्शः ॥ ६८ ॥

हृष्टापि सा ह्रीविजिता न साक्षात्
वाग्भिः सखीनां प्रियमभ्यनन्दत् ।
स्थली नवाम्भःपृषताभिवृष्टा
मयूरकेकाभिरिवाभ्रवृन्दम् ॥ ६९ ॥

मया अनुमता असि द्रष्टुम् इति शेषः । एभिः नृपैः एवंविधेन निद्रारूपेण आहवचेष्टितेन रणकर्मणा मम हस्तगता हस्तगतवत् दुर्ग्रहा इत्यर्थः त्वं प्रार्थ्यसे अपजिहीर्ष्यसे इत्यर्थः । एवंविधेनेत्यत्र स्वहस्तनिर्देशेन सोपहासमुवाचेति द्रष्टव्यम् ॥ ६७ ॥

तस्या इति । प्रतिद्वन्द्विभवात् रिपूत्थात् विषादात् दैन्यात् सद्यः विमुक्तं तस्या मुखं, निश्वासस्य यः बाष्पः ऊष्मा । "बाष्पौ नेत्रजलोष्मणोः" इति विश्वः । तस्य अपगमात् हेतोः आत्मीयं प्रसादं नैर्मल्यं प्रपन्नः प्राप्तः आत्मा स्वरूपं दृश्यते अनेनेति आत्मदर्शः दर्पणः इव, आबभासे ॥ ६८ ॥

हृष्टेति । सा इन्दुमती हृष्टा अपि पत्युः पौरुषेण प्रमुदिता

इति शिरसि स वामं पादमाधाय(१) राज्ञाम्
उदवहदनवद्यां तामवद्यादपेतः।
रथतुरगरजोभिस्तस्य रूक्षालकाग्रा
समरविजयलक्ष्मीः सैव मूर्त्ता बभूव॥ ७०॥

अपि क्रिया विजिता यतः अतः प्रियम् अजं साक्षात् स्वयं न अभ्यनन्दत् न प्रशशंस, किन्तु नवैः अम्भःपृषतैः पयोविन्दुभिः अभिहृष्टा अभिषिक्ता स्थली अकृत्रिमा भूमिः। जानपदकुण्डगोणस्थलेत्यादिना अकृत्रिमार्थे ङीष्। अभ्रवृन्दं मेघसङ्घं मयूरकेकाभिः इव, सखीनां वाग्भिः अभ्यनन्दत्॥ ६९॥

इतीति। न उद्यते न उच्यते इति अवद्यं गर्ह्यम्। अवद्यपण्येत्यादिना निपातः। "कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः" इत्यमरः। तस्मात् अपेतः निर्दोषः इत्यर्थः स अजः इति राज्ञां शिरसि वामं पादम् आधाय अनवद्याम् अदोषां ताम् इन्दुमतीम् उदवहत् उपानयत् आत्मसाच्चकार इत्यर्थः। अयमर्थस्तमुद्वहन्तं पथि भोजकन्यामित्यत्र न श्लिष्टः। तस्य अजस्य रथतुरगाणां रजोभिः रूक्षाणि परुषाणि अलकाग्राणि

(१) राज्ञां शिरसि वामपादमाधाय तान् निर्जित्य मत्तु यत् न: वामपादार्पणम् तस्य पत्नीत्यादिति भावः। "ननु विवाहस्य पूर्व्वमेव जातत्वात् कथमिदानीमुदवहदिति प्रयोगः। उच्यते। प्रथमतरवैरिनिवहविजयात् इदानीमेव इन्दुमतीलाभाधिकारोऽभूत्। यदि तान् सम्यक् न अजेष्यत तर्हि तैरिन्दुमत्यपहारे कृते विवाहोत्सवः एव स्यादिति भावः"। इति दिनकरः।

प्रथमपरिगतार्थस्तं रघुः सन्निवृत्तं
विजयिनमभिनन्द्य श्लाघ्यजायासमेतम्।
तदुपहितकुटुम्बः शान्तिमार्गोत्सुकोऽभूत्
न हि सति कुलधुर्य्ये सूर्य्यवंश्या गृहाय ॥७१॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
अजपाणिग्रहणो नाम सप्तमः सर्गः।

यस्याः सा, सा इन्दुमती एव मूर्त्ता मूर्त्तिमती समरविजयलक्ष्मीः बभूव। एतल्लाभादन्यः को विजयलक्ष्मीलाभः इत्यर्थः ॥ ७० ॥

प्रथमेति। प्रथमम् अजागमनात् प्राक् एव परिगतः ज्ञातः अर्थः विवाहविजयरूपः येन स प्रथमपरिगतार्थः रघुः विजयिनं विजययुक्तं श्लाघ्यजायासमेतं सन्निवृत्तं प्रत्यागतं तम् अजम् अभिनन्द्य तस्मिन् अजे उपहितकुटुम्बः सन् "सुतविन्यस्तपत्नीकः" इति याज्ञवल्क्यस्मरणात् इति भावः। शान्तिमार्गे मोक्षमार्गे उत्सुकः अभूत्, तथाहि कुलधुर्य्ये कुलधुरन्धरे सति सूर्य्यवंश्याः गृहाय गृहस्थाश्रमाय न भवन्ति ॥ ७१ ॥

इति श्रीमहामहोपाध्यायश्रीलाक्षमल्लिनाथसूरि-विरचितायां
रघुवंशव्याख्यायां सञ्जीविनीसमाख्यायां सप्तमः सर्गः।

# अष्टमः सर्गः ।

अथ तस्य विवाहकौतुकं
ललितं बिभ्रत एव(१) पार्थिवः ।
वसुधामपि हस्तगामिनीम्
अकरोदिन्दुमतीमिवापराम्(२) ॥ १ ॥

हेरम्बमवलम्ब्येहं यस्मिन् पातालकेलिषु ।
दन्तेनोद्धृत्य चौर्वीं विश्राम्यन्ति फणीश्वराः ॥

अथेति । अथ पार्थिवः रघुः ललितं सुभग विवाहकौतुकं विवाहमङ्गल विवाहहस्तसूत्रं वा बिभ्रतः एव। "कौतुकं मङ्गले हर्षे हस्तसूत्रे,कुतूहले" इति माधव. । तस्य अजस्य अपराम् इन्दुमतीम् इव वसुधाम् अपि हस्तगामिनीम् अकरोत् अस्मिन् सर्गे वैतालीय छन्दः ॥ १ ॥

---

(१) "अत ऊर्द्ध त्रिरात्र द्वादशरात्र । संवत्सरम् वैक ऋषिर्जायत इति" । इति आश्वलायनात् वधूवरौ गृहप्रवेशानन्तर त्रिरात्र द्वादशरात्र कदाचित् संवत्सर वा, ब्रह्मचर्य्यमनुतिष्ठन्तौ कङ्कण धारयेतामिति मर्यादास्ति ।

(2) The purport of the stanza is, that the ceremony of installation was performed before the post-nuptial vow of celebracy, adopted by Aja according to the prescribed usage, was over, i e. within 3 or 12 days after he had reached home See the 65th—stanza of canto VI

दुरितैरपि(१) कर्तुमात्मसात्
प्रयतन्ते नृपसूनवो हि यत्।
तदुपस्थितमग्रहीदजः
पितुराज्ञेति न भोगतृष्णया ॥ २ ॥
अनुभूय वसिष्ठसम्भृतैः
सलिलैस्तेन सहाभिषेचनम्।
विशदोच्छ्वसितेन(२) मेदिनी
कथयामास कृतार्थतामिव ॥ ३ ॥

दुरितैरिति। नृपसूनवः राजपुत्राः यत् राज्यं दुरितैः अपि विषप्रयोगादिनिषिद्धोपायैः अपि आत्मसात् स्वाधीनम्। "तदधीनवचने" इति सातिप्रत्ययः। कर्तुं प्रयतन्ते हि प्रवर्त्तन्ते एव इत्यर्थः। हिशब्दोऽवधारणे। "हि हेताववधारणे" इत्यमरः। उपस्थितं स्वतः प्राप्तं तत् राज्यम् अजः पितुराज्ञेति हेतोः अग्रहीत् स्वीचकार भोगतृष्णया तु न अग्रहीत् ॥ २ ॥

अनुभूयेति। मेदिनी भूमिः महिषी च उच्यते, वसिष्ठेन सम्भृतैः सलिलैः तेन अजेन सह अभिषेचनम् अनुभूय विशदो-

(1) The history of Hindu kings presents very few instances of their having been violently or unfairly deposed. The poet may have probably had in view the case of विक्रमादित्य, who is said, according to one version of the tradition, to have deposed his brother भर्तृहरि and usurped the crown of Ujjayini.

(२) विशदं निर्मलं उच्छ्वसितं अभिषेकजलसिक्तं बाष्पोद्गमं इव।

स बभूव दुरासदः परै-
र्गुरुणाथर्वविदा कृतक्रियः(१) ।
पवनाग्निसमागमो ह्ययं
सहितं ब्रह्म यदस्त्रतेजसा ॥ ४ ॥

च्छ्वसितेन स्फुटमुद्दृष्टेन आनन्दनिर्मसोच्छ्वसितेन चेति व्यज्यते, कृतार्थतां गुणवद्वत्सलाभकृतं साफल्यं कथयामास इव । न चैतावता पूर्वेषामपकर्षः प्रशंसापरत्वात् "सर्व्वत्र जयमन्विच्छेत् पुत्रादिच्छेत् पराजयम्" इत्यङ्गीकृतत्वाच ॥ ३ ॥

स इति । अथर्वविदा अथर्ववेदाभिज्ञेन गुरुणा वशिष्ठेन कृतक्रियः अथर्वोक्तविधिना कृताभिषेकसंस्कारः इत्यर्थः स अजः परैः शत्रुभिः दुरासदः दुर्द्धर्षः बभूव । तथाहि, अस्त्रतेजसा क्षत्रतेजसा सहितं युक्तं यत् ब्रह्म ब्राह्मतेजः अयं पवनाग्निसमागमः हि तत्कल्पः इत्यर्थः । पवनाग्नीत्यत्र पूर्वनिपातशास्त्रस्यानित्यत्वात् द्वन्द्वे घीति नाग्निशब्दस्य पूर्वनिपातः । तथाच काशिकायाम्, "अयमेकस्तु लक्षणहेत्वोरिति निर्देशः पूर्वनिपातव्यभिचारचिह्नम्" इति । बालेऽपि वायं दुर्द्धर्षः किमयं पुनर्वशिष्ठमन्त्रप्रभावे सति इत्यर्थः । अत्र मनुः, "नाक्षत्रं ब्रह्म भवति क्षत्रं नाब्रह्म वर्द्धते । ब्रह्मक्षत्रं तु संयुक्तं इहामुत्र च वर्द्धते" । इति ॥ ४ ॥

(१) "यः प्रथमो यौवनपत्नी यस्य विपक्षयानि न, देवास सर्व्वे धूर्व्वतु" इत्यादिभिराथर्वणमन्त्रैः कृता निष्पादिता क्रिया शान्तिकपौष्टिककार्यं यस्य इ तयोक्त । See Canto I 59. and 60.

रघुमेव निवृत्तयौवनं
तममन्यन्त नवेश्वरं प्रजाः।
स हि तस्य न केवलां श्रियं
प्रतिपेदे सकलान् गुणानपि ॥ ५ ॥

अधिकं शुशुभे शुभंयुना
द्वितयेन द्वयमेव सङ्गतम्।
पदमृद्धमजेन पैतृकं
विनयेनास्य(१) नवञ्च यौवनम् ॥ ६ ॥

रघुमिति। प्रजाः नवेश्वरं तम् अजम् निवृत्तयौवनं प्रत्याहृत्तयौवनं रघुम् एव अमन्यन्त न किञ्चिद्वैदकमस्ति इत्यर्थः। कुतः हि यस्मात् स अजः तस्य रघोः केवलाम् एकां श्रियं न प्रतिपेदे किन्तु सकलान् गुणान् शौर्यदाक्षिण्यादीन् अपि प्रतिपेदे अतस्तद्गुणयोगात् तद्बुद्धिर्युक्ता इत्यर्थः ॥ ५ ॥

अधिकमिति। द्वयम् एव शुभंयुना शुभवता। "शुभंयुस्तु शुभान्वितः" इत्यमरः। "अहंशुभयोर्युस्" इति युस्प्रत्ययः। द्वितयेन सङ्गतं युतं सत् अधिकं शुशुभे। किं केनेत्याह, पदमिति। पैतृकं पितुरागतम्। "ऋतठञ्" इति ठञ् प्रत्ययः। ऋद्धं समृद्धं पदं राज्यम् अजेन, अस्य अजस्य नवं यौवनं विनयेन च ॥ ६ ॥

(१) "विनयेन यस्यैव नवं यौवनं बभौ। यौवने विनयस्तु दुर्लभः। अयं तु प्राप्तेऽर्थः यौवनेऽपि विनयवानासीदिति दिनकर। यदुक्तं—"विनीतात्मा हि नृपतिर्न विनश्यति कर्हिचित्" इति। मनु। ७। ३९।

सदयं बुभुजे महाभुजः
सहसोद्वेगमियं व्रजेदिति ।
अचिरोपनतां स मेदिनीं(१)
नवपाणिग्रहणां वधूमिव ॥ ७ ॥
अहमेव मतो महीपतेः
इति सर्वः प्रकृतिष्वचिन्तयत् ।
उदधेरिव निम्नगाशते-
ष्वभवन्नास्य विमानना क्वचित् ॥ ८ ॥

सदयमिति । महाभुजः स अजः अचिरोपनतां नवोपगतां मेदिनीं भुवं नवं पाणिग्रहणं विवाहः यस्याः ताम् नवोढां वधूं इव, सहसा बलात्कारेण चेत् । "सहोबलं सहामार्गः" इत्यमरः । इयं मेदिनी वधूः वा उद्वेगं भयं व्रजेत् इति हेतोः सदयं सकृपं बुभुजे भुक्तवान् । भुजोऽनवन इत्यात्मनेपदम् ॥ ७ ॥

अहमिति । प्रकृतिषु प्रजासु मध्ये सर्व्वः जनः, अथवा प्रकृतिष्वहमित्यनेनान्वयः व्यवधानन्तु सह्यम् । सर्व्वः जनः प्रकृतिषु अहमेव महीपतेः मतः महीपतिना मन्यमानः । मतिबुद्धिपूजार्थेभ्यश्चेति वर्त्तमाने क्तः, क्तस्य च वर्त्तमाने इति षष्ठी । इति अचिन्तयत् अमन्यत । उदधेः निम्नगाशतेषु इव, अस्य नृपस्य कर्त्तुः । कर्तृकर्म्मणोः कृतीति कर्त्तरि षष्ठी । क्वचित्

(१) नवलब्धं राज्यं मादृशं विलम्ब प्रयास इति भावः ।

न खरो न च भूयसा मृदुः
पवमानः पृथिवीरुहानिव।
स पुरस्कृतमध्यमक्रमः
नमयामास नृपाननुद्धरन् ॥ ९ ॥

अथ वीक्ष्य रघुः प्रतिष्ठितं
प्रकृतिष्वात्मजमात्मवत्तया।
विषयेषु विनाशधर्म्मसु
त्रिदिवस्थेष्वपि निस्पृहोऽभवत् ॥ १० ॥

अपि जने विषये विमानना अवगणना तिरस्कारः न अभवत् यतो न कश्चिदवमन्यते अतः सर्व्वोऽप्यहमेवास्य मत इत्यमन्यत इत्यर्थः ॥ ८ ॥

न खर इति। स नृपः भूयसा बाहुल्येन खरः तीक्ष्णः न, भूयसा मृदुः अतिमृदुः अपि न, किन्तु पुरस्कृतमध्यमक्रमः सन् मध्यमपरिपाटीमवलम्ब्य इत्यर्थः, पवमानः वायुः पृथिवीरुहान् तरून् इव नृपान् अनुद्धरन् अनुत्पाटयन् एव नमयामास। अत्र कामन्दकः, "मृदुश्चेदवमन्येत तीक्ष्णादुद्विजते जनः। तीक्ष्णश्चैव मृदुश्चैव प्रजानां स च सम्मतः"। इति ॥ ९ ॥

अथेति। अथ रघुः आत्मजं पुत्रम् आत्मवत्तया निर्विकारमनस्कतया इत्यर्थः। "उदयादिष्वविकृतिर्मनसः सत्त्वमुच्यते। आत्मवान् सत्त्वसंयुतः" इत्युत्पलमालायाम्। प्रकृतिषु अमात्या-

गुणवत्सुतरोपितश्रियः
परिणामे हि दिलीपवंशजाः।
पदवीं तरुवल्कवाससां
प्रयताः संयमिनां प्रपेदिरे ॥ ११ ॥

तमरण्यसमाश्रयोन्मुखं
शिरसा वेष्टनशोभिना सुतः।
पितरं प्रणिपत्य पादयोः
अपरित्यागमयाचतात्मनः ॥ १२ ॥

दिषु(१) प्रतिष्ठितं रूढ़मूलं वीक्ष्य ज्ञात्वा विनाशः धर्मः येषां तेषु विनाशधर्मसु अनित्येषु इत्यर्थः। धर्मादनिच् केवलादित्यनिच्प्रत्ययः समासान्तः। त्रिदिवस्थेषु स्वर्गस्थेषु अपि विषयेषु शब्दादिषु निःस्पृहः निर्गतेच्छः अभवत् ॥ १० ॥

कुलधर्मश्चायमेवेत्याह, गुणवदिति। दिलीपवंशजाः परिणामे वार्द्धके गुणवत्सुतेषु रोपितश्रियः स्थापितलक्ष्मीकाः प्रयताश्च सन्तः तरुवल्कानि एव वासांसि येषां तेषां संयमिनां यतीनां पदवीं प्रपेदिरे यस्मात् तस्मादस्यापीदमुचितम् इत्यर्थः ॥ ११ ॥

तमिति। अरण्यसमाश्रयोन्मुखं वनवासोद्युक्तं पितरं तं रघुं सुतः अजः वेष्टनशोभिना उष्णीषमनोहरेण शिरसा पादयोः प्रणिपत्य आत्मनः अपरित्यागम् अयाचत मां परित्यज्य न गमिष्यसीति प्रार्थितवान् इत्यर्थः ॥ १२ ॥

---

(१) "यमात्मराट् दुर्वोऽदृश्याः पञ्च चापराः"। See Manu. Book. VII. 155—157.

रघुरश्रुमुखस्य तस्य तत्
कृतवानीप्सितमात्मजप्रियः।
न तु सर्प इव त्वचं पुनः
प्रतिपेदे व्यपवर्जितां श्रियम् ॥ १३ ॥

स किलाश्रममन्त्यमाश्रितः
निवसन्नावसथे पुराद्बहिः।
समुपास्यत पुत्रभोग्यया
स्नुषयेवाविकृतेन्द्रियः श्रिया ॥ १४ ॥

रघुरिति। आत्मजप्रियः पुत्रवत्सलः रघुः अश्रूणि मुखे यस्य तस्य अश्रुमुखस्य अजस्य तत् अपरित्यागरूपम् ईप्सितम् अभिलषितं कृतवान्, किन्तु सर्पः त्वचम् इव, व्यपवर्जितां त्यक्तां श्रियं पुनः न प्रतिपेदे न प्राप ॥ १३ ॥

स इति। स रघुः किल अन्त्यम् आश्रमं प्रव्रज्याम् आश्रितः पुरात् नगरात् बहिः आवसथे स्थाने निवसन् अविकृतेन्द्रियः जितेन्द्रियः सन् इत्यर्थः, अत एव स्नुषया इव वध्वा इव, पुत्रभोग्यया न स्वभोग्यया श्रिया समुपास्यत शुश्रूषितः। जितेन्द्रियस्य तस्य स्नुषयेव श्रियापि पुष्पफलोदकाहरणादिशुश्रूषाव्यतिरेकेण न किञ्चिदपेक्षितमासीत् इत्यर्थः। अत्र यद्यपि "ब्राह्मणाः प्रव्रजन्ति" इति श्रुतेः "आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्" इति मनुस्मरणात् "मुखजानामयं धर्मो यद्विष्णोर्लिङ्ग-

प्रशमस्थितपूर्वपार्थिवं
कुलमभ्युद्यतनूतनेश्वरम् ।
नभसा निभृतेन्दुना तुलाम्
उदितार्केण समारुरोह तत् ॥ १५ ॥

धारणम् । बाहुजातोरुजातानामयं धर्मो न विन्दते" । इति निषेधाच्च ब्राह्मणस्यैव प्रव्रज्या न क्षत्रियादेरित्याहुः तथापि "यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इत्यादिश्रुतेस्त्रैवर्णिकसाधारण्यात् "त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः" इति सूत्रकारवचनात् "ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेद् गृहात्" इति स्मरणात् "मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम् । बाहुजातोरुजातानां त्रिदण्डं न विधीयते" । इति निषेधस्य त्रिदण्डविषयत्वदर्शनाच्च क्वचिद् ब्राह्मणपदस्योपलक्षणमाचक्षाणाः केचित् त्रैवर्णिकाधिकारं प्रपेदिरे । तथा सति "स किलाश्रममन्त्यमाश्रितः" इति अत्रापि कविनाप्ययमेव पक्षो विवक्षित इति प्रतीमः । अन्यथा वानप्रस्थाश्रमतया व्याख्याने "विदधे विधिमस्य नैष्ठिकं यतिभिः सार्धमनग्निमग्निचित्" इति वक्ष्यमाणेनानग्निसंस्कारेण विरोधः स्यात् अग्निसंस्काररहितस्य वानप्रस्थस्यैवाभावात् इत्यलं प्रासङ्गिकेन ॥ १४ ॥

प्रशमेति । प्रशमे स्थितः पूर्वपार्थिवः रघुः यस्य तत् अभ्युद्यतः अभ्युदितः नूतनेश्वरः अजः यस्य तत् तत् प्रसिद्धं कुलं निभृतेन्दुना अस्तमयासन्नचन्द्रेण उदितार्केण प्रकटितसूर्येण

यतिपार्थिवलिङ्गधारिणौ
ददृशाते रघुराघवौ जनैः ।
अपवर्गमहोदयार्थयो-
र्भुवमंशाविव धर्म्मयोर्गतौ ॥ १६ ॥

अजिताधिगमाय मन्त्रिभि-
र्युयुजे नीतिविशारदैरजः ।
अनपायिपदोपलब्धये
रघुराप्तैः समियाय योगिभिः ॥ १७ ॥

नभसा तुलां सादृश्यम् आरुरोह प्राप । न च नभसा तुला-मित्यत्र तुल्यार्थैरित्यादिना प्रतिषेधस्तृतीयायाः तस्य सदृश-वाचितुलाशब्दविषयत्वात् कृष्णस्य तुला नास्तीति प्रयोगात् भस्य च सादृश्यवाचित्वात् ॥ १५ ॥

यतीति । यतिः भिक्षुः पार्थिवः राजा तयोः लिङ्गधारिणौ रघुराघवौ रघुतत्सुतौ अपवर्गमहोदयार्थयोः मोक्षाभ्युदयफलयोः धर्म्मयोः निवर्त्तकप्रवर्त्तकरूपयोः भुवं गतौ भूलोकम् अवतीर्णौ अंशौ इव जनैः ददृशाते दृष्टौ ॥ १६ ॥

अजितेति । अजः अजिताधिगमाय अजितपदलाभाय नीतिविशारदैः नीतिज्ञैः मन्त्रिभिः युयुजे सङ्गतः, रघुः अपि अनपायिपदस्य उपलब्धये मोक्षस्य प्राप्तये यथार्थदर्शिनः यथार्थ-वादिनश्च आप्ताः तैः योगिभिः समियाय सङ्गतः । उभयत्रा-प्युपायचिन्तार्थम् इति शेषः ॥ १७ ॥

नृपतिः प्रकृतीरवेक्षितुं
व्यवहारासनमाददे युवा ।
परिचेतुमुपांशु धारणां
कुशपूतं प्रवयास्तु विष्टरम् ॥ १८ ॥
अनयत् प्रभुशक्तिसम्पदा
वशमेको नृपतीननन्तरान् ।
अपरः प्रणिधानयोग्यया
मरुतः पञ्च शरीरगोचरान् ॥ १९ ॥

नृपतिरिति । युवा नृपतिः अजः प्रकृतीः प्रजाः कार्यार्थिनीः अवेक्षितुं दुष्टादुष्टपरिज्ञानार्थम् इत्यर्थः व्यवहारासनं धर्मासनम् आददे स्वीचकार । प्रवयाः स्थविरः नृपतिः रघुः । "प्रवयाः स्थविरो वृद्धः" इत्यमरः । धारणां चित्तस्यैकाग्रतां परिचेतुम् अभ्यसितुम् उपांशु विजने । "उपांशु विजने प्रोक्तम्" इति हलायुधः । कुशैः पूतं विष्टरम् आददे । "यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि । धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदैः" ॥ इति वशिष्ठः ॥ १८ ॥

अनयदिति । एकः अन्यतरः अजः इत्यर्थः अनन्तरान् स्वभूम्यनन्तरान् नृपतीन् यातव्यपार्ष्णिग्राहादीन् प्रभुशक्तिसम्पदा कोशदण्डमहिम्ना वशं स्वायत्तताम् अनयत् । अपरः रघुः प्रणिधानयोग्यया समाध्यभ्यासेन । "योग्याभ्यासार्कयोषितोः" इति विश्वः । शरीरगोचरान् देहाश्रयान् पञ्च मरुतः प्राणादीन् वशम् अनयत् ॥ १९ ॥

अकरोदचिरेश्वरः क्षितौ
द्विषदारम्भफलानि भस्मसात् ।
इतरो(१) दहने स्वकर्म्मणां
ववृते ज्ञानमयेन वह्निना ॥ २० ॥

पणबन्धमुखान् गुणानजः
षडुपायुङ्क्त समीक्ष्य तत्फलम् ।
रघुरप्यजयद् गुणत्रयं(२)
प्रकृतिस्थं समलोष्टकाञ्चनः ॥ २१ ॥

अकरोदिति । अचिरेश्वरः अजः क्षितौ द्विषताम् आरम्भाः कर्माणि तेषां फलानि भस्मसात् अकरोत् कार्त्स्न्येन भस्मीकृतवान् । "विभाषा साति: कार्त्स्न्ये" इति सातिप्रत्ययः । इतरः रघुः ज्ञानमयेन तत्त्वज्ञानप्रचुरेण वह्निना करणेन स्वकर्म्मणां भवबीजभूतानां दहने भस्मीकरणे ववृते स्वकर्माणि दग्धुं प्रवृत्तः इत्यर्थः । "ज्ञानाग्निः सर्व्वकर्माणि भस्मसात् कुरुतेऽर्ज्जुन" इति गीतायां वचनात् ॥ २० ॥

पणबन्धेति । "पणबन्धः सन्धिः" इति कौटिल्यः । अजः

---

(१) कर्म्मणः इति पाठान्तरम् ।

(२) यथा "प्रकृतौ महदहङ्कारभूतेन्द्रियरूपे प्रकृतिकार्ये तिष्ठतीति प्रकृतिस्थं गुणत्रयं सत्त्वरजस्तमःस्वरूपं अजयत् वैराग्येण तस्य प्रकृतिलयादिरूपं । एतदेव प्रतिपादितं सांख्याचार्याणाम् । तथाहि "वैराग्यात् प्रकृतिलयः संसारो भवति राजसाद्रागात् । ऐश्वर्यादविघातो विपर्ययात्तद्विपर्यासः ॥" See the remarks of वाचस्पतिमिश्र on this stanza.

न नवः प्रभुराफलोदयात्
स्थिरकर्म्मा विरराम कर्म्मणः ।
न च योगविधेर्नवेतरः (१)
स्थिरधीरापरमात्मदर्शनात् ॥ २२ ॥

पणबन्धमुखान् सन्ध्यादीन् षड्गुणान् "सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः" इत्यमरः । तत्फलं तेषां गुणानां फलं समीक्ष्य आलोच्य उपायुङ्क्त फलिष्यन्तमेव गुणं प्रायुङ्क्त इत्यर्थः । "प्रोपाभ्यां युजेरयज्ञपात्रेषु" इत्यात्मनेपदम् । समः तुल्यतया भावितः लोष्टः मृत्पिण्डः काञ्चनं सुवर्णञ्च यस्य सः समलोष्टकाञ्चनः निस्पृहः इत्यर्थः । रघुः अपि गुणत्रयं सत्वादिकम् । "गुणाः सत्वं रजस्तमः" इत्यमरः । प्रकृतौ साम्यावस्थायामेव तिष्ठतीति प्रकृतिस्थं पुनर्विकारशून्यं यथा तथा अजयत् ॥ २१ ॥

नेति । स्थिरकर्म्मा आफलोदयकर्म्मकारी नवः प्रभुः अजः आफलोदयात् फलसिद्धिपर्यन्तं कर्मणः आरम्भात् न विरराम

इति शत्रुषु चेन्द्रियेषु च
प्रतिषिद्धप्रसरेषु जाग्रतौ।
प्रसितावुदयापवर्गयो:
उभयीं सिद्धिमुभाववापतुः॥ २३॥

अथ काश्चिदजव्यपेक्षया
गमयित्वा समदर्शनः समाः।
तमसः परमापदव्ययं
पुरुषं योगसमाधिना रघुः॥ २४॥

इतीति। इति एवं प्रतिषिद्धः प्रसरः स्वार्थप्रवृत्तिः येषां तेषु शत्रुषु च इन्द्रियेषु च जाग्रतौ अप्रमत्तौ उदयापवर्गयोः अभ्युदयमोक्षयोः प्रसितौ आसक्तौ। "तत्परे प्रसितासक्तौ" इत्यमरः। उभौ अजरघू उभयीं द्विविधाम् अभ्युदयमोक्षरूपाम्। उभादुदात्तो नित्यमिति तयप्प्रत्ययस्यायजादेशः, "टिड्ढे" ङीप्। सिद्धिं फलम् अवापतुः उभौ उभे सिद्धी यथासंख्यम् अवापतुः इत्यर्थः॥ २३॥

अथेति। अथ रघुः समदर्शनः सर्वभूतेषु समदृष्टिः सन् अजव्यपेक्षया अजाकाङ्क्षानुरोधेन काश्चित् समाः कतिचिद् वर्षाणि। "समा वर्षं समं तुल्यम्" इति विश्वः। गमयित्वा नीत्वा योगसमाधिना ऐक्यानुसन्धानेन। "संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः" इति वसिष्ठः। अव्ययम् अवि-

न नवः प्रभुराफलोदयात्
स्थिरकर्म्मा विरराम कर्म्मणः ।
न च योगविधेर्नवेतरः (१)
स्थिरधीरापरमात्मदर्शनात् ॥ २२ ॥

पणबन्धमुखान् सन्ध्यादीन् षड्गुणान् "सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः" इत्यमरः । तत्फलं तेषां गुणानां फलं समीक्ष्य आलोच्य उपायुङ्क्त फलिष्यन्तमेव गुणं प्रायुङ्क्त इत्यर्थः । "प्रोपाभ्यां युजेरयज्ञपात्रेषु" इत्यात्मनेपदम् । समः तुल्यतया भावितः लोष्टः मृत्पिण्डः काञ्चनं सुवर्णञ्च यस्य सः समलोष्टकाञ्चनः निस्पृहः इत्यर्थः । रघुः अपि गुणत्रयं सत्वादिकम् । "गुणाः सत्वं रजस्तमः" इत्यमरः । प्रकृतौ साम्यावस्थायामेव तिष्ठतीति प्रकृतिस्थं पुनर्विकारशून्यं यथा तथा अजयत् ॥ २१ ॥

नेति । स्थिरकर्मा आफलोदयकर्मकारी नवः प्रभुः अजः आफलोदयात् फलसिद्धिपर्य्यन्तं कर्मणः आरम्भात् न विरराम न निवृत्तः । "जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्" इत्यपादानत्वात् पञ्चमी, "व्याङ्परिभ्यो रमः" इति परस्मैपदम् । स्थिरधीः नवेतरः रघुश्च आपरमात्मदर्शनात् परमात्मसाक्षात्कारपर्य्यन्तं योगविधेः ऐक्यानुसन्धानात् न विरराम ॥ २२ ॥

इति शत्रुषु चेन्द्रियेषु च
प्रतिषिद्धप्रसरेषु जाग्रतौ।
प्रसितावुदयापवर्गयोः
उभयीं सिद्धिमुभाववापतुः॥ २३॥

अथ काश्चिदजव्यपेक्षया
गमयित्वा समदर्शनः समाः।
तमसः परमापदव्ययं
पुरुषं योगसमाधिना रघुः॥ २४॥

इतीति। इति एवं प्रतिषिद्धः प्रसरः स्वार्थप्रवृत्तिः येषां तेषु शत्रुषु च इन्द्रियेषु च जाग्रतौ अप्रमत्तौ उदयापवर्गयोः अभ्युदयमोक्षयोः प्रसितौ आसक्तौ। "तत्परे प्रसितासक्तौ" इत्यमरः। उभौ अजरघू उभयीं द्विविधाम् अभ्युदयमोक्षरूपाम्। उभादुदात्तो नित्यमिति तयप्प्रत्ययस्यायजादेशः, "टिड्ढे" ङीप्। सिद्धिं फलम् अवापतुः उभौ उभे सिद्धी यथासंख्यम् अवापतुः इत्यर्थः॥ २३॥

अथेति। अथ रघुः समदर्शनः सर्वभूतेषु समदृष्टिः सन् अजव्यपेक्षया अजाकाङ्क्षानुरोधेन काश्चित् समाः कतिचित् वर्षाणि। "समा वर्षं समं तुल्यम्" इति विश्वः। गमयित्वा नीत्वा योगसमाधिना ऐक्यानुसन्धानेन। "संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः" इति वसिष्ठः। अव्ययम् अवि-

श्रुतदेहविसर्ज्जनः पितु-
चिरमश्रूणि विमुच्य राघवः ।
विदधे विधिमस्य नैष्ठिकं
यतिभिः सार्द्धमनग्निमग्निचित् ॥ २५ ॥
अकरोत् स तदौर्द्ध्वदैहिकं
पितृभक्त्या पितृकार्य्यकल्पवित् ।
न हि तेन पथा तनुत्यजः
तनयावर्ज्जितपिण्डकाङ्क्षिणः ॥ २६ ॥

नाशिनं तमसः परम् अविद्यायाः परं मायातीतम् इत्यर्थः पुरुषं परमात्मानम् आपत् प्राप सायुज्यं प्राप्तः इत्यर्थः ॥ २४ ॥

श्रुतेति । अग्निचित् अग्निं चितवान् । अग्नौ चेरिति क्विप्प्रत्ययः । राघवः अजः पितुः श्रुतदेहविसर्ज्जनः आकर्णितपितृतनुत्यागः सन् चिरम् अश्रूणि वाष्पान् विमुच्य विसृज्य अस्य पितुः अनग्निम् अग्निसंस्काररहितम् इत्यर्थः । नैष्ठिकं निष्ठायाम् अन्ते भवं विधिम् आचारम् अन्त्येष्टिं यतिभिः संन्यासिभिः सार्द्धं विदधे चक्रे । अनग्निं विधिमित्यत्र शौनकः, "सर्व्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कार्य्यं नैव पिण्डोदकक्रिया । निदध्यात् प्रणवेनैव विले भिक्षोः कलेवरम् । प्रोक्षणं खननञ्चैव सर्व्वं तेनैव कारयेत्" ॥ इति ॥ २५ ॥

अकरोदिति । पितृकार्य्यस्य श्राद्धस्य कल्पवित् विधानज्ञः स अजः पितृभक्त्या पितरि भक्त्या कारणेन, न पितुः परलोक-

स परार्ध्यगतेरशोच्यतां
पितुरुद्दिश्य सदर्थवेदिभिः।
शमिताधिरधिज्यकार्मुकः
कृतवानप्रतिशासनं जगत् ॥ २७ ॥
चितिरिन्दुमती च भामिनी
पतिमासाद्य तमग्र्यपौरुषम्।

सुखापेक्षया, मुक्तत्वात् इति भावः। तस्य रवेः और्ध्वदैहिकं देहादूर्ध्वं भवतीति तत्, तिलोदकपिण्डदानादिकम् अकरोत्। ऊर्ध्वं देहाच्चेति वक्तव्यात् ठक्प्रत्ययः। अनुशतिकादित्वादुभयपदवृद्धिः। ननु कथं भक्तिरेव श्राद्धादिफलप्रेप्सापि कस्मान्नाभूदित्याशङ्क्याह, नहीति। तेन यथा योगरूपेण मार्गेण तनुत्यजः शरीरत्यागिनः पुरुषाः तनयेन आवर्जितं दत्तं पिण्डं काङ्क्षन्तीति तथोक्ताः न हि भवन्ति ॥ २६ ॥

स इति। परार्ध्यगतेः प्रशस्तगतेः प्राप्तमोक्षस्य पितुः अशोच्यताम् अशोचनीयत्वम् उद्दिश्य अभिसन्धाय शोको न कर्त्तव्य इत्युपदिश्य इत्यर्थः सदर्थवेदिभिः परमार्थज्ञैः शमिताधिः निवारितमनोव्यथः। "पुंस्याधिर्मानसी व्यथा" इत्यमरः। स अजः अधिज्यकार्मुकः अधिज्यम् आरोपितमौर्वीकं कार्मुकं यस्य स तथोक्तः सन् जगत् कर्मभूतम् अप्रतिशासनं द्वितीयाज्ञारहितम् आत्माज्ञाविधेयम् इत्यर्थः कृतवान् चकार ॥ २७ ॥

चितिरिति। चितिः मही भामिनी कामिनी इन्दुमती च

प्रथमा वसुरत्नसूरभूत्
अपरा वीरमजीजनत् सुतम् ॥ २८ ॥
दशरश्मिशतोपमद्युतिं
यशसा दिक्षु दशस्वपि श्रुतम् ।
दशपूर्वरथं यमाख्यया
दशकण्ठारिगुरुं विदुर्बुधाः ॥ २९ ॥
ऋषिदेवगणस्वधाभुजां (१)
श्रुतयागप्रसवैः स पार्थिवः ।

"भामिनी कामिनी च" इति हलायुधः । अथ अपौरुषं महापराक्रमम् उत्कृष्टभोगशक्तिश्च तम् अजं पतिम् आसाद्य तत्र प्रथमा क्षितिः बहूनि रत्नानि श्रेष्ठवस्तूनि सूते इति वसुरत्नसूः अभूत्। "रत्नं स्वजातिश्रेष्ठेऽपि" इत्यमरः । अपरा इन्दुमती वीरं सुतम् अजीजनत् जनयति स्म । जायतेर्णौ लुङि रूपम् ॥ २८ ॥

किंनामकोऽसावत आह, दशेति । दश रश्मिशतानि यस्य स दशरश्मिशतः सूर्यः स उपमा यस्याः सा दशरश्मिशतोपमा द्युतिः यस्य तं यशसा करणेन दशसु अपि दिक्षु श्रुतं प्रसिद्धं दशकण्ठारेः रावणारेः रामस्य गुरुं पितरं यं सुतम् आख्यया नाम्ना दशपूर्वः दशशब्दपूर्वः रथः रथशब्दः तं दशरथम् इत्यर्थः बुधाः विद्वांसः विदुः वदन्ति । विदोलटोवेति झेरुस् आदेशः ॥ २९ ॥

ऋषीति । श्रुतयागप्रसवैः अध्ययनयज्ञसन्तानैः यथासंख्यम्

(१) "स्वधापूर्वं यत् दत्तं कव्यादि तत् भुञ्जन्तीति स्वधाभुजाम्" इति दिनकरः ।

अनृणत्वमुपेयिवान् बभौ
परिधेर्मुक्त इवोष्णदीधितिः ॥ ३० ॥
बलमार्त्तभयोपशान्तये
विदुषां सत्कृतये(१) बहु श्रुतम् ।

ऋणीयां देवगणानाम् इन्द्रादीनां स्वधाभुजां पितृणाम् अनृण-त्वम् ऋणविमुक्तत्वम् उपेयिवान् प्राप्तवान् । "एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वा" इति श्रुतेः । स पार्थिवः अजः, परिधेः परिवेशात् । "परिवेषस्तु परिधिः" इत्यमरः । मुक्तः उष्णदीधितिः सूर्यः इव, बभौ इत्युपमा ॥ ३० ॥

बलमिति । तस्य विभोः अजस्य केवलं वसु धनम् एव

---

There are three incorporeal (अमूर्त्ति) Pitris वैराजा:, अग्निष्वात्ता: and बर्हिषद:, and four corporeal orders सोमपा:, आङ्गिरसा: आज्यपा: and सुकाला: ; The Vairajas called also Somasadas are sons of Viraja and fathers of Mena and the Sadhyas; Agnisvattas, sons of Marichi and fathers of the Gods; Barhisadas sons of Atri and fathers of the demons; Somapas, sons of Bhrigu and fathers of the Brahmans; Angirasas, sons of Angiras and Pitris of the Kshetriyas; A'jyapas, sons of Kardama and Pitris of the Vaisayas; and Sukalins, sons of Vasistha and Pitris of the Sudras. Generally speaking, they may be called a race of divine beings inhabiting celestial regions of their own, and receiving into their society the spirits of those mortals, for whom the rite of fellowship in obsequial cakes with them (the sapindakarana) has been duly performed, The Pitris collectively, therefore, include a man's ancestors; but the principal members of this order of beings are of a different origin". See Wilson's V. Purana, Book III. Chap XIV.

(१) सत्कृतये इति हरिचरन. ।

वसु तस्य विभोर्न केवलं
गुणवत्तापि परप्रयोजना ॥ ३१ ॥
स कदाचिदवेक्षितप्रजः
सह देव्या विजहार सुप्रजाः ।
नगरोपवने शचीसखः
मरुतां पालयितेव नन्दने ॥ ३२ ॥

परप्रयोजनं परोपकारकं न अभूत् किन्तु गुणवत्ता अपि गुणित्वम् अपि परप्रयोजना परेषाम् अन्येषां प्रयोजनं यस्यां सा विधेयांशत्वेन प्राधान्याद्गुणवत्ताया विशेषणम्, वसु इत्यत्र तूहनीयम् । तथाहि, बलं पौरुषम् आर्त्तानाम् आपन्नानां भयस्य उपशान्तये न तु स्वार्थं परपीड़नाय वा । बहु भूरि श्रुतं विद्या विदुषां सत्कृतये सत्काराय न तूत्सेकाय बभूव ॥ ३१ ॥

स इति । अवेक्षितप्रजः अकुतोभयत्वेनानुसंहितप्रजः । नित्यमसिच् प्रजामेधयोरिति असिच्प्रत्ययः । न केवलं स्त्रैणः इति भावः । शोभना प्रजा यस्य असौ सुप्रजाः सुपुत्रवान् पुत्रन्यस्तभार इति भावः (१) । स अजः कदाचित् देव्या महिष्या इन्दुमत्या सह नगरोपवने, नन्दने नन्दनाख्ये अमरावत्युपवनवने शचीसखः शच्या सह इत्यर्थः मरुतां देवानां पालयिता इन्द्रः इव, विजहार चिक्रीड़ ॥ ३२ ॥

(१) तदानीमर्भकदये दशरथे कथं न्यस्तभारो भवेदिति "पुत्रन्यस्तभारः" इति पाठोऽनाकर एव ।

अथ रोधसि दक्षिणोदधेः
श्रितगोकर्णनिकेतमीश्वरम्(१)।
उपवीणयितुं ययौ रवेः
उदयावृत्तिपथेन(२) नारदः॥ ३३॥

अथेति। अथ दक्षिणस्य उदधेः समुद्रस्य रोधसि तीरे श्रितगोकर्णनिकेतनम् अधिष्ठितगोकर्णाख्यस्थानम् ईश्वरं शिवम् उपवीणयितुं वीणया उपगातुम्। सत्यापपाशेत्यादिना वीणाशब्दादुपगानार्थे णिच्प्रत्ययः, ततस्तुमुन्। नारदः देवर्षिः(३) रवेः सम्बन्धिना उदयावृत्तिपथेन आकाशमार्गेण ययौ॥ ३३॥

---

(1) Gokarna means those, whose eyes are the same with their ears, *i. e.* serpents or Nagas. Should we understand by it Nagpur, not that Nagpur, which is situated in central India, but another on the Coromandel coast not yet identified? It is probably identical with Nagpura, the capital of the Pandya Kingdom. See Stanza 59, Canto VI.

(२) उदयश्च आवृत्तिश्च उदयावृत्ती तयोः पन्थाः। यद्वा उदयः उदयाचले आविर्भावः आवृत्तिः भ्रमित्वा पुनस्तत्र प्रत्यागमनं तयोः पन्थाः। Sankara reads उदगावृत्तिपथेन and explains "by the path of the son's return from the north, *i. e.* from north to south, and in the sky, not along the ground."

(३) ऋषीणान्तु त्रैविध्यं; यदुक्तं—"ब्रह्मर्षयः पूर्वं तेभ्यो देवर्षयः पुनः। राजर्षयः पुनस्तेभ्य ऋषिप्रकृतयस्त्रयः। तेभ्यः ऋषिप्रकृतयः ऋषिभिः मण्डितास्तथैः; काश्यपेषु वशिष्ठेषु तथा भृग्वङ्गिरःस्वपि। अत्रेयेषु आदन्ते गोत्रेषु ब्रह्मवादिनः। यस्मादृषन्ति ब्रह्माणं तेन ब्रह्मर्षयः स्मृताः। धर्मस्याथ पुलस्त्यस्य क्रतोश्च पुलहस्य च। प्रत्यूषस्य प्रभासस्य काश्यपस्य तथा पुनः। देवर्षयः सुतास्तेषां नामतस्तान्निबोधत। देवर्षी धर्मपुत्रौ तु नरनारायणावुभौ। बालखिल्याः क्रतोः पुत्राः कर्दमः पुलहस्य तु। कुबेरश्चैव पौलस्त्यः प्रत्यूषस्याचलः स्मृतः। पर्वतो नारदश्चैव कश्यपस्यात्मजावुभौ। ऋषन्ति देवान् यस्मात्ते तस्माद्देवर्षयः स्मृताः। मानवे वैष्णवे वंशे ऐडे वंशे च ये नृपाः। ऐडे ऐक्ष्वाके

कुसुमैर्ग्रथितामपार्थिवैः
स्रजमातोद्यशिरोनिवेशिताम्।
अहरत् किल तस्य वेगवान्
अधिवासस्पृहयेव(१) मारुतः॥ ३४॥
भ्रमरैः कुसुमानुसारिभिः।
परिकीर्णा परिवादिनी मुनेः।

कुसुमैरिति। अपार्थिवैः दिव्यैः इत्यर्थः। कुसुमैः ग्रथितां रचितां तस्य नारदस्य आतोद्यस्य वाद्यस्य वीणायाः शिरसि निवेशिताम्। "चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्" इत्यमरः। स्रजं मालां वेगवान् मारुतः अधिवासे वासनायां स्पृहया इव स्रजा स्वाङ्गं संस्कर्त्तुम् इत्यर्थः। "संस्कारो गन्धमाल्याद्यैर्यः स्यात् तदधिवासनम्" इत्यमरः। अहरत् किल, किलेत्यैतिह्ये॥ ३४॥

भ्रमरैरिति। कुसुमानुसारिभिः पुष्पानुयायिभिः भ्रमरैः परिकीर्णा व्याप्ता मुनेः नारदस्य परिवादिनी वीणा। "वीणा तु वल्लकी। विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी"

ज्ञेया राजर्षयस्तु ते। क्षत्रिय रञ्जनात् यस्मात् प्रजा राजर्षयस्ततः। ब्रह्मलोकप्रतिष्ठास्तु स्मृता ब्रह्मर्षयोऽमलाः। देवलोकप्रतिष्ठाश्च ज्ञेया देवर्षयः शुभाः। इन्द्रलोकप्रतिष्ठास्तु ये वै राजर्षयो मताः"। इति वायुपुराणे।

(१) "अधिवासो गन्धपुष्पादिकृतः संस्कारः तत्स्पृहया इव। अनया स्रजा स्वमङ्गमपि संस्कर्तुं भवान्नीव्याग्रहेण" इति। "यद्यपि चातोद्यशब्दश्चतुर्विधे वाद्ये वर्तते, तथाप्यत्र प्रकरणात् वीणावाची" इति दिनकरः।

दृदृशे पवनावलेपजं (१)
सृजती बाष्पमिवाञ्जनाविलम् ॥ २५ ॥
अभिभूय विभूतिमार्त्तवीं
मधुगन्धातिशयेन वीरुधाम्।
नृपतेरमरस्रगाप सा
दयितोरुस्तनकोटिसुस्थितिम् ॥ २६ ॥
क्षणमात्रसखीं सुजातयोः
स्तनयोस्तामवलोक्य विह्वला।

इत्यमरः। पवनस्य अवलेपः अधिक्षेपः तज्जम् अञ्जनेन आविलं कलुषं बाष्पम् अश्रु सृजती मुञ्चती इव ददृशे दृष्टा। परिभूताः स्त्रियोऽपि हि रुदन्ति इति भावः ॥ २५ ॥

अभिभूयेति। सा अमरस्रक् दिव्यमाला मधुगन्धयोः मकरन्दसौरभयोः अतिशयेन आधिक्येन वीरुधां लतानाम्। "लता प्रतानिनी वीरुत्" इत्यमरः। ऋतोः मासाम् आर्त्तवीम् ऋतुसम्बन्धिनीं विभूतिं समृद्धिम् अभिभूय नृपतेः दयितायाः इन्दुमत्याः उर्व्वोः विशालयोः स्तनयोः कोटी चूचुकौ तयोः सुस्थितिं स्थानम् आप ॥ २६ ॥

क्षणमिति। सुजातयोः सुजन्मनोः सुन्दरयोः इत्यर्थः स्तनयोः क्षणमात्रसखीं तां स्रजम् अवलोक्य विह्वला परवशा

---

(१) "वातपराभवभवम्" इति वल्लभः।

निमिमील नरोत्तमप्रिया
हृतचन्द्रा तमसेव कौमुदी ॥ ३७ ॥
वपुषा करणोज्झितेन सा
निपतन्ती पतिमप्यपातयत् ।
ननु तैलनिषेकबिन्दुना(१)
सह दीपार्च्चिरुपैति मेदिनीम् ॥ ३८ ॥

नरोत्तमप्रिया इन्दुमती, तमसा राहुणा । "तमस्तु राहुः स्वर्भानुः" इत्यमरः । हृतचन्द्रा कौमुदी इव, निमिमील ममार । "निमीलो दीर्घनिद्रा च" इति हलायुधः ॥ ३७ ॥

वपुषेति । करणैः इन्द्रियैः उज्झितेन(२) । "करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः । वपुषा निपतन्ती सा इन्दुमती पतिम् अजम् अपि अपातयत् पातयतिस्म । तथाहि, निषिच्यते निषेकः तैलस्य निषेकः तैलनिषेकः क्षारतैलम् इत्यर्थः । तस्य बिन्दुना सह दीपार्च्चिः दीपज्वाला मेदिनीं भुवम् उपैति ननु उपैत्येव । नन्वित्यवधारणे । "प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः ॥ ३८ ॥

(१) यदा खलु स्वयमी वर्त्तिः तैलाधारात् भूमौ पतति, तदा तस्या दीपमार्गं तैलमपि तामनुसरतीत्यर्थः ।

(२) The Bombay Edition reads "करणं इन्द्रियोपकारितं चेतस' तेनोज्झितेन" ।

उभयोरपि पार्श्ववर्त्तिनां
तुमुलेनार्त्तरवेण वेजिताः ।
विहगाः कमलाकरालयाः
समदुःखा इव तत्र चुक्रुशुः ॥ ३९ ॥

नृपतेर्व्यजनादिभिस्तमः
नुनुदे सा तु तथैव संस्थिता ।
प्रतिकारविधानमायुषः
सति शेषे हि फलाय कल्पते ॥ ४० ॥

उभयोरिति । उभयोः दम्पत्योः पार्श्ववर्त्तिनां परिजनानां तुमुलेन सङ्कुलेन आर्त्तरवेण करुणस्वनेन वेजिताः भीताः कमलाकरालयाः सरःस्थिताः विहगाः हंसादयः अपि तत्र उपवने समदुःखाः इव चुक्रुशुः ॥ ३९ ॥

नृपतेरिति । नृपतेः अजस्य तमः अज्ञानं व्यजनादिभिः साधनैः नुनुदे अपसारितं सा तु इन्दुमती तथैव संस्थिता मृता। तथाहि, प्रतिकारविधानं चिकित्सा आयुषः जीवितकालस्य शेषे सति विद्यमाने। "आयुर्जीवितकालो ना" इत्यमरः। फलाय कल्पते आरोग्याय भवति नान्यथा। नृपतेरायुःशेष-सद्भावात् प्रतीकारस्य साफल्यं तस्यास्तु तदभावात् वैफल्यम् इत्यर्थः ॥ ४० ॥

प्रतियोजयितव्यवल्लकी-
समवस्थामथ(१) सत्त्वविप्लवात् ।
स निनाय नितान्तवत्सलः
परिगृह्योचितमङ्कमङ्गनाम् ॥ ४१ ॥
पतिरङ्कनिषण्णया तया
करणापायविभिन्नवर्णया ।
समलक्ष्यत बिभ्रदाविलां
मृगलेखामुषसीव चन्द्रमाः ॥ ४२ ॥
विललाप स वाष्पगद्गदं
सहजामप्यपहाय धीरताम् ।

प्रतीति। अथ सत्त्वस्य चैतन्यस्य विप्लवात् विनाशात् हेतोः। "द्रव्यासुव्यवसायेषु सत्त्वम्" इत्यमरः। प्रतियोजयितव्या तन्त्रिभिः योजनीया न तु योजितत न्त्री इत्यर्थः या वल्लकी वीणा तस्याः समा समवस्था अवस्था दशा यस्याः ताम् अङ्गनां वनितां नितान्तवत्सलः अतिप्रेमवान् स अजः परिगृह्य हस्ताभ्यां गृहीत्वा उचितं परिचितम् अङ्कम् उत्सङ्गं निनाय नीतवान् ॥ ४१ ॥

पतिरिति। पतिः अजः अङ्कनिषण्णया करणानाम् अपायेन अपगमेन विभिन्नवर्णया विच्छायया तया, उषसि आविलां मृगलेखां बिभ्रत् चन्द्रमाः इव, समलक्ष्यत इत्युपमा ॥ ४२ ॥

विललापेति। स अजः सहजां स्वाभाविकीम् अपि धीरतां

(१) वार्तावार्तान्तरेणैव अवारस्य चीपः।

अभितप्तमयोऽपि मार्दवं
भजते कैव कथा शरीरिषु ॥ ४३ ॥
कुसुमान्यपि गात्रसङ्गमात्
प्रभवन्त्यायुरपोहितुं यदि ।
न भविष्यति हन्त साधनं
किमिवान्यत् प्रहरिष्यतो विधेः ॥ ४४ ॥
अथवा मृदु वस्तु हिंसितुं
मृदुनैवारभते प्रजान्तकः ।

धैर्यम् अपहाय वाष्पेण गद्गदं विशीर्णाक्षरं यथा तथा विललाप परिदेवितवान् । "विलापः परिदेवनम्" इत्यमरः । अभितप्तम् अग्निना सन्तप्तम् अयः अपि मार्दवं मृदुत्वं भजते, शरीरिषु देहिषु अभिसन्तप्तेषु इति शेषः विषये का एव कथा वार्त्ता अनुक्तसिद्धम् इत्यर्थः ॥ ४३ ॥

कुसुमानीति । कुसुमानि पुष्पाणि अपि । अपिशब्दो नितान्तमार्दवद्योतनार्थः । गात्रसङ्गमात् देहसंसर्गात् आयुः अपोहितुम् अपहर्तुं प्रभवन्ति यदि । हन्त विषादे । "हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः" इत्यमरः । प्रहरिष्यतः विधेः अन्यत् कुसुमातिरिक्तं किम् इव वस्तु । इवशब्दो वाक्यालङ्कारे कीदृशम् इत्यर्थः । साधनं न भविष्यति सर्व्वमपि साधनं भविष्यत्येव इत्यर्थः ॥ ४४ ॥

अथवेति । अथवा पश्चात्सर्गे प्रजान्तकः कालः मृदु कोमलं

हिमसेकविपत्तिरत्र मे
नलिनी पूर्वनिदर्शनं मता ॥ ४५ ॥
स्रगियं यदि जीवितापहा
हृदये किं निहिता न हन्ति माम्।
विषमप्यमृतं क्वचिद्भवेत्
अमृतं वा विषमीश्वरेच्छया ॥ ४६ ॥
अथवा मम भाग्यविप्लवात्
अशनिः कल्पित एष वेधसा।
यदनेन तरुर्न पातितः
क्षपिता तद्विटपाश्रया लता ॥ ४७ ॥

वस्तु मृदुना एव वस्तुना हिंसितुं हन्तुम् आरभते उपक्रमते। अत्रार्थे हिमसेकेन तुषारनिष्यन्देन विपत्तिः यस्याः सा नलिनी मे पूर्वं प्रथमं निदर्शनम् उदाहरणं मता ॥ ४५ ॥

स्रगिति। इयं स्रक् जीवितम् अपहन्तीति जीवितापहा यदि। हृदये वक्षसि। "हृदयं वक्षसि स्वान्ते" इत्यमरः। निहिता सती मां किं न हन्ति। ईश्वरेच्छया क्वचित् प्रदेशे विषम् अपि अमृतं भवेत्, क्वचित् अमृतं वा विषं भवेत्। दैवमेवात्र कारणम् इत्यर्थः ॥ ४६ ॥

अथवेति। अथवा मम भाग्यस्य विप्लवात् विपर्ययात् एषः स्रक् इत्यर्थः। विधेयप्राधान्यात् पुंलिङ्गनिर्देशः। वेधसा विधात्रा

कृतवत्यसि नावधीरणाम्
अपराद्धेऽपि यदा चिरं मयि ।
कथमेकपदे निरागसं
जनमाभाष्यमिमं न मन्यसे ॥ ४८ ॥

ध्रुवमस्मि शठः शुचिस्मिते
विदितः कैतववत्सलस्तव ।
परलोकमसन्निवृत्तये
यदनापृच्छ्य गतासि मामितः(१) ॥ ४९ ॥

अशनिः वैद्युतोऽग्निः कल्पितः । "दम्भोलिरशनिर्द्वयोः" इत्यमरः । यत् यस्मात् अनेन अपि अशनिना प्रसिद्धाशनिना इव तरुः तरुस्थानीयः स्वयम् एव न पातितः किन्तु तस्य तरोः विटपाश्रिता लता क्षपिता नाशिता ॥ ४७ ॥

कृतेति । मयि चिरं भूरिशः अपराद्धे अपि अपराधं कृतवति अपि । राधेः कर्त्तरि क्तः । यदा यस्मात् हेतोः । यदेति हेत्वर्थः, "स्वरादौ पठ्यते यदेति हेतौ" इति गणव्याख्यानात् । अवधीरणाम् अवज्ञां न कृतवती असि । तत् कथम् एकपदे तत्क्षणे । "स्यात् तत्क्षणे एकपदम्" इति विश्वः । निरागसं नितरामनपराधम् इमं जनम् । इममिति स्वात्मनिर्देशः । माम् इत्यर्थः आभाष्यं सम्भाष्यं न मन्यसे ॥ ४८ ॥

ध्रुवमिति । हे शुचिस्मिते शठः गूढविप्रियकारी कैतवेन

(1) This stanza is omitted in the Bombay Edition.

दयितां यदि तावदन्वगात्
विनिवृत्तं किमिदं तया विना ।
सहतां हतजीवितं मम
प्रबलामात्मकृतेन वेदनाम् ॥ ५० ॥
सुरतश्रमसम्भृतो मुखे
ध्रियते स्वेदलवोद्गमोऽपि ते ।

कपटेन वत्सलः कैतववत्सलः इति ध्रुवं निश्चितं तव विदितः त्वया विज्ञातः असि । मतिबुद्धीत्यादिना कर्त्तरि क्तः, क्तस्य च वर्त्तमाने इति कर्त्तरि षष्ठी । कुतः यस्मात् माम् अनापृच्छ्य अनामन्त्र्य इतः अस्मात् लोकात् परलोकम् असन्निवृत्तये अपुनरावृत्तये गता असि ॥ ४८ ॥

दयितामिति । इदं मम हतजीवितं तावत् दयिताम् अन्वगात् अन्वगच्छत् यदि अन्वगात् एव । यद्यत्रावधारणे । पूर्वं मूर्च्छितत्वात् इति भावः । तया विना किं किमर्थं विनिवृत्तं प्रत्यागतं प्रत्यागमनं न युक्तम् इत्यर्थः । अत एव आत्मकृतेन स्वदुश्चेष्टितेन निवृत्तिरूपेण प्रबलां वेदनां सहताम् । स्वयङ्कृतापराधेषु सहिष्णुतैव शरणम् इति भावः ॥ ५० ॥

सुरतेति । सुरतश्रमेण सम्भृतः जनितः स्वेदलवोद्गमः (१) अपि ते तव मुखे ध्रियते वर्त्तते अथच त्वम् आत्मना स्वरूपेण

(१) स्वेदलवोद्गमः स्वल्पस्वेदलवाः "सुरतिचिह्नो भावो द्रष्टव्यम् प्रकाशते" इति व्याप्तादिवर्णः ।

अथ चास्तमिता त्वमात्मना
धिगिमां देहभृतामसारताम् ॥ ५१ ॥
मनसापि न विप्रियं मया
कृतपूर्वं तव किं जहासि माम् ।
ननु शब्दपतिः क्षितेरहं
त्वयि मे भावनिबन्धना रतिः ॥ ५२ ॥
कुसुमोत्खचितान् वलीभृतः
चलयन्(१) भृङ्गरुचस्तवालकान् ।
करभोरु करोति मारुतः
त्वदुपावर्त्तनशङ्कि मे मनः ॥ ५३ ॥

अस्तं नाशम् इता प्राप्ता, अतः कारणात् देहभृताम् प्राणिनाम् इमाम् असारताम् अस्थिरतां धिक् ॥ ५१ ॥

मनसेति। मया मनसा अपि तव विप्रियं न कृतपूर्वं पूर्वं न कृतम् इत्यर्थः। सुप्सुपेति समासः। किं मां जहासि, ननु अहं क्षितेः शब्दपतिः शब्दतः एव पतिः नत्वर्थतः इत्यर्थः भावनिबन्धना अभिप्रायनिबन्धना स्वभावहेतुका मे रतिस्तु त्वयि एव अस्ति इति शेषः ॥ ५२ ॥

कुसुमेति। कुसुमैः उत्खचितान् उत्कर्षेण रचितान् वलीभृतः भङ्गीयुक्तान् भृङ्गरुचः नीलान् तव अलकान् चलयन् कम्पयन् मारुतः हे करभोरु मे मनः त्वदुपावर्त्तनशङ्कि तव

(१) आदिवर्णद्वयलोपात् सकाशादेव बहुतरपाठमिदम्।

तदपोहितुमर्हसि प्रिये
प्रतिबोधेन विषादमाशु मे ।
ज्वलितेन गुहागतं तमः
तुहिनाद्रेरिव नक्तमोषधिः(१) ॥ ५४ ॥

इदमुच्छ्वसितालकं मुखं
तव विश्रान्तकथं दुनोति माम् ।
निशि सुप्तमिवैकपङ्कजं
विरताभ्यन्तरषट्पदस्वनम् ॥ ५५ ॥

पुनरागमने शङ्कावस् करोति त्वदुज्जीवने शङ्कां कारयति इत्यर्थः ॥ ५३ ॥

तदिति । हे प्रिये तत् तस्मात् कारणात् आशु मे विषादं दुःखं, नक्तं रात्रौ ओषधिः ज्योतिराख्या लता ज्वलितेन प्रकाशेन तुहिनाद्रेः गुहागतं तमः इव, प्रतिबोधेन ज्ञानेन अपोहितुं निरसितुम् अर्हसि ॥ ५४ ॥

इदमिति । इदम् उच्छ्वसितालकं चलितचूर्णकुन्तलं विश्रान्तकथं निवृत्तसंलापं तव मुखं, निशि सुप्तं निमीलितं विरतः अभ्यन्तराणाम् अन्तर्वर्त्तिनां षट्पदानां स्वनः यत्र तत् निःशब्दभृङ्गम् इत्यर्थः एकपङ्कजम् इव, मां दुनोति परितापयति ॥ ५५ ॥

(१) "हिमाद्रावोषधयो नक्तं प्रकाशन्ते इति प्रसिद्धिः" इति दिनकरः । See Cumarasambhava Canto I. Stanza 10.

शशिनं पुनरेति शर्वरी
दयिता द्वन्द्वचरं पतत्त्रिणम्।
इति तौ विरहान्तरक्षमौ
कथमत्यन्तगता न मां दहेः ॥ ५६ ॥

नवपल्लवसंस्तरेऽपि ते
मृदु दूयेत यदङ्गमर्पितम्।
तदिदं विषहिष्यते कथं
वद वामोरु चिताधिरोहणम् ॥ ५७ ॥

शशिनमिति। शर्वरी रात्रिः शशिनं चन्द्रं पुनः एति प्राप्नोति, द्वन्द्वीभूय चरतीति द्वन्द्वचरः तं पतत्त्रिणं चक्रवाकं दयिता चक्रवाकी पुनः एति, इति हेतोः तौ चन्द्रचक्रवाकौ विरहान्तरक्षमौ(१) विरहावधिसहौ। "अन्तरमवकाशावधि-परिधानान्तर्धिभेदतादर्थ्ये" इत्यमरः। अत्यन्तगता पुनरावृत्ति-रहिता त्वं तु कथं न मां दहेः अपितु दहेरेव इत्यर्थः ॥ ५६ ॥

नवेति। नवपल्लवसंस्तरे नूतनप्रवालास्तरणे अपि अर्पितं स्थापितं मृदु ते तव यत् अङ्गं शरीरं दूयेत परितप्तं भवेत्। वामौ सुन्दरौ ऊरू यस्याः सा हे वामोरु "वामं स्यात् सुन्दरे सव्ये" इति विश्वः। संहितशफलक्षणेत्यादिना ऊङ्प्रत्ययः। तत् इदम् अङ्गं चितायाः काष्ठसञ्चयस्य अधिरोहणं कथं विषहिष्यते, वद ॥ ५७ ॥

(1) The Bombay Edition reads 'विरहान्तरपि विरहभेदान् क्षमेते इति'।

इयमप्रतिबोधशायिनीं
रशना त्वां प्रथमा रहःसखी ।
गतिविभ्रमसादनीरवा
न शुचा नानुमृतेव लक्ष्यते ॥ ५८ ॥

कलमन्यभृतासु भाषितं
कलहंसीषु मदालसं गतम् ।
पृषतीषु विलोलमीक्षितं
पवनाधूतलतासु विभ्रमाः ॥ ५९ ॥

इयमिति । इयं प्रथमा रहःसखी सुरतसमयेऽप्यनुयानात् इति भावः । गतिविभ्रमसादेन नीरवा विलासोपरमेण निःशब्दा रशना मेखला अप्रतिबोधम् अपुनरुद्बोधं यथातथा शायिनीं मृताम् इत्यर्थः त्वाम् अनु त्वया सह । तृतीयार्थे इत्यनुशब्दस्य कर्म्मप्रवचनीयत्वेन कर्म्मप्रवचनीययुक्ते द्वितीया । शुचा शोकेन मृता इव न लक्ष्यते इति न, लक्ष्यते एव इत्यर्थः । सम्भाव्यनिषेधनिवर्त्तनाय द्वौ प्रतिषेधौ ॥ ५८ ॥

कलमिति, विदिवेति । युग्मम् । अन्यभृतासु कोकिलासु कलं मधुरं भाषितं भाषणम्, कलहंसीषु मदालसं मन्थरं गतं गमनम्, पृषतीषु हरिणीषु विलोलम् ईक्षितं चञ्चला दृष्टिः, पवनेन वायुना आधूतलतासु ईषत्कम्पितलतासु विभ्रमाः विलासाः ॥ ५९ ॥

विदिवोत्सुकयाप्यवेच्य मां
निहिताः सत्यममी गुणास्त्वया।
विरहे तव मे गुरुव्यथं
हृदयं न त्ववलम्बितुं चमाः॥ ६०॥

मिथुनं परिकल्पितं त्वया
सहकारः फलिनी च नन्विमौ।
अविधाय विवाहसत्क्रियाम्
अनयोर्गम्यत इत्यसाम्प्रतम्॥ ६१॥

अमी पूर्वोक्ताः कलभाषणादयः गुणाः, एषु कोकिलादिस्थानेषु इति शेषः। दिदिवोत्सुकया अपि इह जीवन्त्यैव स्वर्गं प्रति प्रस्थितया अपि त्वया माम् अवेक्ष्य विरहासहं विचार्य सत्यं निहिताः मत्प्राणधारणोपायतया स्थापिताः इत्यर्थः तव विरहे गुरुव्यथम् अतिदुःखं मे हृदयम् अवलम्बितुं स्थापयितुं न चमाः न शक्ताः। ते तु त्वत्सङ्गमे एव सुखकारिणः नान्यथा प्रत्युत प्राणानपहरन्ति इति भावः॥ ६०॥

मिथुनमिति। ननु हे प्रिये सहकारः चूतविशेषः फलिनी प्रियङ्गुलता च इमौ त्वया मिथुनं परिकल्पितं मिथुनत्वेन अभ्यमानि। अनयोः फलिनीसहकारयोः विवाहसत्क्रियां विवाहमङ्गलम् अविधाय अकृत्वा गम्यते इति असाम्प्रतम् अयुक्तम्। मातृहीनानां न किञ्चित् सुखमस्ति इति भावः॥ ६१॥

कुसुमं कृतदोहदस्त्वया(१)
यदशोकोऽयमुदीरयिष्यति ।
अलकाभरणं कथन्नु तत्
तव नेष्यामि निवापमाल्यताम्(२) ॥ ६२ ॥
स्मरतेव सशब्दनूपुरं
चरणानुग्रहमन्यदुर्लभम् ।
अमुना कुसुमाश्रुवर्षिणा
त्वमशोकेन सुगात्रि शोच्यसे ॥ ६३ ॥

कुसुममिति । इच्छादिपोषकं दोहदम् । त्वया कृतं दोहदं पादताड़नरूपं यस्य सः अयम् अशोकः यत् कुसुमम् उदीरयिष्यति प्रसविष्यते तव अलकानाम् आभरणम् आभरणभूतं तत् कुसुमं कथं निवापमाल्यतां नेष्यामि । "निवापः पितृदानं स्यात्" इत्यमरः ॥ ६२ ॥

स्मरतेति । अन्यदुर्लभं किन्तु मत्सव्यमेव इत्यर्थः(३) सशब्दं नूपुरं यस्य तं चरणेन अनुग्रहं पादेन ताड़नरूपं स्मरता इव

(१) "सुन्दरीचरणाघातेनाशोकः पुष्पतीति प्रसिद्धिरतः पादाघात एवाशोकस्य दोहदं इत्यर्थः" इति दिनकरः । "पादाघातादशोको विकसति बकुलं योषितामास्यमद्यैः" इत्यादि साहित्यदर्पणे द्रष्टव्यम् ।

(२) माल्यस्य निवापत्वं आश्वलायने प्रतिपादितं । "एतस्मिन् काले गन्धमाल्यधूपदीपाच्छादनानां प्रदानम्" इति श्रवणात् । See A'svala'yana IV. 8. 1.

(३) "किन्तु मत्सव्यमिव इत्यर्थः" This is not found in the Bombay Edition and seems to be an inappropriate interpolation.

तव निःश्वसितानुकारिभिः
वकुलैरर्द्धचितां समं मया ।
असमाप्य विलासमेखलां(१)
किमिदं किन्नरकण्ठि सुप्यते ॥ ६४ ॥
समदुःखसुखः सखीजनः
प्रतिपच्चन्द्रनिभोऽयमात्मजः(२) ।

कुसुमानि एव अश्रूणि तद्वर्षिणा अमुना अशोकेन हे सुगात्रि अङ्गगात्रकण्ठेभ्यश्चेति वक्तव्यात् ङीप्। त्वं शोच्यसे ॥ ६३ ॥

तवेति। तव निःश्वसितानुकारिभिः वकुलैः वकुलकुसुमैः मया समं सार्द्धम् अर्द्धचिताम् अर्द्धं यथा तथा रचितां विलासमेखलाम् असमाप्य किन्नरस्य देवयोनिविशेषस्य कण्ठः इव कण्ठः यस्याः तत्सम्बुद्धिः हे किन्नरकण्ठि अङ्गगात्रकण्ठेभ्यश्चेति ङीप्। किम् इदं सुप्यते। वचिस्वपीत्यादिना सम्प्रसारणम्। अनुचितमिदं स्वपनम् इत्यर्थः ॥ ६४ ॥

समेति। सखीजनः समदुःखसुखः त्वद्दुःखेन दुःखी त्वत्सुखेन सुखी इत्यर्थः। अयम् आत्मजः बालः प्रतिपच्चन्द्रनिभः दर्शनीयः वर्द्धिष्णुश्च इत्यर्थः। प्रतिपच्छब्देन द्वितीया लक्ष्यते

(१) विलासस्य या मेखला काञ्ची सा विलासमेखला। विभ्रमघटनार्थं गुम्फिता रशना इत्यर्थः।

(२) "बहिर्दृश्यत्वात् सर्वलोकैरीक्षणेन दृश्यमानत्वात्। "प्रतिपच्चन्द्र" इत्यत्र प्रतिपत्सामीप्यवशतया द्वितीयाचन्द्रो विवक्षितः। यद्यपि प्रतिपद्यपि चन्द्रकास्ति तथापि सूक्ष्मत्वात् न दृश्यते" इति दिनकरः।

अहमेकरसस्तथापि ते
व्यवसायः प्रतिपत्तिनिष्ठुरः(१) ॥ ६५ ॥
धृतिरस्तमिता रतिश्च्युता
विरतं गेयमृतुर्निरुत्सवः
गतमाभरणप्रयोजनं
परिशून्यं शयनीयमद्य मे ॥ ६६ ॥

प्रतिपदि चन्द्रस्यादर्शनात्। अहम् एकरसः अभिन्नरागः। "शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः" इत्यमरः। तथापि जीवितसामग्रीसत्त्वेऽपि इत्यर्थः ते तव व्यवसायः अस्मत्परित्यागरूपो व्यापारः प्रतिपत्त्या निश्चयेन निष्ठुरः। "प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च। प्रागल्भ्ये च प्रबोधे च" इति विश्वः। स्मर्तुं न शक्यं किमुताधिकर्त्तुम् इति भावः ॥ ६५ ॥

धृतिरिति। अद्य मे धृतिः धैर्यं प्रतीतिः वा अस्तं नाशम् इता, रतिः च्युता गता, गेयं गानं विरतम्, ऋतुः वसन्तादिः निरुत्सवः, आभरणानां प्रयोजनं गतम् अपगतं, शेते अस्मिन्निति शयनीयम् तल्पम्। कृत्यल्युटो बहुलमित्यधिकरणार्थे अनीयर् प्रत्ययः। परिशून्यम्। त्वां विना सर्वमपि निष्फलम् इति भावः ॥ ६६ ॥

(१) "एतस्मिंस्तथे यद्यपि जीवितामसत्त्वं वर्त्तते तथापि ते व्यवसायो मरणोद्योगः प्रतिपत्तौ बोधे निष्ठुरः क्रूरः पराङ्मुख इत्यर्थः" इति दिनकरः। "तथापि ते तव मरणाय प्रतिपत्तिनिष्ठुरः स्वभावनिष्ठुरः इति वल्लभः।

गृहिणी सचिवः सखी मिथः
प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना
हरता त्वां वद किं न मे हृतम्॥ ६७॥

मदिराक्षि मदाननार्पितं
मधु पीत्वा रसवत् कथं नु मे।
अनुपास्यसि वाष्पदूषितं
परलोकोपनतं जलाञ्जलिम्॥ ६८॥

गृहिणीति। त्वम् एव गृहिणी दाराः सचिवः बुद्धिसहायो मन्त्री मिथः रहसि सखी नर्मसचिवः ललिते मनोहरे कलाविधौ वादित्रादिचतुःषष्टिकलाप्रयोगे प्रियशिष्या, अतः त्वां समष्टिरूपां हरता अत एव करुणाविमुखेन कृपाशून्येन मृत्युना मे मत्सम्बन्धि किं न हृतं वद सर्व्वमपि हृतम् इत्यर्थः॥ ६७॥

मदिरेति। माद्यति अनया इति मदिरा(१) लोकप्रसिद्धा तथापि "मार्य्यो मदिरलोचना" इत्यादिप्रयोगदर्शनात् माद्यति आभ्याम् इति मदिरे अक्षिणी यस्याः तत्सम्बुद्धिः हे मदिराक्षि मदाननेन अर्पितं रसवत् स्वादुतरं मधु मद्यं पीत्वा वाष्पदूषितम् अद्भुतम् परलोकोपनतं परलोकप्राप्तं मे जलाञ्जलिं कथं नु

(१) यद्वा मदिरा मत्तखञ्जनः तस्या अक्षिणीव अक्षिणी यस्याः इति।

विभवेऽपि सति त्वया विना
सुखमेतावदजस्य गण्यताम्।
अहृतस्य विलोभनान्तरैः
मम सर्व्वे विषयास्त्वदाश्रयाः ॥ ६९ ॥
विलपन्निति कोशलाधिपः
करुणार्थग्रथितं प्रियां प्रति।
अकरोत् पृथिवीरुहानपि
स्रुतशाखारसवाष्पदूषितान्(१) ॥ ७० ॥

अनु अनन्तरं पास्यसि। तदनन्तरमिदमनर्हम् इत्यर्थः। यथाह भट्टमल्लः, "अनुपानं हिमजलं यवगोधूमनिर्म्मिते। दधि मद्ये विषे द्राक्षे पिष्टे पिष्टमयेऽपि च" ॥ इति। तच्च इहैव युज्यते। इदं तूदकं लोकान्तरोपयोगि चेत्यायुर्वेदविरोधात् कथमनुपास्यसि इति भावः ॥ ६८ ॥

विभवे इति। विभवे ऐश्वर्य्ये सति अपि त्वया विना अजस्य एतावत् एव सुखं गण्यताम् यावत् त्वया सह भुक्तं ततः अन्यत् किञ्चिन्नविष्यति इत्यर्थः। कुतः विलोभनान्तरैः विषयान्तरैः अहृतस्य अनाकृष्टस्य मम सर्व्वे विषयाः भोगादयः त्वदाश्रयाः त्वदधीनाः त्वां विना मे न किञ्चिद्रोचते इत्यर्थः ॥ ६९ ॥

विलपन्निति। कोशलाधिपः अजः इति, करुणः शोकरसः स एव अर्थः तेन ग्रथितं सम्बद्धं यथा तथा, प्रियां प्रति विलपन्

(१) दुहितामृ इति पाठान्तरम्।

अथ तस्य कथञ्चिदङ्कतः
स्वजनस्तामपनीय सुन्दरीम् ।
विससर्ज्ज तदन्त्यमण्डनाम्(१)
अनलायागुरुचन्दनैधसे ॥ ७१ ॥
प्रमदामनु संस्थितः शुचा
नृपतिः सन्निति वाच्यदर्शनात् ।

पृथिवीरुहान् वृक्षान् अपि सुतः शाखारसाः मकरन्दाः एव वाष्पाः तैः दूषितान् अकरोत्। अचेतनानप्यरोदयदित्यर्थः ॥७०॥

अथेति। अथ स्वजनः बन्धुवर्गः तस्य अजस्य अङ्कतः उत्सङ्गात् कथञ्चित् अपनीय तत् दिव्यकुसुमम् एव अन्त्यं मण्डनम् अलङ्कारः यस्याः तां तां सुन्दरीम् अगुरूणि चन्दनानि एधांसि यस्य तस्मै अनलाय अग्नये विससर्ज्ज विसृष्टवान्। क्रियाग्रहणमपि कर्त्तव्यमिति क्रियामात्रप्रयोगे सम्प्रदानत्वाच्चतुर्थी ॥ ७१ ॥

प्रमदामिति। नृपतिः सन् अपि विद्वान् अपि शुचा शोकेन प्रमदाम् अनु प्रमदया सह संस्थितः मृतः इति वाच्यदर्शनात् निन्दादर्शनात् देव्या इन्दुमत्या सह शरीरम् अग्निसात् अन्व-

---

(१) Dinakara reads with Vallabha तदान्त्यमण्डना and explains "तदा क्रियमाणं अन्त्यं प्रेतोचितं मण्डनं यस्याः सा तदान्त्यमण्डना"। अन्त्यमण्डनं यथा:- "प्रेतं स्नापयित्वा नलदेनानुलिप्य नलदमालां अवमालां वा प्रतिमुच्य मूर्द्धलोमनखानामा पादमात्रमवच्छाद्य ... पादमात्राहतेषु परिधापयेत्"। See Asvalayana Parisishta III 1.

न चकार शरीरमग्निसात्
सह देव्या न तु जीविताशया ॥ ७२ ॥
अथ तेन दशाहतः(१) परे
गुणशेषामुपदिश्य भामिनीम् ।
विदुषा विधयो महर्द्धयः(२)
पुर एवोपवने समापिताः ॥ ७३ ॥

धीनं न चकार। तदधीनवचने इति सातिप्रत्ययः। जीविताशया प्राणेच्छया तु न ॥ ७२ ॥

अथेति। अथ विदुषा तेन अजेन गुणाः एव शेषाः यस्याः तां गुणशेषां भामिनीम् इन्दुमतीम् उपदिश्य उद्दिश्य दशानाम् अह्नां समाहारः दशाहः। तद्धितार्थेत्यादिना समासः, समाहारस्यैकत्वादेकवचनम्, "राजाहःसखिभ्यष्टच्" इति टच्, रात्राह्नाहाः पुंसीति पुंवत्, ततस्तसिल्। तस्मात् दशाहतः परे

(१) "दशाहोऽत्र विधिविशेषः न तु दशदिनानि" इति वल्लभः। दशाहकृत्यमाश्वलायने विहितं—"अथ दशमेऽहनि कर्त्ता अश्माने चतुरस्रां वेदिं कृत्वा त्रीन् उपलान् अश्मनस्थापितान् दक्षिणाग्रसंस्थान् स्थापयित्वा मध्यमे प्रेतं उत्तरे सखीन् दक्षिणे यममित्यावाह्य उपलान् अलङ्कृत्यार्चयित्वा तदग्रे तेभ्य एकैकं पिण्डं दत्त्वा उदकुम्भं कमण्डलुं पादुकाञ्च निवेद्य सर्व्वाण्यलङ्करणानि दद्यात्। अथ केशादि वापयित्वा ज्ञातिबान्धवाः आताशौच् भौमसलीन् मंत्राय दद्युः भैषामुपलनियमः। अथ पुरन्ध्राः अभ्यक्तस्नाताः शुक्लवाससवसनौ आच्छादयेयुरग्य पूर्वं उपलमयुदकुम्भं कृत्वा अग्न्यागारं प्रविशेयुः अथ नार्द्रं न वा वर्त्मस्थं गृहं वा प्रवेशयेत्"। इति गृह्यपरिशिष्टे चतुर्थाध्यायस्य षष्ठं सूत्रम्।

(२) "महर्द्धयः भूरिदक्षिणाः" इति दिनकरः।

स विवेश पुरीं तया विना
क्षणदापायशशाङ्कदर्शनः ।
परिवाहमिवावलोकयन्
स्वशुचः पौरवधूमुखाश्रुषु ॥ ७४ ॥
अथ तं सवनाय दीक्षितः
प्रणिधानाद्गुरुराश्रमस्थितः ।

कर्तव्याः महर्द्धयः महासमृद्धयः विधयः क्रियाः पुरः पुर्याः उपवने एव समापिताः सम्पूर्णमनुष्ठिताः । दशाहतः इत्यत्र "विप्रः शुध्येद्दशाहेन द्वादशाहेन भूमिपः" इति वचनविरोधो नाशङ्कनीयः तस्य निर्गुणक्षत्रियविषयत्वात् । गुणवत्क्षत्रियस्य दशाहेन शुद्धिमाह पराशरः, "क्षत्रियस्तु दशाहेन स्वधर्मनिरतः शुचिः" इति । सूच्यतेऽस्यापि गुणवत्त्वं विदुरित्यनेन ॥ ७३ ॥

स इति । तया इन्दुमत्या विना क्षणदायाः रात्रेः अपाये अपगमे यः शशाङ्कः चन्द्रः सः इव दृश्यते इति कर्मार्थे ल्युट् । प्रातःकालिकचन्द्र इव दृश्यमानः इत्यर्थः स अजः पौरवधूमुखाश्रुषु स्वशुचः स्वशोकस्य परिवाहं जलोच्छ्वासम् इव अवलोकयन् । "जलोच्छ्वासाः परीवाहाः" इत्यमरः । स्वदुःखपूरातिशयम् इव पश्यन् पुरीं विवेश । वधूग्रहणात् तस्यामिन्दुमत्यां सख्याभिमानात् अजसमानदुःखसूचनात्परीवाहोक्तिर्निर्वहति ॥ ७४ ॥

अथेति । अथ सवनाय यागाय दीक्षितः गुरुः वशिष्ठः आश्रमे स्वकीयाश्रमे स्थितः सन् तम् अजम् अभिषङ्गजड़ं दुःख-

अभिषङ्गजड़ं विजज्ञिवान्
इति शिष्येण किलान्ववोधयत् ॥ ७५ ॥
असमाप्तविधिर्यतोमुनिः
तव विद्वानपि तापकारणम्।
न भवन्तमुपस्थितः स्वयं
प्रकृतौ स्थापयितुं पथश्च्युतम्(१) ॥ ७६ ॥
मयि तस्य सुवृत्त वर्त्तते
लघुसन्देशपदा सरस्वती।

मोहितं प्रणिधानात् चित्तैकाग्र्यात् विजज्ञिवान् ज्ञातवान्। क्वसुश्चेति क्वसुप्रत्ययः। इति वक्ष्यमाणप्रकारेण शिष्येण अन्ववोधयत् किल। बुधेर्ण्यन्तात् णिचि लङ् ॥ ७५ ॥

वसिष्ठशिष्य आह असमाप्तेति। यतः हेतोः मुनिः असमाप्तविधिः असमाप्तक्रतुः ततः तव तापकारणं दुःखहेतुं कलत्रनाशरूपं विद्वान् जानन् अपि। विदेः शतुर्वसुरिति वस्वादेशः, न लोकेत्यादिना षष्ठीप्रतिषेधः। पथः च्युतं स्वभावात् भ्रष्टं भवन्तं प्रकृतौ स्वभावे स्थापयितुं समाश्वासयितुम् इत्यर्थः स्वयं न उपस्थितः न आगतः ॥ ७६ ॥

मयीति। हे सुवृत्त सदाचार सन्दिश्यते इति सन्देशः सन्देष्टव्यार्थः तस्य पदानि वाचकानि लघूनि संक्षिप्तानि सन्देश-

(१) ततश्च्युतमिति क्वचित् पाठः, ततो हेतोरित्यर्थः।

शृणु विश्रुतसत्वसार तां
हृदि चैनामुपधातुमर्हसि ॥ ७७ ॥
पुरुषस्य पदेष्वजन्मनः (१)
समतीतञ्च भवच्च भावि च ।
स हि निष्प्रतिघेन चक्षुषा
त्रितयं ज्ञानमयेन पश्यति ॥ ७८ ॥
चरतः किल दुश्चरं तपः
तृणविन्दोः परिशङ्कितः पुरा ।

पदानि यस्यां सा लघुसन्देशपदा तस्य मुनेःसरस्वती वाक् मयि वर्त्तते, हे विश्रुतसत्त्वसार प्रख्यातधैर्य्यातिशय तां सरस्वतीं शृणु, एनां वाचं हृदि उपधातुं धर्त्तुं च अर्हसि ॥ ७७ ॥

वक्ष्यमाणार्थानुगुणं मुनेः सर्व्वज्ञत्वं तावदाह, पुरुषस्येति । अजन्मनः पुरुषस्य पुराणपुरुषस्य भगवतः त्रिविक्रमस्य पदेषु विक्रमेषु त्रिभुवनेष्वपि इत्यर्थः समतीतं भूतञ्च भवत् वर्त्तमानञ्च भावि भविष्यच्च इति त्रितयं स मुनिः निष्प्रतिघेन अप्रतिबन्धेन ज्ञानमयेन चक्षुषा ज्ञानदृष्ट्या पश्यति हि, अतस्तदुक्तिषु न संशयितव्यम् इत्यर्थः ॥ ७८ ॥

चरत इति । पुरा किल दुश्चरं तीव्रं तपः चरतः तृणविन्दोः तृणविन्दुनामकात् कस्माश्चित् ऋषेः परिशङ्कितः भीतः। कर्त्तरि

(१) "भूमन्दरोदरेषु" इति दिनकरः ।

प्रजिघाय समाधिभेदिनीं
हरिरस्मै हरिणीं(१) सुराङ्गनाम् ॥ ७९ ॥
स तपःप्रतिबन्धमन्युना
प्रमुखाविष्कृतचारुविभ्रमाम् ।
अशपद्भव मानुषीति तां
शमवेलाप्रलयोर्म्मिणा भुवि(२) ॥ ८० ॥
भगवन् परवानयं जनः
प्रतिकूलाचरितं क्षमस्व मे ।

मः, भीत्रार्थानां भयहेतुरित्यपादानात् पञ्चमी । हरिः इन्द्रः समाधिभेदिनीं तपोविघातिनीं हरिणीं नाम सुराङ्गनाम् अस्मै तृणबिन्दवे प्रजिघाय प्रेरितवान् ॥ ७९ ॥

स इति । सः मुनिः शमः शान्तिः एव वेला मर्य्यादा तस्याः प्रलयोर्म्मिणा प्रलयकालतरङ्गेण शमविघातकेन इत्यर्थः । "अब्ध्यम्बुविकृतौ वेला कालमर्य्यादयोरपि" इत्यमरः । तपसः प्रतिबन्धेन विघ्नेन यः मन्युः क्रोधः तेन हेतुना प्रमुखे अग्रे आविष्कृतचारुविभ्रमां प्रकाशितमनोहरविलासां तां हरिणीं भुवि भूलोके मानुषी मनुष्यस्त्री भव इति अशपत् ॥ ८० ॥

भगवन्निति । हे भगवन् महर्षे अयं जनः परोऽस्यास्तीति

(1) This Harini was an Apsara and not identical with one, who is thus described in the Visnupurana—"तेभ्यः प्रभाददं जज्ञे शिनका हरिणी तथा । ते सर्वे ब्रह्मवादिन्यो योगिन्यो चाप्यभूं द्विज" इति ।

(२) भुवमिति पाठान्तरम् ।

इति चोपनतां क्षितिस्पृशं
कृतवानासुरपुष्पदर्शनात् ॥ ८१ ॥
क्रथकैशिकवंशसम्भवा
तव भूत्वा महिषी चिराय सा ।
उपलब्धवती दिवश्च्युतं
विवशा शापनिवृत्तिकारणम् ॥ ८२ ॥
तदलं तदपायचिन्तया
विपदुत्पत्तिमतामुपस्थिता ।

स्वामित्वेन परवान् पराधीनः । अयमिति आत्मनिर्देशः, अहं पराधीना इत्यर्थः । मे मम प्रतिकूलाचरितम् अपराधं क्षमस्व इति अनेन प्रकारेण उपनतां शरणागतां च हरिणीम् आसुरपुष्पदर्शनात् सुरपुष्पदर्शनपर्यन्तं क्षितिं स्पृशतीति क्षितिस्पृक् तां क्षितिस्पृशं मानुषीं कृतवान् दिव्यपुष्पदर्शनं शापावधिरित्यनुगृहीतवान् इत्यर्थः ॥ ८१ ॥

क्रथकेति । क्रथकैशिकानां राज्ञां वंशे सम्भवः यस्याः सा हरिणी तव महिषी अभिषिक्ता स्त्री । "कृताभिषेका महिषी" इत्यमरः । भूत्वा चिराय दिवः स्वर्गात् च्युतं शापनिवृत्तिकारणं सुरपुष्परूपम् उपलब्धवती विवशा अभूत् इति शेषः मृता इत्यर्थः ॥ ८२ ॥

तदिति । तत् तस्मात् तस्याः अपायचिन्तया अलं, तस्या

वसुधेयमवेक्ष्यतां त्वया
वसुमत्या हि नृपाः कलत्रिणः ॥ ८३ ॥
उदये मदवाच्यमुज्झता
श्रुतमाविष्कृतमात्मवत् त्वया ।
मनसस्तदुपस्थिते ज्वरे(१)
पुनरक्लीवतया(२) प्रकाश्यताम् ॥ ८४ ॥

मरणं न चिन्त्यम् इत्यर्थः । निषेधक्रियां प्रति करणत्वात् चिन्तयेति तृतीया । कुतो न चिन्त्यमत आह, उत्पत्तिमतां जन्मवतां विपत् विपत्तिरुपस्थिता सिद्धा, जातस्य हि ध्रुवो मृत्युः इत्यर्थः । तथापि कलत्ररहितस्य किं जीवितेन तत्राह, त्वया इयं वसुधा भूमिः अवेक्ष्यतां पाल्यतां, हि यस्मात् नृपाः वसुमत्या पृथिव्या कलत्रिणः कलत्रवन्तः, अतो न शोचितव्यम् इत्यर्थः ॥ ८३ ॥

उदय इति । उदये अभ्युदये सति मदेन यत् वाच्यं निन्दा तत् उज्झता परिहरता सति अपि मदहेतौ अनवमाद्यता त्वया यत् आत्मवत् अध्यात्मप्रचुरं श्रुतं शास्त्रं तज्जनितं ज्ञानम् इति यावत् आविष्कृतं प्रकाशितं तत् श्रुतं मनसः ज्वरे सन्तापे उप-

(१) "राज्याधिगमने यत्तवाकीर्त्तिर्नाभूत् तेन श्रुतं प्रकटीकृतं साम्प्रतं त्वधिगतसन्तापपरित्यागेन तत् श्रुतं यत्नेन प्रकटं कुरु इत्यर्थः" इति दिनकरः ।

(२) यथा अक्लीवतया वैकल्यं विना इत्यर्थः तत् श्रुतं प्रकटय मानससन्तापहरणस्य तदेव प्रकाशं कुरु इति तात्पर्यार्थः ।

रुदता कुत एव सा पुनः
भवता नानुमृतापि लभ्यते।
परलोकजुषां स्वकर्म्मभिः
गतयो भिन्नपथा हि(१) देहिनाम्॥ ८५॥
अपशोकमनाः कुटुम्बिनीम्
अनुगृह्णीष्व निवापदत्तिभिः।

स्थिते प्राप्ते अक्लीवतया धैर्य्येण लिङ्गेन पुनः प्रकाशतां विदुषा सर्व्वास्ववस्थास्वपि धीरेण भवितव्यम् इत्यर्थः॥ ८४॥

इतोऽपि न रोदितव्यमित्याह, रुदतेति। रुदता भवता सा कुतः एव लभ्यते न लभ्यते एव, अनुम्रियते इति अनुमृत्। क्विप्। तेन अनुमृता अनुमृतवता अपि भवता पुनः न लभ्यते। कथं न लभ्यते इत्याह, परलोकजुषां लोकान्तरभाजां देहिनां गम्यन्ते इति गतयः गम्यस्थानानि स्वकर्म्मभिः पूर्व्वाचरितपुण्य-पापैः भिन्नपथाः पृथक्कृतमार्गाः हि, परत्रापि स्वस्वधर्म्मानुरूप-फलभोगाय भिन्नदेहगमनात्व मृतेनापि लभ्यते इत्यर्थः॥ ८५॥

अपेति। किन्तु अपशोकमनाः निर्दुःखचित्तः सन् कुटु-म्बिनीं पत्नीं निवापदत्तिभिः पिण्डोदकादिदानैः अनुगृह्णीष्व तर्पय इत्यर्थः। अन्यथा दोषमाह, अतिसन्ततम् अविच्छिन्न स्वजनानां बन्धूनाम्। “बन्धुस्वजनाः समाः” इत्यमरः।

(१) “केचित् मनुष्याः केचित् नरक, केचित् स्वर्गेऽपि [illegible]” इति दिनकरः।

स्वजनाश्रु किलातिसन्ततं
दहति प्रेतमिति प्रचक्षते ॥ ८६ ॥
मरणं प्रकृतिः शरीरिणां
विकृतिर्जीवितमुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वसन्
यदि जन्तुर्ननु लाभवानसौ ॥ ८७ ॥
अवगच्छति मूढचेतनः
प्रियनाशं हृदि शल्यमर्पितम् ।
स्थिरधीस्तु तदेव मन्यते
कुशलद्वारतया समुद्धृतम् ॥ ८८ ॥

अश्रु कर्तृ प्रेतं मृतं दहतीति प्रचक्षते किल । अत्र याज्ञवल्क्यः, "श्लेष्माश्रु बन्धुभिर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः । अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः" ॥ इति ॥ ८६ ॥

मरणमिति । शरीरिणां मरणं प्रकृतिः स्वभावः ध्रुवम् इत्यर्थः, जीवितं विकृतिः यादृच्छिकं बुधैः उच्यते, एवं स्थिते जन्तुः प्राणी क्षणम् अपि । अत्यन्तसंयोगे द्वितीया । श्वसन् जीवन् अवतिष्ठते यदि असौ क्षणजीवी लाभवान् ननु । जीवने यथालाभं सन्तोष्टव्यम् अलभ्यलाभात्, मरणे तु न शोचितव्यम् अस्य स्वाभाव्यात् इति भावः ॥ ८७ ॥

पर्येति । मूढचेतनः भ्रान्तबुद्धिः प्रियनाशम् इष्टनाशं हृदि

स्वशरीरशरीरिणावपि
श्रुत(१)संयोगविपर्य्ययौ यदा।
विरहः किमिवानुतापयेत्
वद बाह्यैर्विषयैर्विपश्चितम्॥ ८९॥

न पृथग्जनवच्छुचो वशं
वशिनामुत्तम गन्तुमर्हसि।
द्रुमसानुमतां किमन्तरं
यदि वायौ द्वितयेऽपि ते चलाः॥ ९०॥

र्पितं निखातं शल्यं शङ्कुं अवगच्छति मन्यते, स्थिरधीः विद्वान् तु तत् एव शल्यं समुद्धृतम् उत्खातं मन्यते प्रियनाशे सति इति शेषः, कुतः कुशलद्वारतया प्रियनाशस्य मोक्षोपायतया इत्यर्थः। विषयलाभविनाशयोर्यथाक्रमं हिताहितसाधनत्वाभिमानः पामराणां विपरीतं तु विपश्चिताम् इति भावः॥ ८८॥

स्वेति। स्वस्य शरीरशरीरिणौ देहात्मानौ अपि यदा यतः श्रुतौ श्रुत्यवगतौ संयोगविपर्य्ययौ संयोगवियोगौ ययोः तौ तयोस्तौ तदा बाह्यैः विषयैः पुत्रकलत्रादिभिः विरहः विपश्चितं विद्वांसं किम् इव अनुतापयेत्, त्वं वद, न किञ्चित् इत्यर्थः। अथवा स्वशब्दस्य शरीरेणैव सम्बन्धः॥ ८९॥

नेति। हे वशिनाम् उत्तम जितेन्द्रियवर्य्य पृथग्जनवत् शुचः शोकस्य वशं गन्तुं न अर्हसि। तथाहि, द्रुमसानुमतां तरु-

(1) Dinakara reads स्मृत for श्रुत।

स तथेति विनेतुरुदारमतेः
प्रतिगृह्य वचो विससर्ज्ज मुनिम् ।
तदलब्धपदं हृदि शोकघने
प्रतियातमिवान्तिकमस्य गुरोः ॥ ९१ ॥
तेनाष्टौ परिगमिताः समाः कथञ्चित्
बालत्वादवितथसूनृतेन(१) सूनोः ।

शिखरिणां किम् अन्तरं कः विशेषः वायौ सति द्वितये अपि द्विप्रकाराः अपि । प्रथमचरमेत्यादिना जसि विभाषया सर्व्वनामसंज्ञा । ते द्रुमसानुमन्तः चलाः यदि सानुतामपि चलते द्रुमवत् तेषामपि अचलसंज्ञा न स्यात् इत्यर्थः ॥ ९० ॥

स इति । स अजः उदारमतेः विनेतुः गुरोः वसिष्ठस्य वचः तच्छिष्यमुखेरितं तथेति प्रतिगृह्य अङ्गीकृत्य मुनिं वसिष्ठशिष्यं विससर्ज्ज प्रेषयामास, किन्तु तद्वचः शोकघने दुःखसान्द्रे अस्य अजस्य हृदि अलब्धपदम् अप्राप्तावकाशं सत् गुरोः वसिष्ठस्य अन्तिकं प्रतियातम् इव, प्रतिनिवृत्तं किमु, इत्युत्प्रेक्षा । तोटकवृत्तमेतत् । "इह तोटकमम्बुधिसैः प्रथितम्" इति तल्लक्षणम् ॥ ९१ ॥

तेनेति । अवितथं यथार्थं सूनृतं प्रियवचनं यस्य तेन अजेन

(1) On this Sankara observes "This epithet appears to be used here to show that in living some years after Indumati's death, Aja did not act contrary to his professions contained in his lamentations. Although he lived some years after her death,

साहश्यप्रतिकृतिदर्शनैः प्रियायाः
स्वप्नेषु क्षणिकसमागमोत्सवैश्च ॥ ८२ ॥
तस्य प्रसह्य हृदयं किल शोकशङ्कुः
प्लक्षप्ररोह इव सौधतलं बिभेद।
प्राणान्तहेतुमपि तं भिषजामसाध्यं
लाभं प्रियानुगमने(१) त्वरया स मेने ॥ ८३ ॥

सूनोः पुत्रस्य बालत्वात् राज्याक्षमत्वात् इत्यर्थः प्रियायाः इन्दुमत्याः साहश्यं वस्त्वन्तरगतम् आकारसाम्यं प्रतिकृतिः चित्रं तयोः दर्शनैः स्वप्नेषु क्षणिका क्षणभङ्गुराः ये समागमोत्सवाः तैश्च कथञ्चित् कृच्छ्रेण अष्टौ समाः वत्सराः। "संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः" इत्यमरः। परिगमिताः अतिवाहिताः। उक्तञ्च, "वियोगावस्थासु प्रियजनसदृक्षानुभवनं, ततश्चित्रं कर्म स्वपनसमये दर्शनमपि। तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि, प्रतीकारः कामव्यथितमनसां कोऽपि कथितः"। इति। प्रकृते साहश्यादित्रितयाभिधानं तदङ्गस्पृष्टपदार्थस्पृष्टेरप्युपलक्षणम्। प्रहर्षिणी वृत्तमेतत् ॥ ८२ ॥

तस्येति। शोकः इव शङ्कुः कीलः। "शङ्कुः कीले शिवे च" इति विश्वः। तस्य अजस्य हृदयं, प्लक्षप्ररोहः सौधतलम् इव

---

he was yet कविगयस्कत, for he passed those years because his son was still an infant".

(१) प्रियानुगमनत्वरयेति वा पाठः।

सम्यग्विनीतमथ वर्महरं कुमारम्
आदिश्य रक्षणविधौ विधिवत् प्रजानाम्।
रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः
प्रायोपवेशनमतिर्नृपतिर्बभूव ॥ ९४ ॥

प्रसह्य बलात् किल बिभेद। स अजः प्राणान्तहेतुं मरणकारणम् अपि भिषजाम् असाध्यम् अप्रतिसमाधेयं तं शोकशङ्कुं, रोगपर्यवसितं प्रियायाः अनुगमने त्वरया उत्कण्ठया लाभं मेने तद्विरहस्यातिदुःसहत्वात् तत्प्राप्तिकारणं मरणमेव वरमित्यमन्यत इत्यर्थः ॥ ९३ ॥

सम्यगिति। अथ नृपतिः अजः सम्यक् विनीतं निसर्गसंस्काराभ्यां विनयवन्तं वर्म हरतीति वर्महरः कवचधारणार्हवयस्कः। वयसि चेत्यच्प्रत्ययः। तं कुमारं दशरथं प्रजानां रक्षणविधौ राज्ये विधिवत् विध्यर्हं यथाशास्त्रम् इत्यर्थः। तदर्हमिति वतिप्रत्ययः। आदिश्य नियुज्य रोगेण उपसृष्टायाः व्याप्तायाः तनोः शरीरस्य दुर्वसतिं दुःखावस्थितिं मुमुक्षुः जिहासुः सन् प्रायोपवेशने अनशनावस्थाने मतिः यस्य स बभूव। "प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपि" इति विश्वः। अत्र पुराणवचनम्, "समासक्तो भवेद् यस्तु पातकैर्महदादिभिः दुश्चिकित्स्यैर्महारोगैः पीड़ितो वा भवेत् तु यः। स्वयं देहविनाशस्य काले प्राप्ते महामतिः। आब्रह्मणं वा स्वर्गादिमहाफलजिगीषया। प्रविशेज्ज्वलनं दीप्तं कुर्यादनशनं तथा। एतेषामधिकारोऽस्ति नान्येषां सर्वजन्तुषु। नराणामथ नारीणां

तीर्थे तोयव्यतिकरभवे जह्नुकन्या सरय्वो:(१)
देहत्यागादमरगणनालेख्यमासाद्य सद्यः।

न्तर्व्वर्षेषु सर्व्वदा" ॥ इति। अनयोर्वसन्ततिलकाच्छन्दः। तल्लक्षणम्, "उक्ता वसन्ततिलका तभजाजगौ गः" इति ॥ ६४ ॥

तीर्थ इति। असौ अजः जह्नुकन्यासरय्वोः तोयानां जलानां व्यतिकरेण सम्भेदेन भवे तीर्थे गङ्गासरयूसङ्गमे देहत्यागात् सद्यः एव अमरगणनायां लेख्यं लेखनम्। तयोरेव कृत्यकृत्यलर्थी इति भावार्थे ण्यत्प्रत्ययः। आसाद्य प्राप्य पूर्वस्मात् आकारात् अधिकतरा रुक् यस्याः तया कान्तया रमण्या सङ्गतः सन् नन्दनस्य इन्द्रोद्यानस्य अभ्यन्तरेषु अन्तर्वर्त्तिषु लीलागारेषु क्रीड़ाभवनेषु पुनः अरमत। "यथाकथञ्चित् तीर्थेऽस्मिन् देहत्यागं करोति यः। तस्यात्मघातदोषो न प्राप्नुयादीप्सितान्यपि"।

(1) Jahnu was a descendant of पुरूरवा and son of Suhotra. Jahnu, whilst performing a sacrifice, saw the whole of the place, overflowed by the waters of the Ganges. Highly offended at this intrusion, his eyes red with anger, he united the spirit of sacrifice with himself by the power of his devotion and drank up the river. The gods and sages upon this came to him, and appeased his indignation, and re-obtained Ganga from him, in the capacity of his daughter (whence she is called Jahnavi) See Wilson's V. P.

पूर्वाकाराधिकतररुचा सङ्गतः कान्तयासौ
लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥ ९५ ॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
अजविलापो नाम अष्टमः सर्गः ।

इति स्कान्दे । मन्दाक्रान्ताच्छन्दः । तल्लक्षणम्, "मन्दाक्रान्ता जलधिषडगैर्म्भौ भनौ ताद्गुरू चेत्" इति ॥ ९५ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरि विरचितायां
रघुवंशव्याख्यायां सञ्जीविनीसमाख्यायां अष्टमः सर्गः ।

# रघुवंशम्।

## प्रथमः सर्गः।

---

### अन्वयः।

अहं वागर्थप्रतिपत्तये वागर्थाविव संपृक्तौ, जगतः पितरौ, पार्वतीपरमेश्वरौ वन्दे ॥१॥ पद—पद्यते, अपद्यत, अपादि, पेदे, पत्स्यते पन्नः। पृच—पृणक्ति, अपृणक्, अपर्चीत् पपर्च। पृक्तः। वन्द—अवन्दत, अवन्दिष्ट, ववन्दे।

सूर्य्यप्रभवः वंशः क्व? मम अल्पविषया मतिश्च क्व? अहं मोहात् उडुपेन दुस्तरं सागरं तितीर्षुः अस्मि ॥२॥ तॄ—तरति, अतरत्, अतारीत्, ततार, तीर्णः, तरीतुम्। सनि तितीर्षति।

मन्दः, (तथापि) कवियशःप्रार्थी अहं, प्रांशुलभ्ये फले लोभात् उद्बाहुः वामनः इव उपहास्यतां गमिष्यामि ॥३॥ अर्थ—अर्थयते, आर्थयत, आर्थिषत, अर्थयामास, अर्थितः।

---

বাঙ্গালা অনুবাদ।

আমি বাক্য ও অর্থের সম্যক্ জ্ঞানলাভের আশয়ে বাক্য ও অর্থের ন্যায় নিত্যসম্বন্ধযুক্ত জগতের পিতামাতাস্বরূপ পার্ব্বতী ও পরমেশ্বরকে বন্দনা করি ॥১॥

সূর্য্য হইতে সমুদ্ভূত বংশই বা কোথায়? আর আমার অকিঞ্চিৎকর বুদ্ধিই বা কোথায়? আমি অজ্ঞানবশতঃ ভেলাদ্বারা দুস্তর মহাসাগর উত্তীর্ণ হইবার অভিপ্রায় করিয়াছি ॥২॥

আমি মন্দবুদ্ধি তথাপি কবিকীর্ত্তিলাভ প্রত্যাশা করিয়া নিশ্চয়ই

---

1. In order that I may attain to a right understanding of words and their significations, I do salute Parvati and Paramesvara, parents of the universe, who are as intimately associated with each other as a word is with its import.

2. There is a great disproportion between a race sprung from the sun, and my intellect, which is of limited range, yet out of infatuation, I am desirous of getting across the ocean by means of a raft.

3. Dull that I am, I shall be an object of ridicule by be-

लभ—लभते, अलभत, अलब्ध, लेभे, लप्स्यते। सनि लिप्सते। हन—हन्ति, अहन्, अवधीत्, जघान।

अथवा पूर्व्वसूरिभिः कृतवाग्द्वारे अस्मिन् वंशे वज्रसमुत्कीर्णे मणौ सूत्रस्येव मे गतिरस्ति ॥ ४ ॥ कॄ—किरति, अकिरत्, अकारीत्, चकार, कीर्णः।

सः अहं आजन्मशुद्धानाम्, आफलोदयकर्म्मणाम्, आसमुद्रक्षितीशानाम्, आनाकरथवर्त्मनाम् ॥ ५ ॥

यथाविधिहुताग्नीनाम्, यथाकामार्चितार्थिनां, यथापराधदण्डानां, यथाकालप्रबोधि-

---

উপহাসের আস্পদ হইব ; যেমন বামন প্রাংশু ব্যক্তি কর্তৃক লভ্য ফলের লোভে বাহু প্রসারণ করিয়া উপহসনীয় হয় ॥৩॥

অথবা প্রাচীন কবিগণ এই বংশে প্রবেশার্থ দ্বার উদ্ঘাটন করিয়াছেন। অতএব সূচী দ্বারা বিদ্ধ মণির অভ্যন্তরে যে প্রকারে সূত্র প্রবেশ করে, তদ্রূপ এই বংশেও আমার প্রবেশ হইতে পারিবে ॥৪॥

রঘুবংশীয়েরা জন্মাবধি বিশুদ্ধচরিত্র ছিলেন, যতক্ষণ ফলোদয় না হইত অভীষ্ট কার্য্যে লিপ্ত থাকিতেন, সমুদ্রপর্য্যন্ত পৃথিবীর অধীশ্বর ছিলেন, এবং তাঁহাদের রথ স্বর্গ পর্য্যন্ত গমন করিত ॥৫॥

তাঁহারা শাস্ত্রপ্রদর্শিত বিধি অনুসারে অগ্নিতে হোম ও প্রার্থনা

---

coming a candidate for a poet's fame, like even to a dwarf who holds up his hands to get at a fruit attainable only by a tall man.

4. Or rather, an entrance for me into the narrative of this race, into which an inlet of description has been cut open by bards of antiquity, is rendered possible, just as the entrance of a string into a precious stone already bored through by a diamond-needle is *practicable.*

5. So I shall describe the race of the Raghus, though provided with but a scanty stock of words, for I am impelled to this indiscretion by the report of their virtues having reached my ears.

6. The Raghus, who were pure from *their very nativity,*

नाम् ॥ ६ ॥ हु—जुहोति, अजुहोत्, अहौषीत्, जुहाव। होष्यति, हुतः, हवनि, जुहुत्। अर्च—अर्चति, आर्चत्, आर्चीत्, आनर्च। णिचि अर्चयति, आर्चिचत्। अर्चयामास। अर्चितः। बुध—बोधति, अबोधत् अबोधीत्, बुबोध, बोधिष्यति। णिचि बोधयति, अबूबुधत्। सनि बुबुधिषते। यङि बोबुध्यते। बुधः बुद्धिः।

त्यागाय सम्भृतार्थानां सत्याय मितभाषिणां, यशसे विजिगीषूणां, प्रजायै गृहमेधिनाम् ॥ ७ ॥ भृ—बिभर्ति, भरति, भरते। अबिभः, अभार्षीत्, अभरत, बिभरामास, बभार, बभ्रे। णिचि भारयति, अबीभरत्। सनि बुभूर्षति। भाष—अभाषत, अभाषिष्ट, बभाषे। णिचि अबभाषत्, अबीभषत्। जि—जयति, अजयत्, अजैषीत्, जिगाय। णिचि जापयति, अजीजपत्। सनि जिगीषति।

शैशवे अभ्यस्तविद्यानां, यौवने विषयैषिणां, वार्द्धके मुनिवृत्तीनां, अन्ते योगेन तनुत्यजाम् ॥ ८ ॥ इष—इच्छति, ऐच्छत्, ऐषीत्, इयेष। णिचि एषयति। सनि

---

অনুসারে অগ্নিহোত্র করিতেন, অপরাধের তারতম্য অনুসারে দণ্ডপ্রদান করিতেন ও যথাকালে শয্যাত্যাগ করিতেন ॥ ৬ ॥

তাঁহারা সৎপাত্রে দান করিবার উদ্দেশে ধন সঞ্চয় করিতেন, সত্যের অনুরোধে অল্পভাষী ছিলেন, যশোলাভের আশয়ে শত্রুজয় এবং পুত্রোৎপাদনের জন্য দারপরিগ্রহ করিতেন ॥ ৭ ॥

যাঁহারা বাল্যকালে বিদ্যাভ্যাস করিতেন, যৌবনে বৈষয়িক সুখসম্ভোগে

---

who persevered in their undertakings until issue of fruit, who ruled over the world as far as the ocean, and the way of whose chariots was ( unimpeded ) up to the heavens.

7. Who used to offer oblations of clarified butter to the consecrated fire, according to the dictates of the *sastras*, to honor all petitioners by gifts according to their desire, to mete out punishment according to the nature of crimes and to rise from their beds at the proper time.

8. Who used to lay up riches for the purpose of giving them away, to speak sparingly for the sake of keeping within the boundary of truth, who were desirous of conquest, simply for fame, who entered into matrimony for begetting offspring.

दिधिषिषति, ऐधिधिषीत्। त्यज—त्यजति, अत्यजत्, अत्याक्षीत्, तत्याज। णिचि त्याजयति, अतित्यजत्।

रघूणाम् अन्वयं तनुवाग्विभवः अपि सन् तद्गुणैः कर्णम् आगत्य चापलाय प्रचोदितः सन् वक्ष्ये ॥ ९ ॥

सदसद्व्यक्तिहेतवः सन्तः तं श्रोतुम् अर्हन्ति, हि (यस्मात्) हेम्नः विशुद्धिः श्यामिका अपि वा अग्नौ संलक्ष्यते ॥ १० ॥ श्रु—शृणोति, अश्रौषीत्, अश्रोषीत्, शुश्राव। णिचि श्रावयति, अशिश्रवत्। सनि शुश्रूषते। श्रुतः। अर्ह—अर्हति, आर्हत्, आर्हीत्, आनर्ह। अर्हिष्यति। लक्ष—लक्षयति, अलक्षयत् अललक्षत्, लक्षयामास। कर्म्मणि लक्ष्यते, अलक्षि। लक्षितः।

छन्दसां प्रणव इव मनीषिणां माननीयः वैवस्वतो नाम मनुः महीक्षिताम् आद्यः आसीत् ॥ ११ ॥

---

আসক্ত হইতেন, বার্দ্ধক্যে মুনিব্রত অবলম্বন করিতেন, ও চরমে যোগ দ্বারা দেহত্যাগ করিতেন ॥৮॥

আমার বাক্যসম্পত্তি অল্প হইলেও আমি রঘুদিগের বংশবৃত্তান্ত বর্ণন করিব, কারণ তাঁহাদিগের গুণসমূহ মদীয় কর্ণে প্রবেশপূর্ব্বক আমাকে এই অবিমৃষ্যকারিতায় উত্তেজিত করিতেছে ॥ (৯ম শ্লোক) ॥

গুণদোষপরীক্ষায় সক্ষম পণ্ডিতগণ এই রঘুবংশাখ্য মদীয় প্রবন্ধ শ্রবণ করিবার যোগ্য। কারণ সুবর্ণের বিশুদ্ধি বা বিমিশ্রতা অগ্নিতেই পরীক্ষিত হইয়া থাকে ॥১০॥

যেমন ওঙ্কার সমগ্র বেদের আদি, সেই প্রকার সমুদয় পণ্ডিতমণ্ডলীর মাননীয় বৈবস্বত নামে মনু পৃথিবীর অধিপতিদিগের আদি ছিলেন ॥১১॥

---

9. Who used to study the various branches of learning during their childhood, who sought for pleasure during youth, who led the life of an ascetic in their old age, and abandoned their life at last by religious abstraction.

10. It behoves good critics to lend a hearing to it, for it is in fire only, that the purity or alloy of gold is detected.

11. As the syllable *Om* is the leading word in the *vedas*,

शुद्धिमति तदन्वये क्षीरनिधौ इन्दुः इव, शुद्धिमत्तरः दिलीपः इति राजेन्दुः प्रसूतः ॥१२॥ सू—सूते, असूत, असविष्ट, असोष्ट, सुषुवे, सविता, सूतः, सूनः।

व्यूढोरस्कः वृषस्कन्धः, शालप्रांशुः, महाभुजः, (अतएव) आत्मकर्मक्षमं देहम् आश्रितः क्षात्रः धर्मः इव स्थितः ॥ १३ ॥ श्रि—श्रयति, अश्रयत्, अशिश्रियत् शिश्राय श्रितः।

सर्वातिरिक्तसारेण सर्वतेजोऽभिभाविना सर्वोन्नतेन आत्मना मेरुः इव उर्वीं आक्रम्य स्थितः ॥१४॥ रिच—रिणक्ति, अरिणक्, अरैचीत्, अरिचत्, रिरेच। क्रम—क्राम्यति क्रामति, अक्राम्यत् अक्रामत्, अक्रमीत्, चक्राम। णिचि क्रामयति; अचिक्रमत्, क्रान्तः।

---

যে প্রকার ক্ষীরসাগরে চন্দ্রের সমুদ্ভব, সেইরূপ সেই মনুর বিশুদ্ধ বংশে বিশুদ্ধতরচরিত দিলীপনামক রাজচন্দ্র জন্মগ্রহণ করিয়াছিলেন ॥ ১২ ॥

মহারাজ দিলীপ বিপুলবক্ষা, মহাবাহু, বৃষস্কন্ধ এবং শালবৃক্ষের ন্যায় উন্নত ছিলেন। অতএব তাঁহাকে দেখিলে বোধ হইত যেন, সাক্ষাৎ ক্ষত্রিয় ধর্ম্ম নিজ কার্য্যসাধনক্ষম দেহ আশ্রয়পূর্ব্বক ভূতলে অবতীর্ণ হইয়াছেন ॥১৩॥

সর্ব্বভূত অপেক্ষা অধিকতর বলশালী, তেজোদ্বারা সর্ব্বভূতপরাভাবী, এবং সর্ব্বাপেক্ষা অধিকতর উন্নত যে নিজদেহ, তদ্দ্বারা তিনি সমগ্র পৃথিবীকে আক্রমণপূর্ব্বক সুমেরুর ন্যায় লক্ষিত হইতেন ॥১৪॥

---

so was Manu, by name Vaivasvata, esteemed by the wise, the first of kings, that have ever ruled over the earth.

12. From his spotless lineage sprang Dilipa, the moonlike king, himself a most stainless character, just as the moon, sprang from the ocean of milk.

13. Of a broad chest, with shoulders like those of a bull, tall as the *Sala* tree, having huge arms, he was as it were, the very incarnation of heroism, assuming a body capable of performing its own mission.

14. With a figure transcending all in strength, subduing all with its power, and surpassing all in stature, he lorded it over the earth like a second mount Meru.

आकारसदृशप्रज्ञः, प्रज्ञया सदृशागमः, आगमैः सदृशारम्भः आरम्भसदृशोदयः ॥१५॥

सः यादोरत्नैः अर्णव इव भीमकान्तैः नृपगुणैः उपजीविनाम् अधृष्यः अभिगम्यश्च बभूव ॥ १६ ॥

नियन्तुः तस्य नेमिवृत्तयः प्रजाः आ मनोः क्षुण्णात् वर्त्मनः परं रेखामात्रमपि न व्यतीयुः ॥ १७ ॥ इ—एति ऐत् अगात्, इयाय। णिचि गमयति अजीगमत्। सनि जिगमिषति। इतः। अतरि, यन्।

---

তাঁহার বুদ্ধি তদীয় আকারের অনুরূপ, তাঁহার শাস্ত্রজ্ঞান তদীয় বুদ্ধির সদৃশ, তাঁহার কার্য্যকলাপ তদীয় শাস্ত্রজ্ঞানের সদৃশ, এবং তাঁহার অভ্যুদয় তদীয় কার্য্যকলাপের অনুরূপ ছিল ॥১৫॥

তিনি ভয়াবহ অথচ কমনীয় গুণসমূহদ্বারা ভূষিত ছিলেন। এবং তন্নিবন্ধন রত্ন ও নক্র দ্বারা পরিপূর্ণ মহাসাগরের ন্যায় আশ্রিত ব্যক্তিদিগের পক্ষে যুগপৎ অধর্ষণীয় ও আশ্রয়ণীয় ছিলেন ॥১৬॥

শাসনকর্ত্তা সেই দিলীপের প্রজাগণ, যেরূপ রথের চক্রধারা চিরাভ্যস্ত পথ হইতে রেখামাত্রও বিচলিত হয় না, তদ্রূপ মনুর সময় হইতে প্রচলিত আচারপদ্ধতি হইতে রেখামাত্রও অতিক্রম করে নাই ॥১৭॥

---

15. His intelligence was worthy of his (noble) appearance, his learning equalled his intelligence, his enterprise equalled his learning, and his success (in life) was commensurate with his enterprise.

16. Both by his stern and amiable qualities, which are characteristic of a king, he was at once unapproachable and attractive to his dependents, like the ocean by virtue of its monsters and precious stones.

17. Imitating the tire of a chariot wheel, the subjects of this ruler did not deviate a single line from the path marked out from the time of Manu.

स प्रजानां भूत्यर्थमेव ताभ्यः बलिम् अग्रहीत्, हि (तथाहि) रविः सहस्रगुणम् उत्स्रष्टुं रसम् आदत्ते ॥१८॥ ग्रह—गृह्णाति अगृह्णात् अग्रहीत् जग्राह। गृहीतः गृहीत्वा, सनि जिघृक्षति। सृज—सृजति असृजत् असाक्षीत् ससर्ज। सनि सिसृक्षति स्रष्टुम्। दा—ददौ अदत्त अदित ददे।

तस्य सेना परिच्छदः, अर्थसाधनम् द्वयमेव, शास्त्रेषु अकुण्ठिता बुद्धिः, धनुषि आतता मौर्वी च ॥१९॥ तन—तनोति तनुते अतनोत् अतनुत अतानीत् अतत। अतनिष्ट ततान तेने। सनि तितनिषति तितांसति।

संवृतमन्त्रस्य, गूढाकारेङ्गितस्य तस्य, प्रारम्भाः प्राक्तनाः संस्काराः इव फलानुमेयाः आसन् ॥२०॥

---

তিনি প্রজাদিগের মঙ্গলোদ্দেশেই তাহাদিগের নিকট বলি অর্থাৎ ষষ্ঠাংশ-রূপ কর গ্রহণ করিতেন। সূর্য্যদেব বৃষ্টিরূপে সহস্রগুণ প্রতিদান করিবার জন্যই পৃথিবী হইতে জল গ্রহণ করিয়া থাকেন ॥১৮॥

তাঁহার চতুরঙ্গ সৈন্য তাঁহার পক্ষে পরিচ্ছদ অর্থাৎ ভূষার ন্যায় ছিল। তিনি দুইটীমাত্র পদার্থের উপর নির্ভর করিয়া তাঁহার সমুদয় প্রয়োজন সাধন করিতেন, প্রথমতঃ তাঁহার শাস্ত্রবিষয়ে অব্যাহত বুদ্ধি, দ্বিতীয়তঃ তাঁহার ধনুতে আরোপিত জ্যা ॥১৯॥

তিনি রাজনৈতিক মন্ত্রণাসমূহ গোপনে নির্ব্বাহ করিতেন, ও তাঁহার আকার ও ইঙ্গিতাদি দ্বারা তাঁহার মনের ভাব প্রকাশ পাইত না। সুতরাং

---

18. He levied tribute from his subjects simply for their ultimate good, for the sun draws up water from the earth with the object of sending it back thousandfold in return.

19. His army was to him an appendage, for he depended on two things only for the accomplishment of his designs,—his intellect intent upon the *sastras*, and his bowstring taut on the bow.

20. He hid his counsel, and his countenance and gestures were impenetrable; so that his measures could only be divined by their results like impressions received in a previous birth.

स अत्रस्तः सन् आत्मानं जुगोप, अनातुरः एव धर्म्मं भेजे, अगृध्नुः एव अर्थम् आददे, असक्तः एव सुखम् अन्वभूत् ॥२१॥ त्रस—त्रसति त्रस्यति अत्रस्यत् अत्रसत् अत्रासीत् अत्रसीत् तत्रास । णिचि त्रासयति अतित्रसत् । त्रस्तः । त्रसितुम् त्रसित्वा । गुप—गोपायति अगोपायत् अगोपायीत् अगोपीत् अगोप्सीत् । गोपयामास । सनि जुगोपायिषति जुगोपिषति जुगुप्सति, गुप्तः । भज—भजति भजते अभजत् अभजत अभाक्षीत् अभक्त बभाज भेजे । णिचि भाजयति अबीभजत् । सनि बिभक्षति । सञ्ज—सजति असजत् असाङ्क्षीत् ससञ्ज । णिचि सञ्जयति अससञ्जत् । सनि सिसङ्क्षति, सक्तः ।

ज्ञाने मौनम्, शक्तौ क्षमा, त्यागे श्लाघाविपर्य्ययः, तस्य गुणाः गुणानुबन्धित्वात् सप्रसवा इव अभूवन् ॥२२॥

विषयैः अनाकृष्टस्य, विद्यानां पारदृश्वनः, धर्म्मरतेः तस्य जरसा विना वृद्धत्वम्

---

তাঁহার উপায়প্রয়োগাদি জন্মান্তরীণ সংস্কারসমূহের ন্যায় কেবলমাত্র ফলের দ্বারা অনুমিত হইতে পারিত ॥২০॥

তিনি ভয়শূন্য হইয়াও আপনার শরীররক্ষার্থ উপায় গ্রহণ করিতেন, তিনি রুগ্ন না হইয়াও ধর্ম্মোপার্জ্জন করিতেন, তিনি লোভী না হইয়াও অর্থসংগ্রহ করিতেন, এবং আসক্তিরহিত হইয়া সুখভোগ করিতেন ॥২১॥

তাঁহার জ্ঞান থাকিলেও তিনি মৌনাবলম্বন করিয়া থাকিতেন, প্রতীকার-সামর্থ্য থাকিলেও ক্ষমা করিতেন, তিনি দান করিতেন, কিন্তু তাঁহার আত্মশ্লাঘা ছিল না ॥২২॥

তিনি রূপ রস প্রভৃতি ভোগ্যবস্তু দ্বারা আকৃষ্ট হইতেন না। তিনি বিদ্যার

---

21. He was on his guard without being afraid, pursued the path of rectitude without being ill, acquired riches without being avaricious, and enjoyed pleasures without being a slave to them.

22. He had taciturnity with knowledge, forgiveness with power, and freedom from boasting with beneficence, so that his virtues by their subservience to each other, seemed as if they were full brothers.

23. Not tempted by pleasures, a perfect master of the

आर्चीत् द्विजातीन् परमार्थविन्दान्
उदेजयान् भूतगणान् न्यषेधीत्।
विद्वानुपानेष्ट च तान् स्वकाले
यतिर्वसिष्ठो यमिनां वरिष्ठः॥ १५॥

कर्मणि लुङि रूपम्। ततोऽनन्तरं भरतः केकयीतः(२) अभूत् अजायत। तत एका एकैव सुमित्रा लक्ष्मणेन सह उदारचेष्टं महासत्त्वं शत्रुघ्नं यमजौ लक्ष्मणशत्रुघ्नौ इत्यर्थः प्रासोष्ट प्रसूतवती। प्रसूतेरात्मनेपदिनः कर्त्तरि लुङ्। "लक्ष्मणेन" इत्यत्र सहयोगे तृतीया, अत्र सहयोगस्य प्राधान्यं विवक्षितं, पित्रा सहागतः पुत्र इत्यादिवत्, तेन लक्ष्मणो जेष्ठ इति बोध्यम्॥१४॥

आर्चीदिति। विद्वान् ब्रह्मविद्यासम्पन्नः पौरोहित्यकर्मणि कुशलश्च, यमनियमेषु यतते इति यतिः, औणादिक इः। "अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यमकल्मषमिति पञ्च यमाः येषां सन्तीति यमिनः स्मृताः"। तेषां वरिष्ठः उरुतमः श्रेष्ठः इत्यर्थः वसिष्ठः परमं प्रभूतं उत्कृष्टञ्च अर्थं धनं विन्दन्ति लभन्ते इति परमार्थविन्दाः तान्। विन्दतेः शः। द्विजातीन् ब्राह्मणक्षत्रियवैश्यान् आर्चीत् दानमानादिना सम्बर्द्धयामास इत्यर्थः। उदेजयन्ते इति उदेजयाः उत्कम्प्यास्तान्। उत्पूर्व्वादेजतेः कम्पनार्थकात् एन्तात्

(2) The Kekayas or Kaikayas appear amongst the chief nations in the war of the Madabharata; their king being a kinsman of Krisna. The Ramayana specifies their position beyond, or west of, the Vipasa.

वेदोऽङ्गवांस्तैरखिलोऽध्यगायि
शस्त्राण्युपायंसत जित्वराणि ।
ते भिन्नवृत्तीन्यपि मानसानि
समं जनानां गुणिनोऽध्यवात्सुः ॥ १६ ॥

शः । क्रूरान् भूतगणान् देवयोनिविशेषान् न्यषेधीत् उत्सादितवान् । स्वकाले क्षत्रियाणां योग्यदशायां गर्भैकादशे वर्षे तान् उपानेष्ट तेषामुपनयनसंस्कारं निरवर्त्तयदित्यर्थः । तथाचोक्तं "गर्भाष्टमेऽब्दे कुर्व्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः" इति । उपानेष्टेति उपपूर्वकात् आत्मनेपदिनो नीधातोर्लुङि रूपम् ॥ १५ ॥

वेद इति । "शिक्षा कल्पोऽथ व्याकरणं निरुक्तं ज्योतिषां गणः । छन्दसां विचितिश्चैव षडङ्गोवेदइष्यते" इति षडङ्गवान् वेदस्त्रयीरूपः तैरुपनीतैः रामादिभिरध्यगायि अधीतः अधिपूर्वकात् इङ्धातोर्लुङि रूपम् । जित्वराणि जयशीलानि शस्त्राणि धनुरादीनि उपायंसत स्वीकृतानि । उपयमः स्वीकरणे इति आत्मनेपदम् तस्मात् कर्मणि लुङ् । गुणिनस्ते रामादयः भिन्ना वृत्तयः प्रवृत्तयो येषां तानि तथोक्तानि विषयेषु भिन्नरुचीनि अपि जनानां मानसानि समं तुल्यं यथा तथा अध्यवात्सुः अधिचक्रुः, उपान्वध्याङ्वस इत्यादिना अधिकरणस्य कर्मसंज्ञा । लोकोहि भिन्नरुचिस्तथापि तेषां गुणैराकृष्टाः सर्व्वेऽपि तेषु समानुरक्ता बभूवुरिति भावः ॥ १६ ॥

ततोऽभ्यगात् गाधिसुतः क्षितीन्द्रं
रक्षोभिरभ्याहतकर्म्मवृत्तिः ।
रामं वरीतुं परिरक्षणार्थं
राजार्ज्जिहत् तं मधुपर्कपाणिः ॥ १७ ॥
ऐषीः पुनर्जन्मजयाय यत् त्वं
रूपादिबोधान्न्यवृतच्च यत् ते ।

तत इति । ततः रक्षोभिः राक्षसैः अभ्याहता व्याहता कर्मणोयागादेर्वृत्तिरनुष्ठानं यस्य स तथोक्तः । गाधिसुतो विश्वामित्रः परिरक्षणार्थं यज्ञविघ्ननिरासार्थमित्यर्थः । रामं वरीतुं प्रार्थयितुं क्षितीन्द्रं दशरथं अभ्यगात् उपागमत् अभि-पूर्वकात् इणधातोर्लुङि रूपम् । मधुपर्कः दधियुक्तं मधु सर्पिर्वा पाणौ यस्य सः मधुपर्कपाणिः । तदुक्तमाश्वलायनसूत्रे "दधनि मध्वानीय । सर्पिर्वा मध्वलाभे" इति । राजा तं मुनिं आर्ज्जि-हत् पूजयामास । अर्हयतिः पूजार्थकात् लुङ् । तथाचोक्तं "राजर्त्विक्स्नातकगुरून् प्रियश्वशुरमातुलान् । अर्हयेन्मधुपर्केण परिसंवत्सरात् पुनः" इति ॥ १७ ॥

ऐषीरिति । त्वं पुनर्जन्मजयाय प्रेत्यभावरूपसंसारनिवृत्त्यै अपवर्गलाभाय इत्यर्थः यत् धाम ऐषीः, इषेर्लुङ, वाञ्छितवान् प्रारब्धवान् इत्यर्थः । यत् ते रूपादिषु रूपरसगन्धस्पर्शशब्दाख्य-पञ्चविषयेषु यो बोधस्तदादिना धाम न्यवृतत् निवृत्तं येन धाम्ना परमात्मसाक्षात्काराख्यप्रत्ययप्रवाहरूपेण साधनेन

तत्त्वान्यबुद्धाः प्रतनूनि येन
ध्यानं नृपस्तच्छिवमित्यवादीत् ॥ १८ ॥

आख्यन्मुनिस्तस्य शिवं समाधेः
विघ्नन्ति रक्षांसि वने क्रतूंस्तु(१)।
तानि द्विषद्वीर्य्यनिराकरिष्णुः
तृणेढु रामः सह लक्ष्मणेन ॥ १९ ॥

ते बाह्यज्ञानं निवृत्तमित्यर्थः। येन ध्यानेन प्रतनूनि सूक्ष्माणि दुर्ज्ञेयानि तत्त्वानि चतुर्विंशति-संख्यकानि महदादीनि सांख्यदर्शनोक्तानि अबुद्धाः ज्ञातवान्। बुध्यतेर्लुङि थास्। तत् ध्यानं शिवं अव्याहतं कच्चिदिति नृपः अवादीत्, मुनेस्तपोधनत्वात् तपसः कुशलमेव नृपतिर्भगवन्तमप्राक्षीदित्याशयः ॥ १८ ॥

आख्यदिति। मुनिर्विश्वामित्रस्तस्य समाधेर्ध्यानस्य शिवं कल्याणं उपद्रवाभावमित्यर्थः आख्यत् कथितवान्। चक्षधातोः लुङि ङविधानं ख्यादेशश्च। तत् किमत्रागमनस्य प्रयोजनमित्यत आह विघ्नन्तीति। रक्षांसि राक्षसास्तु वने अस्माकं तपोवने क्रतून् यागान् विघ्नन्ति विघटयन्ति अतोऽयं महान् ध्यानप्रत्यूहो विद्यते इति भावः। अतो द्विषतामरीणां वीर्य्यस्य निराकरिष्णुर्निराकरणशीलो रामो लक्ष्मणेन सह तानि रक्षांसि तृणेढु हिनस्तु। तृहधातोर्लोट्। रामलक्ष्मणौ अस्माकं यज्ञविघ्नकारिणो निरस्यतामित्यहं प्रार्थये इति भावः ॥ १९ ॥

(१) "क्रतूंस्तु" इत्येव पाठः साधीयान्; अस्य जयमङ्गलभरतमल्लिकाभ्यामुभाभ्यामेव टीकाकृद्भ्यां धृतत्वात् प्रकृतोपयोगित्वाच्च। अतः "क्रतूंश्च" इति पाठः कस्याकरः ? प्रामादिकश्चेति सम्भाव्यते।

स शुश्रुवांस्तद्वचनं मुमोह
राजासहिष्णुः सुतविप्रयोगम्।
अथांयुनाथ क्षितिपः शुभंयुः
ऊचे वचस्तापसकुञ्जरेण ॥ २० ॥
मया त्वमाप्थाः शरणं भयेषु
वयं त्वयाप्याप्स्महि धर्म्म वृद्धौ।

स इति। सुतविप्रयोगं पुत्रविरहं असहिष्णुः सोढुमशक्तः, उदन्तवर्ज्जनात् न क्षयोगात् कर्मणि षष्ठी। राजा तत् वचनं रामप्रयाणार्थमुक्तं यत् मुनिवाक्यं तत् शुश्रुवान् श्रुतवान् सन्। शृणोतेः क्वसुः। मुमोह मोहमुपागतः। अथ अहंयुना अहङ्कारवता तापसानां तपस्विनां कुञ्जरः श्रेष्ठः तेन विश्वामित्रेण। "स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जरसिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः" इत्यमरः। शुभंयुः कल्याणभाक्। "अहंशुभयोर्युस्" इत्यस्त्यर्थे युस्। क्षितिपो दशरथः वचः वक्ष्यमाणं वाक्यं ऊचे। वचेर्दुहादिगणान्तर्गतत्वात् अप्रधानस्य कर्मण उक्तत्वम्, वचेः कर्मणि लिट् ॥ २० ॥

मयेति। भयेषु यज्ञदुष्टासुपद्रवजनितेषु मया त्वं शरणं आप्थाः रक्षितृत्वेन प्राप्तोऽसि आपेः कर्मणि लुङ्। त्वयापि वयं धर्मवृद्धौ इज्यादिभिः प्रभूतधर्मलाभाय आप्स्महि रक्षितृत्वेन प्राप्ताः स्मः। पूर्ववत् लुङ्। तदित्थं क्षात्रं क्षत्रियतेजः द्विजस्य ब्राह्मणत्वं ब्रह्मवर्चः च परस्पराय इदं परस्परार्थं

घार्वं द्विजत्वञ्च परस्परार्थं
शङ्कां कृथा मा प्रहिणु स्वसूनुम् ॥ २१ ॥
घानिष्यते तेन महान् विपक्षः
स्थायिष्यते येन रणे पुरस्तात्।
मा मां महात्मन् परिभूरयोग्यं
न मद्विधो न्यस्यति भारमग्र्यम् ॥ २२ ॥

अन्योन्यप्रयोजनसाधनमित्यर्थः। "अर्थेन नित्यसमासः सर्व्वलिङ्गता च" इति चतुर्थीसमासः। अतः शङ्कां मा कृथा मा भैषीः। मायोगादड़ागमनिषेधः। स्वसूनुं स्वपुत्रं रामं प्रहिणु मया सार्द्धं प्रेषय। ब्राह्मणानां रक्षणं आर्त्विज्यकर्म्मण आत्मस्वार्थं क्षत्रियैरवश्यकर्त्तव्यमतः स्वपुत्रप्रेषणेन क्षत्रधर्म्मं मनुपालय इति भावः। तथाचोक्तं मनुना "नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्द्धते। ब्रह्म क्षत्रञ्च सम्पृक्तमिह चामुत्र वर्द्धते" इति। ८। ३२२ ॥ २१ ॥

घानिष्यत इति। अनागतमर्थं ज्ञानेन समीक्ष्याह। पुरस्तात् अग्रतः यत् रणं युद्धं भावि परशुरामेण सार्द्धमिति भावः तस्मिन् रणे येन स्थायिष्यते, तिष्ठतेर्भावे लृट्, तेन रामेण महान् विपक्षः त्रैलोक्यविजयित्वात् स रावणोऽपि घानिष्यते हनिष्यते, किमुत इतरराक्षसाः, हन्तेः कर्म्मणि लृट्। यद्वा येन हेतुना तेन रामेण रणे पुरस्तात् अग्रतः रणशिरसि इत्यर्थः स्थायिष्यते, तिष्ठतेः कर्म्मणि लृट्। अपराङ्मुखेन वर्त्ति-

क्रुध्यन् कुलं धक्ष्यति विप्रवह्निः
यास्यन् सुतस्तप्स्यति मां समन्युम्।
इत्थं नृपः पूर्वमवालुलोचे
ततोऽनुजज्ञे गमनं सुतस्य ॥ २३ ॥

तव्यम्, महान् विपक्षः यज्ञद्रोही राक्षसगणश्च घानिष्यते अतो हे महात्मन् महासत्त्व मां मा परिभूः प्रत्याख्यानेन मावज्ञासीः। ममेव विधा प्रकारो यस्य, मया विधा सादृश्यं यस्य वा इति विग्रहे मद्विधः मादृशो महानुभावो भविष्यद्दर्शी जनः अयोग्ये कार्यविधुरे असमर्थे जने अये भयं अयश मह्मत्सं भारं न न्यस्यति न निक्षिपति नार्पयतीत्यर्थः। ॥ २२ ॥

क्रुध्यन्निति। विप्र एव वह्निर्विप्रवह्निः क्रुध्यन् प्रत्याख्यानेन कोपमापद्यमानः सन् कुलं वंशं धक्ष्यति भस्मसात् करिष्यति। यद्यहं प्रजारक्षणेऽधिकृतोऽस्य वचनं न कुर्य्यां तदायं भृशं कोपमापन्नः शापाग्निना मदीयं वंशं भस्मीकरिष्यतीति भावः। दहतेर्लृट्। सुतः यास्यन् प्रस्थास्यमानः समन्युं सशोकं मां तप्स्यति, तपेर्लृट्, मां शोकाग्निना तापयिष्यति। नृपः पूर्वं प्रथमं इत्थं अनेन प्रकारेण अवालुलोचे वितर्कयामास, अवाङ्-पूर्वाल्लोचेर्लिट्। ततः सुतस्य गमनं अनुजज्ञे अनुज्ञातं तेनेति शेषः। ज्ञाधातोः परस्मैपदित्वादनुपूर्व्वाज्ज्ञस्य आत्मनेपदित्वे नियमाभावाच्च विभक्तिविपरिणामेणैव तेनेति कर्तृपदमध्याहर्त्तव्यम् ॥ २३ ॥

आशीर्भिरभ्यर्च्य ततः क्षितीन्द्रं
प्रीतः प्रतस्थे मुनिराश्रमाय।
तं पृष्ठतः प्रष्ठमियाय नम्रः
हिंस्रेषु दीप्रास्त्रधरः कुमारः ॥ २४ ॥
प्रयास्यतः पुण्यवनाय जिष्णोः
रामस्य रोचिष्णुमुखस्य धृष्णुः।

आशीर्भिरिति। ततः प्रीतः प्रसन्नः रामगमनानुज्ञया सुमनीकृत इत्यर्थः। मुनिः क्षितीन्द्रं दशरथं आशीर्भिरभ्यर्च्य सम्भाव्य आश्रमाय प्रतस्थे चचाल। गत्यर्थक्रियायोगात् चतुर्थी। हिंस्रेषु नृशंसेषु राक्षसादिषु दीप्रास्त्रधरः शितायुधभृत् नम्रो विनयावनतः साधुषु इति शेषः। कुमारो रामः प्रतिष्ठते इति प्रष्ठमग्रगामिनं तं मुनिं पृष्ठतः पश्चात् इयाय, इणधातोर्लुङ्, तमनुजगाम इत्यर्थः ॥ २४ ॥

प्रयास्यत इति। धृष्णुः शत्रुविध्वंसने प्रगल्भः। धृषेः क्नुः। तिसृणां मातॄणां अपत्यं पुमान् त्रैमातुरः कौशल्याकेकयीसुमित्रासु समपक्षपाततया भक्त्या तासां समानस्नेहास्पदमित्यर्थः। यद्वा लक्ष्मणजनन्या सुमित्रया कौशल्याकैकयीदत्तपिण्डद्वयप्राशनात् लक्ष्मणस्य त्रैमातुरत्वमिति बोध्यम्। कृत्स्नं समग्रं यथा तथा जितं लब्धं अस्त्रं शस्त्रञ्च येन स तथोक्तः। अस्यते इति अस्त्रं क्षेप्यायुधं शरादि। शस्यते हन्यते अनेनेति शस्त्रं खड्गादि इत्यनयोर्विशेषात् पृथगुपादानम्। श्रेयसि रामस्य कल्याणे

वैमातुरः कृत्स्नजितास्त्रशस्त्रः
सध्र्यङ् रतः श्रेयसि लक्ष्मणोऽभूत् ॥ २५ ॥
इषुमति रघुसिंहे दन्दशूकान् जिघांसौ
धनुररिभिरसह्यं मुष्टिपीडं दधाने ।

रतस्तदनुष्ठानपरो लक्ष्मणः पुण्ययनाय पवित्रतपोवनाय प्रयास्यतः गमिष्यतः अतएव रोचिष्णुमुखस्य पुण्याश्रमदर्शनकौतूहलात् प्रफुल्लमुखकान्तेः जिष्णोर्जयशीलस्य रामस्य सह अञ्चति गच्छतीति सध्र्यङ्। सहपूर्व्वादञ्चतेः क्विप् सहस्य सध्र्यादेशश्च। सहचरोऽभूत् ॥ २५ ॥

इषुमतीति। पुनः पुनरतिशयेन वा दशन्तीति दन्दशूकाः दंशनशीलाः तान् हिंस्रान् राक्षसादीन्। दशतेर्यङन्तात् ऊकस्ततो यङोलुक्। जिघांसौ हन्तुमिच्छौ अतएव इषुमति बाणसनाथे अरिभिः शत्रुभिः असह्यं सोढुमशक्यं येन धनुषा निक्षिप्ताः शरादयः शत्रुभिः सुदुःसहा भवन्ति तत् इत्यर्थः। धनुः मुष्टिना पीडयित्वा मुष्टिपीडम्। मुष्टिशब्दोपपदे दतो णमुल्। दधाने मुष्टिना दृढं धारयतीत्यर्थः। बद्धगोधाङ्गुलित्रं मामायर्णं वा धङ्गुलिं त्रायते यत् तत् अङ्गुलित्रं चर्म्मादिनिर्मितं अङ्गुलित्राणं येन तस्मिन्, रघुषु रघुवंश्येषु सिंह इव शौर्यादिगुणयोगादिति रघुसिंहस्तस्मिन् व्रजति सति तपोवनायेति शेषः। साश्रुभिः शुभानुध्यायिभ्यः पुरतरुणी नगरयुवतयः गुरुशोकात् दुःसहविरहदुःखादपि कायमपि मुञ्चता

व्रजति पुरतरुण्यो बद्धचित्राङ्गुलिके
कथमपि गुरुशोकान्मारुदन् माङ्गलिक्यः ॥२६॥
अथ जगदुरनीचैराशिषस्तस्य विप्राः
तुमुलकलनिनादं तूर्य्यमाजघ्नुरन्ये।

कष्टेन मा रुदन् न रुरुदुः शोकादुत्थितस्यापि बाष्पस्य स्तम्भमकार्षुरित्यर्थः। मांयोगादड़ागमनिषेधः। अश्रुविसर्ज्जनस्य दुर्निमित्तत्वादिति भावः। मालिनीवृत्तमिदम्। तदुक्तं "ननमयययुतेयं मालिनी भोगिलोकैः" इति ॥ २६ ॥

अथेति। अथ विप्रास्तस्य रामस्य सम्बन्धे आशिष इष्टवचनानि अनीचैरुच्चैः जगदुः ऊचुः। अन्ये वादकास्तुमुलकलनिनादं गम्भीरमधुरध्वनिं तूर्यं कांस्यतालपटहादिसमूहं आजघ्नुः। यद्वा तुमुलकलनिनादमिति आजघ्नुरिति क्रियाया विशेषणं मन्द्रमधुरध्वनि यथा तथा तूर्यं वादयामासुरित्यर्थः। आङ्पूर्व्वात् हन्तेर्लिट् अकर्म्मकत्वाभावान्न आत्मनेपदम्। अभिमतं इष्टं फलं शंसतीति अभिमतफलशंसी वाहुर्दक्षिणवाहुः चारु मनोज्ञं यथा तथा पुस्फोर पस्पन्द। दक्षिणवाहुस्पन्दनं परिणयशंसीति सीताप्राप्तिवीजमुपन्यस्तम्। तरुषु मार्गप्रान्तस्थितेषु वृक्षेषु सुखमासीना इति शेषः अनुकूला वामपार्श्ववर्त्तित्वात् सुशकुनाः पक्षिणः उच्चैः अमन्दं चुकुवुः कूजन्ति स्म। तेषां कूजनेन भाविशुभं सूचितमिति भावः। यदुक्तं "वामे मधुर-

अभिमतफलशंसी चारु पुस्फोर बाहुः
तरुषु चुकुवुरुच्चैः पक्षिणश्चानुकूलाः ॥ २७ ॥

इति भट्टिकाव्ये रामोत्पत्तिर्नाम प्रथमः सर्गः ।

वाक् पक्षी वृक्षः पल्लवितोऽग्रतः । अनुकूलो वहन् वायुः प्रयाणे शुभशंसिनः" इति ॥ २७ ॥

इति भट्टिकाव्यस्य टीकायां प्रथमः सर्गः ।

---

## द्वितीयः सर्गः ।

---

वनस्पतीनां सरसां नदीनां
तेजस्विनां कान्तिभृतां दिशाञ्च ।
निर्याय तस्याः स पुरः समन्तात्
श्रियं दधानां शरदं ददर्श ॥ १ ॥
तरङ्गसङ्गाच्चपलैः पलाशैः
ज्वालाश्रियं सातिशयां दधन्ति ।

इदानीं विजिगीषूणां कण्टकान् समुद्धर्त्तुं शरत्काले समुद्योग एव व्यवहार इति तमेव वर्णयति वनस्पतीनामिति। स रामः तस्याः पुरो नगर्य्या अयोध्याया निर्याय निर्गत्य समन्तात् सर्वतः वनस्पतीनां पादपानां, फलसम्पत्त्या इति भावः, सरसां जलाशयानां कमलसमृद्ध्या, नदीनां सरितां प्रसन्नाम्बुतया, तेजस्विनां चन्द्रनक्षत्रादीनां दीप्तिविशेषापादनेन, कान्तिभृतां मेघाद्यवरोधाभावात् शोभमानानां दिशां नैर्म्मल्यविधानेन इत्यर्थः, श्रियं दधानां धारयन्तीं शरदं ददर्श। वृक्षादीनां शोभाविशेषरूपं कार्य्यमवलोक्य शरत्कालोऽयं समायात इत्यसौ प्रत्यभिजज्ञौ इति तात्पर्य्यार्थः अन्यथा कालस्य प्रत्यक्षयोग्यत्वाभावात् अनुपपत्तिः स्यात् ॥ १ ॥

तरङ्गेति । तरङ्गसङ्गात् हिल्लोलाभिघातात् चपलैः चञ्चलैः

सधूमदीप्ताग्निरुचीनि रेजुः
ताम्रोत्पलान्याकुलषट्पदानि ॥ २ ॥
विम्बागतैस्तीरवनैः समृद्धिं
निजां विलोक्यापहृतां पयोभिः ।
कूलानि सामर्षतयेव तेनुः
सरोजलक्ष्मीं स्थलपद्महासैः ॥ ३ ॥

पलाशैः पत्रैः सातिशयां अधिकां ज्वालाश्रियं दधन्ति अग्निशिखावत् शोभमानानीत्यर्थः । आकुलाः पत्राणां कम्पनवशादस्थिराः षट्पदा भ्रमरा येषु तानि अतएव सधूमदीप्ताग्निरुचीनि प्रधूमितज्वलितवह्निकल्पानि ताम्रोत्पलानि लोहितकमलानि रेजुः चकाशिरे। षट्पदानां कृष्णवर्णत्वात् धूमतुल्यत्वं पद्मानाञ्च लौहित्यात् प्रदीप्ताग्निसाम्यमिति भावः ॥ २ ॥

विम्बागतैः इति । कूलानि तीरस्थलानि पयोभिः सरोभिः कर्तृभिः विम्बागतैः प्रतिविम्बितैः तृतीयेति योगविभागात् समासः तीरवनैस्तीरस्थितपादपसमूहैः पुष्पितैरित्यर्थः तैः करणभूतैर्निजां समृद्धिं श्रियं अपहृतां मुषितां विलोक्य सामर्षतया रोषादिव स्थलपद्महासैः तीरस्थितस्थलकमलविकाशैः सरोजानां पयःसु जातानां पद्मानां लक्ष्मीं शोभां तेनुः चक्रुरित्यर्थः । शरदि तीरेषु स्थलकमलानीव सरसीषु पङ्कजानि राजन्ते इति भावः ॥ ३ ॥

निशातुषारैर्नयनाम्बुकल्पैः
पत्रान्तपर्य्यागलदच्छबिन्दुः ।
उपारुरोदेव नदत्पतङ्गः
कुमुद्वतीं तीरतरुर्दिनादौ ॥ ४ ॥

वनानि तोयानि च नेत्रकल्पैः
पुष्पैः सरोजैश्च निलीनभृङ्गैः ।
परस्परां विस्मयवन्ति लक्ष्मीं
आलोकयाञ्चक्रुरिवादरेण ॥ ५ ॥

निशेति । नयनाम्बुकल्पैः नयनानुकारिषु पत्रेषु स्थितत्वात् नेत्रजलतुल्यैः निशातुषारैः रात्रिसंभूतहिमैः हेतुभूतैः इत्यर्थः पत्राणामन्तात् पर्य्यागलन्तश्च्योतन्तः अच्छा निर्मला बिन्दवः सीकरा यस्य स तथोक्तः, नदन्तः कूजन्तः पतङ्गाः पक्षिणो यत्र स नदत्पतङ्गः पतङ्गकूजनेन रोदनध्वनिमनुकुर्व्वन्निति भावः, तीरतरुः तीरस्थितवृक्षः दिनादौ उषसि कुमुद्वतीं उपारुरोदेव । कुमुदनड्त्यादिना ड्मतुप् । निशानाथस्य अस्तमनात् कुमुदिनीं निमीलितां दृष्ट्वा दयार्द्रस्तामनुशुशोच इव इत्युत्प्रेक्षा । रुदेरुपसर्गयोगात् सकर्म्मकत्वम् ॥ ४ ॥

वनानीति । वनानि तीरोपरिस्थितकाननानि तोयानि सरांसि च निलीनभृङ्गैः संसक्तषट्पदैः अतएव नेत्रकल्पैः नयनानुकारिभिः पुष्पैर्मालत्यादिभिः सरोजैश्च आदरेण औत्सुक्यात्

प्रभातवाताहतिकम्पिताकृतिः
कुमुद्वतीरेणुपिशङ्गविग्रहम्।
निरास भृङ्गं कुपितेव पद्मिनी
न मानिनी संसहतेऽन्यसङ्गमम्॥ ६॥
दत्तावधानं मधुलेहिगीतौ
प्रशान्तचेष्टं हरिणं जिघांसुः।

परस्परां परस्परसम्बन्धिनीं लक्ष्मीं श्रियं विस्मयवन्ति सन्ति शोभातिशयात् साश्चर्य्यमित्यर्थः आलोकयाञ्चक्रुरिव॥ ५॥

प्रभातेति। प्रभातवातस्य आहत्या अभिघातेन कम्पिता विधूनिता आकृतिर्यस्याः सा तथोक्ता पद्मिनी कुपिता इव। कोपेऽपि शरीरकम्पनं भवतीत्यस्याः कोपः अनुमीयते। कुमुद्वतीरेणुपिशङ्गविग्रहं कुमुदिनीपरागपिङ्गलदेहम्। शठनायकोऽपि दयितान्तरसङ्गात् संक्रान्ततत्परिमलदेहो भवतीति सूचितम्। भृङ्गं निरास निरस्यति स्म तस्य प्रत्याख्यानमकार्षीदित्यर्थः। तथाहि मानिनी मानः प्रणयकोपस्तदन्विता नायिका अन्यया दयितान्तरेण सङ्गमो यस्य तं ईशं पतिं न सहते न क्षम्यते, तथाऽन्यस्त्रीसंसर्गचिह्नमुपलभ्य प्रकुप्यतीति भावः॥ ६॥

दत्तेति। मधु लेढुं शीलमेषामिति मधुलेहिनस्तेषां गीतौ ध्वनौ दत्तावधानं अभिनिविष्टचेतसं अतः प्रशान्तचेष्टं स्थिरं हरिणं जिघांसुः हन्तुमिच्छुः मृगं विध्यतीति मृगावित् व्याधः। विधतेः क्विप् ततः सम्प्रसारणं पूर्व्वपदस्य दीर्घश्च। चक्रुतमाः

आकर्णयन्नुत्सुकहंसनादान्
लक्ष्ये समाधिं न दधे मृगावित् ॥ ७ ॥
गिरेर्नितम्बे मरुता विभिन्नं
तोयावशेषेण हिमाभमभ्रम् ।
सरिन्मुखाभ्युच्चयमादधानं
शैलाधिपस्यानुचकार लक्ष्मीम् ॥ ८ ॥

सरसीसन्तरणादिरूपेष्टकार्य्यतत्परा ये हंसास्तेषां नादान्, "इष्टार्थोद्युक्त उत्सुकः" इत्यमरः, आकर्णयन् शृण्वन् सन् लक्ष्ये हरिणरूपे समाधिं चित्तैकाग्रतां न दधे न धारयामास । भृङ्गसङ्गीतश्रवणेन निश्चलमपि हरिणं हन्तुं हंसकलरवाकर्णने व्यासक्तचित्तो व्याधो धृतिं न बबन्धेति भावः ॥ ७ ॥

गिरेरिति । गिरेर्नितम्बे मध्यभागे स्थितमित्यर्थः मरुता वायुना विभिन्नं विह्वलीकृतं विचालितमित्यर्थः सरिन्मुखानां गिरिनदीनिर्गमस्थानानां अभ्युच्चयं वृद्धिं आदधानं विदधत् वर्षणेनेति भावः । अतः तोयावशेषेण जलाभावेन हिमाभं हिमस्तोमसन्निभं तद्वत् शुभ्रमित्यर्थः । जलाभावेनैव मेघस्य शुभ्रत्वं भवति जलाभावश्च दृष्ट्या सरिन्मुखाभ्युच्चयाधानेन सूचित एव । अतः "पयसोऽवशिष्टतया हिमसदृशम्" इति यत् जयमङ्गलेन व्याख्यातं तत् न सम्यक् । अभ्रं मेघः शैलाधिपस्य हिमवतो लक्ष्मीं श्रियमनुचकार, हिमगिरेः तुषारधवलशृङ्गमिव बभौ इति भावः । यद्यपि सरिन्मुखपदेन सरित्सागरयोः सङ्गमस्थान-

गर्ज्जन् हरिः साम्भसि शैलकुञ्जे
प्रतिध्वनीनात्मकृतान्निशम्य ।
क्रमं बबन्ध क्रमितुं सकोपः
प्रतर्कयन्नन्यमृगेन्द्रनादान् ॥ ९ ॥
अदृक्षताम्भांसि नवोत्पलानि
रुतानि चाश्रोषत षट्पदानाम् ।

मेवाभिधीयते तथापि मुखशब्द आद्यभागार्थेऽपि वर्त्तते तथाच यस्मात् स्थानात् शैलनिर्गता नदी प्रवोढुमारभते तदेवात्र विवक्षितम् ॥ ८ ॥

गर्ज्जन्निति । साम्भसि सजले कूपादिसान्निध्यादिति भावः । शैलकुञ्जे पर्व्वतोत्सङ्गस्थितनिकुञ्जे पर्वतोपरिस्थलतादिपिहितस्थाने गर्ज्जन् हरिः सिंहः आत्मकृतान् प्रतिध्वनीन् प्रतिशब्दान् निशम्य श्रुत्वा अन्यमृगेन्द्रस्य प्रतिद्वन्द्विसिंहान्तरस्य नादान् स्पर्द्धासूचकध्वनीन् प्रतर्कयन् आकलयन् सकोपः क्रोधान्धः सन् क्रमितुं उत्पतितुं क्रमं उत्पतनानुकूलचेष्टां बबन्ध चकार इत्यर्थः । न खलु क्रोधान्धानां समीक्ष्यकारिता सम्भवतीति भावः ॥ ९ ॥

एवं सामान्यतः शरद्धर्मान् वर्णयित्वा रामचेष्टितवर्णनार्थं तान् विशेषेण कथयितुमुपक्रमते अदृक्षतेति । तेन पुण्याश्रयायिना रामेण नवोत्पलानि नवोत्फुल्लकमलमण्डितानि अम्भांसि अदृक्षत दृष्टानि, षट्पदानां भृङ्गाणां रुतानि गुञ्जितानि अश्रोषत श्रुतानि च, अरविन्दैः पद्मैः व्यतिषङ्गः सम्पर्कोऽप्राप्य

आघ्रायि वान् गन्धवहः सुगन्धः
तेनारविन्दव्यतिषङ्गवांश्च ॥ १० ॥
लतानुपातं कुसुमान्यगृह्णात्
स नद्यवस्कन्दमुपास्पृशच्च।
कुतूहलाच्चारुशिलोपवेशं
काकुत्स्थ ईषत् स्मयमान आस्त ॥ ११ ॥

असौ अरविन्दव्यतिषङ्गवान् अतः सुगन्धः सुरभिः वातीति वान् मन्दं मन्दं प्रवहन्, वातेः शतृप्रत्ययः, गन्धवहो वायुराघ्रायि आघ्रातश्च। सुगन्ध इत्यत्र समवायसम्बन्धेन गन्धवत्त्वाभावात् सुगन्ध आपणिक इतिवत् इकारः समासान्तो न भवतीत्यनुसन्धेयम् ॥१०॥

लतेति। ककुदि वृषरूपिण इन्द्रस्य इत्यर्थः तिष्ठतीति काकुत्स्थ इक्ष्वाकुवंशीयोनृपविशेषः तस्य अपत्यं पुमान् काकुत्स्थः स रामः कुतूहलात् अदृष्टपूर्वग्रामगरतृशोभादिपदार्थदर्शनजनितकौतुकात् लतानुपातं लतां लतां अनुपात्य आवर्ज्य कुसुमानि अगृह्णात्, गृहीतवान् यद्वा लतानां पातस्य पश्चात् लतानुपातमित्यव्ययीभावः, नद्यवस्कन्दं नदीं नदीं अवस्कन्द्य सर्वा नदीः अभिगम्य। नदीमवस्कन्द्यावस्कन्द्येति वार्थः। स्कन्दतेर्गत्यर्थात् णमुल्। उपास्पृशत् आचमनं कृतवांश्च भरतस्तु "नद्यवस्कन्दं उपास्पृशत् स्नातवान्। नद्याश्रवस्कन्दः अवगाहो यत्र स्नानक्रियायामिति" व्याचष्टे। "उपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपि" इति विश्वः। चारुशिलोपवेशं चारुशिलां

तिग्मांशुरश्मिच्छुरितान्यदूरात्
प्राञ्चि प्रभाते सलिलान्यपश्यत् ।
गभस्तिधाराभिरिव द्रुतानि
तेजांसि भानोर्भुवि सम्भृतानि ॥ १२ ॥
दिग्व्यापिनीर्लोचनलोभनीया:
मृजान्वया: स्नेहमिव स्रवन्ती: ।

चारुशिलां उपविश्य, चारुशिला उपविश्य उपविश्य वा, यद्वा चारुशिलासु उपवेशोवसनं यत्रासनक्रियायां एवं, ईषत् स्मयमानो मन्दहास्यं कुर्व्वन् आस्त आसितवान् । आसेर्लङि रूपम् । यद्यपि स्मिङ्धातोरीषद्धसनमेवार्थस्तथापि ईषच्छब्देन अत्यन्तानुपलभ्यहास्यत्वेन रामस्य गाम्भीर्य्यं सूचितम् ॥ ११ ॥

तिग्मांश्विति । प्रभाते स राम: अदूरात् समीपे तिग्मांशुश्चण्डांशु: सूर्य्यस्तस्य रश्मिभि: किरणैश्छुरितानि रञ्जितानि तिग्मांशुरश्मिच्छुरितानि द्रुतानि शरदि मार्त्तण्डस्य तापाधिक्यात् द्रवीभूतानि अतएव गभस्तयो रश्मयो धारा इव गभस्तिधारास्ताभिर्भुवि सम्भृतानि पृथिवीतलमानीय एकत्र राशीकृतानि भानो: तेजांसि इव स्थितानीत्युत्प्रेक्षा । यद्वा गभस्तिधाराभि: करणभूतै: द्रुतानि सूर्य्यमण्डलात् क्षरितानि भुवि सम्भृतानि भानोस्तेजांसि इव स्थितानीत्यन्वय: अतएव प्राञ्चि पूर्व्वस्यां दिशि अवस्थितानि प्रपूर्व्वादञ्चते: क्विप् । सलिलानि अपश्यत् ॥ १२ ॥

ऋज्वायताः शस्यविशेषपङ्क्तीः
तुतोष पश्यन् वितृणान्तरालाः ॥ १३ ॥
वियोगदुःखानुभवानभिज्ञैः
काले नृपांशं विहितं ददद्भिः ।
आहार्य्यशोभारहितैरमायैः
ऐक्षिष्ट पुंभिः प्रचितान् स गोष्ठान् ॥ १४ ॥

दिव्यापिनीरिति । स रामः दिव्यापिनीः दिशामुपान्तपर्य्यन्तं प्रसारिताः लोभयन्तीति लोभनीयाः, रमणीयादिपदवत् कर्त्तर्य्यनीयः, लोचनानां लोभनीया आकर्षकाः, मृजा मार्जनं शुद्धिस्तया अन्वयः अनुगमो यासां ताः परिष्कृतगुच्छा इत्यर्थः, स्नेहं स्रवन्तीः इव स्निग्धतां चरन्तीः इव, मसृणत्वातिशय्यादियुक्ता चा। ऋजवश्च ता आयताश्चेति ऋज्वायता अवक्रविस्तारोपलक्षिता इत्यर्थः। वितृणं तृणहीनं उत्पाटिततृणं अन्तरालं मध्यः यासां ताः शस्यविशेषाणां शाल्यादीनां पङ्क्तीः राजीः पश्यन् तुतोष ननन्द ॥ १३ ॥

वियोगेति। स रामः वियोगेन स्वजनविरहेण यत् दुःखं तस्य अनुभवः तस्य तत्र वा अनभिज्ञा तदनुभवरहिताः तैः तथोक्तैः तेषां पुत्रदारैः सह सर्वत्र गमनात् प्रवासक्लेशासहनाद्वा इति भावः, न कदाचिदपि सोढ़स्वजनविरहवेदनैः इत्यर्थः। काले विहितं यस्मिन् काले यावानंशोदेय इत्यवधारितं तस्मिन् काले तावन्तं नृपांशं नृपप्राप्यमंशं करं ददद्भिः अमायैरवञ्चकैः

स्त्रीभूषणं चेष्टितमप्रगल्भं
चारूण्यवक्राण्यपि वीक्षितानि ।
ऋजूंश्च विश्वासकृतः स्वभावान्
गोपाङ्गनानां मुमुदे विलोक्य ॥ १५ ॥

ऋजुस्वभावैरित्यर्थः, आहार्य्या कटककुण्डलादिभिराहरणीया कृत्रिमा इत्यर्थः या शोभा तया रहितैः नगरप्रसिद्धकृत्रिमभूषणाभिप्रायफलाद्यनभिज्ञैरित्यर्थः पुंभिः पुरुषैः गोपैः अञ्चितान् व्याप्तान् गावस्तिष्ठन्ति एष्विति गोष्ठास्तान् "सुपिस्थ" इति कः ऐक्षिष्ट ददर्श । ईक्षतेर्लुङि रूपम् ॥ १४ ॥

स्त्रीभूषणमिति । स गोपाङ्गनानां गोपिकानां अप्रगल्भं सहजशालीन्ययुतं अतः स्त्रीभूषणं स्त्रीणामलङ्कारस्वरूपं चेष्टितं गमनासनाभाषणादिकां क्रियां, तथा अवक्राणि कटाक्षादिराहित्यात् सरलान्यपि चारूणि मनोहराणि वीक्षितानि विलोकितानि, गोपाङ्गनानयनानां भ्रूविलासानभिज्ञत्वात्, ऋजून् कौटिल्यशून्यान् विश्वासकृतः विश्वासस्य जनकान् स्वभावान् स्वाभिप्रायान् च विलोक्य मुमुदे हृष्टवान् । स्वभावस्य कार्य्यविलोकनादेव तद्विलोकनव्यपदेशः । विलासशून्यमपि स्वभावमधुरं गोपाङ्गनानां चेष्टितं दृष्ट्वा स नितरां तुतोष इति भावः । तथाच "विभ्रमा नागरस्त्रीणां न तथा रमयन्ति नः । यथा स्वभावसिद्धानि वृत्तानि वनयोषिताम्" इति ॥ १५ ॥

विवृत्तपार्श्वं रुचिराङ्गहारं
समुद्वहच्चारुनितम्बरम्यम्।
आमन्द्रमन्थध्वनिदत्ततालं
गोपाङ्गनानृत्यमनन्दयत् तम्॥ १६॥
विचित्रमुच्चैः प्लवमानमारात्
कुतूहलं वत्सु ततान तस्य।
मेघात्ययोपात्तवनोपशोभं
कदम्बकं वातमृगं मृगाणाम्॥ १७॥

विवृत्तेति। विवृत्ते तिर्य्यक् चलिते पार्श्वे यत्र तत् तथोक्तं, ललिताङ्गहारं मनोज्ञाङ्गविक्षेपं, "अङ्गहारोऽङ्गविक्षेपः" इत्यमरः, समुद्वहता तिर्य्यक् समुद्गच्छता चारुणा दर्शनीयेन नितम्बेन रम्यं मनोहरं, आमन्द्र ईषद्गम्भीरो यो मन्थध्वनिः दधिविलोड़नशब्दस्तेन दत्तस्तालो यत्र तत् आमन्द्रमन्थध्वनिदत्ततालं गोपाङ्गनानां नृत्यं नृत्याभिनयानुकारिणी अङ्गभङ्गी तं रामं अनन्दयत् अतोषयत्॥ १६॥

विचित्रमिति। मेघात्ययेन मेघापगमेन उपात्तं वृष्ट्यभावात् प्राप्तमित्यर्थः यत् वनं तस्मिन् उपशोभते यत् तत् मेघात्ययोपात्तवनोपशोभम्। वर्षासु गिरिकन्दराद्याश्रया मृगाः सम्प्रति शरदागमे वनभूमिमाप्य मोदमानाश्चारुदर्शनाः सञ्चरन्ति इति भावः। विचित्रं शोभनलक्षणलात् शबलं, वत्सु शवशीलं, चलिरटधीत्यादिना क्रुः, अतः आरात् उच्चैः प्लवमानं यदृच्छया

सितारविन्दप्रचयेषु लीनाः
संसक्तफेनेषु च सैकतेषु।
कुन्दावदाताः कलहंसमालाः
प्रतीयिरे श्रोत्रसुखैर्निनादैः ॥ १८ ॥

समीपमागत्य पलायितुं प्रसभादुत्पतत् वातमजति वाताभिमुखं गच्छतीति वातमजम्। वातोपपदादजतेः खश्। अयमेव हि हर्षभरोन्मत्तानां मृगाणां स्वभावो यदनिलाभिमुखं प्रधावनम्। तथाहि कुमारे "मृगाः प्रियालद्रुममञ्जरीणां रजःकणैर्विघ्नित-दृष्टिपाताः। मदोद्धताः प्रत्यनिलं विचेरुर्वनस्थलीर्मर्मरपत्र-मोक्षाः" इति। मृगाणां कदम्बकं वृन्दं तस्य कुतूहलं कौतुकं दर्शनौत्सुक्यं ततान विदधौ ॥ १७ ॥

सितेति। सितारविन्दप्रचयेषु धवलकमलसङ्घेषु संसक्तफेनेषु संलग्नडिण्डीरेषु सैकतेषु सिकतामय-प्रदेशेषु पुलिनेषु च लीनाः संवृतशरीराः कुन्दावदाताः कुन्दकुसुमशुभ्राः कलहंसमालाः कादम्बराजयः। "कादम्बे कलहंसः स्याद्राजहंसे च दृश्यते" इति। श्रोत्रसुखैः श्रवणसुखदैः निनादैर्ध्वनिभिः प्रतीयिरे ज्ञाताः तैरेति विभक्तिविपरिणामेन सम्बन्धः। प्रतिपूर्वात् इणधातोः कर्मणि लिट्। पुण्डरीकेषु सैकतेषु च लीयमानाः कलहंसा धवलत्वात् तेषामेकावयवत्वेनोपलब्धा न पृथक् ज्ञाताः पृथक्तया विभाविताः यावत् ध्वनितम् ॥ १८ ॥

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तत् यदलीनषट्पदम्।
न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः॥ १८॥
तं याथजूकाः सह भिक्षुमुख्यैः
तपःकृशाः शान्त्युदकुम्भहस्ताः।

शरद्वर्णनमुपसंहरन्नाह नेति। किम्बहुना सर्वथा तत् जलं न, यत् सुचारुपङ्कजं मनोज्ञसरोजशोभितं न बभूव। तथा तत् पङ्कजं न, यत् न लीनाः न संसक्ताः षट्पदा भ्रमरा यत्र तत् अलीनषट्पदं आसीत्। असौ षट्पदो न, यः कलं मधुरास्फुटं न जुगुञ्ज न गुञ्जितवान्, गुञ्जधातोर्लिट्। अपिच तत् गुञ्जितं न, यत् मनो न जहार आचकर्ष रामस्य लोकस्य वा इति शेषः॥ १८॥

तमिति। तपसा पराकचान्द्रायणादिव्रतैः कृशाः क्षीणा याथजूका अत्यर्थं यजनशीला वानप्रस्थाः। यजतेर्यङन्तात् ऊकः ततो यङोलुक्। भिक्षुमुख्यैः परिव्राजकप्रधानैः सह शान्त्यर्थं य उदकुम्भः स हस्ते येषां ते तथोक्ताः सन्तः। उदकस्योदादेशः। जगदर्चनीयं जगतां पूज्यं विष्णोरवतारत्वात् सकलैः वन्दनीयं तं प्रापचुः आचारात् शिरसि शान्त्युदकाभ्युक्षणेन सम्भावयामासुरित्यर्थः। तथा अचर्या महनीयचरिता यायावरा अनियतोऽयाममवसा अन्ये मुनयः। यातेर्यङन्तात् वरच् यङो लुक्च।

यायावराः पुष्पफलेन चान्ये
प्राणर्चुरर्च्चा जगदर्च्चनीयम् ॥ २० ॥
विद्यामथैनं विजयां जयाञ्च
रक्षोगणं क्षिप्नुमविक्षतात्मा।
अध्यापिपद्गाधिसुतो यथावत्
निघातयिष्यन् युधि यातुधानान्(१) ॥२१॥

केचित् तु यायावरा इत्यत्र याधातोर्ज्ञानार्थत्वं कल्पन्ते, "सर्व्वे गत्यर्थाः प्राप्त्यर्था ज्ञानार्थाश्च" भवन्ति इति नियमबलात्। तस्मात् यायावरा अत्यर्थज्ञानशीला इत्यर्थः। पुष्पाणि फलानि च तेषां समाहारः पुष्पफलम्। जातिरप्राणिनामिति द्वन्द्वैकवद्भावः। तेन तं प्रापणं: पूजितवन्तः। तपोवनसन्निधानमुपागतो रामस्तत्रत्यैः वैखानसैः यतिभिरन्यैरनियतनिलयैः मुनिभिश्च सर्व्वैरेवाभिनन्दित आसीदिति भावः ॥ २० ॥

विद्यामिति। अथ अविक्षतो रागादिना अनभिभूत आत्मा चित्तवृत्तिः यस्य स तथोक्तः जितेन्द्रिय इत्यर्थः। एतेन तद्दत्ता विद्या अमोघा भविष्यतीति सूचितम्। युधि युद्धे यातुधानान्

आयोधने स्थायुकमस्त्रजातम्
अमोघमस्यर्णमहाहवाय ।

राक्षसान् निघातयिष्यन् मारयिष्यन्, रामद्वारेति शेषः, गाधिसुतो गाधिराजपुत्रो विश्वामित्रः रक्षोगणं चिप्रं, वसिष्ठधीत्यादिना क्नुः, न लोकेति षष्ठीप्रतिषेधात् द्वितीयैव । अभिभवितुं समर्थं एनं रामं विजयां जयां च नाम विद्यां जयजनकं मन्त्रविशेषद्वयं यथावत् यथाशास्त्रं अध्यापिपत् अध्यापितवान् । णिजन्तस्याधिपूर्वस्य इङो लुङि रूपम् । चिप्रमिति विद्यामित्रस्य विशेषणमिति केचित् । एनमिति इदमसमानार्थकस्य एनशब्दस्य रूपम् ॥ २१ ॥

न केवलं दैवेन किन्तु प्राह्मेनाप्युपायेन तस्य अजेयत्वं प्रति-

---

नोत्तरे प्रतिपत्तव्ये त्वत्तुल्यो वा भविष्यति ।
एतद्विद्याद्वयं प्राप्य यशश्चाप्यसमाप्स्यसि ॥
बलामतिबलाञ्चैव ज्ञानविज्ञानमातरौ ।
क्षुत्पिपासे च राम त्वां नात्यर्थं पीडयिष्यतः ॥
अयत्र दुर्गकान्तारप्रदेशेष्वटवीषु च ।
सारतां त्रिषु लोकेषु गमिष्यसि च राघव ॥
पितामहसुते ह्येते विद्ये चातुर्यकारके ।
पात्रं त्वमसि काकुत्स्थ विद्ययोरुभयोरनयोः ॥
स्वभावजैर्गुणैर्ये दिव्यैः कर्म्मते बहुलैर्युतः ।
भूयस्त्वं गुणोत्कर्षमेते विद्ये करिष्यतः ॥
ततो रामो जलं स्पृष्ट्वा प्राञ्जलिः प्रयतः स्थितः ।
प्रतिजग्राह ते विद्ये विश्वामित्रात् तपोधनात् ॥

Adikanda, Chapter xxv.

ददौ वधाय क्षणदाचराणां
तस्मै मुनिः श्रेयसि जागरूकः ॥ २२ ॥
तं विप्रदर्शं कृतघातयत्ना
यान्तं वने रात्रिचरी डुढौके।
जिघांसुवेदं धृतभासुरास्त्रः
तां ताड़काख्यां निजघान रामः ॥ २३ ॥

पादितमित्याह आयोधने इति। श्रेयसि तत्कल्याणे जागरूकः सावधानोमुनिः क्षणदाचराणां निशाचराणां राक्षसानां वधाय निधनार्थं अभ्यर्णमहाहवाय आसन्नतुमुलसंग्रामाय तस्मै रामाय। आह्वयन्ते योद्धारोऽस्मिन् युद्धायेति आहवः, आङ्पूर्वकात् ह्वयतेः अप्। अभ्यर्ण इति अभिपूर्व्वादर्द्दधातोः क्तः निपातनात् साधु। आयुध्यन्ते अस्मिन् इति आयोधनं संग्रामः तस्मिन् स्थायुकं स्थिति-करणशीलं अभङ्गुरं जयावहत्वादिति भावः अतएव अवन्ध्य' अप्रयासोषत्वात् अमोघं अस्त्रजातं अस्त्रसमूहं ददौ ॥२२॥

तमिति। सर्व्वान् विप्रान् दृष्ट्वा विप्रदर्शम्। "कर्मणि दृश-विदोः साकल्ये" इति णमुल्। रामादीन् सर्व्वानेव विप्रान् मन्यमानैस्त्वर्थः। कृतघातयत्ना कृतमारणाभियोगा रात्रिचरी वने यान्तं तं रामं डुढौके आससाद। ढौकधातोर्गत्यर्थात् लिट्। जिघांसुं विदित्वा जिघांसुवेदं, पूर्व्ववत् णमुल्। रम्भमिख्ययिमिति ग्रासा एतं धृतीमं भासुरं दीप्रमस्त्रं येन

अथालुलोके हुतधूमकेतु-
शिखाञ्जनस्निग्धसमृद्धशाखम्।
तपोवनं प्राध्ययनाभिभूत-
समुच्चरच्चारुपतत्त्रिशिञ्जम्॥ २४॥
क्षुद्रान् न जघ्नुर्हरिणान् मृगेन्द्राः
विशश्वसे पक्षिगणैः समन्तात्।

स तथोक्तः रामः अपि ताड़काख्यां ताड़काभिधानां तां निशाचरीं निजघान निहतवान् इत्यर्थः लिट्॥ २३॥

अथेति। अथ राक्षसीं हत्वा रामः हुतो यो धूमकेतुरग्निः तस्य शिखा अर्चिः तस्याः अञ्जनं तेन स्निग्धा मसृणीकृताः सान्द्रीकृता वा। "स्निग्धन्तु मसृणे सान्द्रे" इत्यमरः। समृद्धाः फलपुष्पसम्पदन्विताय शाखाः यस्य तत् तथोक्तम्। तथा प्राध्ययनेन वेदपाठेन अभिभूता तिरस्कृता समुच्चरन्ती समुद्गच्छन्ती चार्व्वी श्रुतिसुखा पतत्रिणां पक्षिणां शिञ्जा अस्फुटशब्दः यत्र तत् तथोक्तं तपोवनं आलुलोके। अपश्यत् ददर्श। यद्यपि धूमकेतुशब्द उत्पातविशेषे रूढ़स्तथापि धूमः केतुश्चिह्नमनुमानसाधनं यस्येति योगादनलार्थे वर्त्तते॥ २४॥

क्षुद्रानिति। तत्र तपोवने मृगेन्द्राः सिंहाः क्षुद्रान् हीनबलान् हरिणान् न जघ्नुः अघयामासुः। अत्र लिटि रूपम् अदो घसादेशः। पक्षिगणैः काकोलूकादिभिर्जातिविरोधिभिः) मकुलैः समन्तात् सर्व्वत्र विशश्वसे विश्वस्तम् भावे लिट्। पर-

नंनम्यमाना: फलदित्सयेव
चकाशिरे तत्र लता विलोला: ॥ २५ ॥
अपूपुजन् विष्टरपाद्यमाल्यै-
रातिथ्यनिष्णा वनवासिमुख्या: ।
प्रत्यग्रहीष्टां मधुपर्कमिश्रं
तावासनादि क्षितिपालपुत्रौ ॥ २६ ॥
दैत्याभिभूतस्य युवामवोढं
मग्नस्य दोर्भिर्भुवनस्य भारम् ।

सरादशङ्कमानै: स्थितमित्यर्थ: । तपोवनमहिम्ना तत्र ऐकान्ततोऽहिंसाराहित्यमासीदिति भाव: । विलोला वायुविधूनिता लता: फलानां दित्सा दानेच्छा तया इव मुनिभ्य: फलानि प्रदातुमिव नंनम्यमाना अतिशयेन अवनम्रा भवन्त्य: । नमतेर्यङ् तत: शानच् । चकाशिरे शुशुभिरे ॥ २५ ॥

अपूपुजन्निति । आतिथ्ये अतिथिसत्कारे निष्णा: कुशला:, निपूर्व्वकात् स्नाधातो: क्त:, "निनदीभ्यां स्नाते: कौशले" इति षत्वम् । वनवासिषु मुख्या: श्रेष्ठा: मुनिवर्य्या इत्यर्थ: । विष्टरपाद्यमाल्यै: कुशासनपादार्घोदकस्रग्भि: अपूपुजन् पूजितवन्त: ताविति शेष: । तौ क्षितिपालपुत्रौ राजकुमारौ मधुपर्केण मिश्रं युक्तं तेन सह इत्यर्थ: आसनादि प्रत्यग्रहीष्टां स्वीचक्रतु:, प्रतिपूर्व्वकात् ग्रहेर्लुङ् ॥ २६ ॥

दैत्येति । युवां नरनारायणरूपिणौ भवन्तौ, दितेरपत्यानि

हवींषि सम्प्रत्यपि रक्षतं तौ
तपोधनैरित्यमभाषिषाताम् ॥ २७ ॥
तान् प्रत्यवादीदथ राघवोऽपि
यथेप्सितं प्रस्तुत कर्म्म धर्म्म्यम्।
तपोमरुद्भिर्भवतां शराग्निः
संधुक्ष्यतां नोऽरिसमिन्धनेषु ॥ २८ ॥

दैत्यास्तैरभिभूतस्य उपप्लुतस्य मग्नस्य नष्टप्रायस्य भुवनस्य भारं दोर्भिर्भुजैर्भुजबलेन अवोढ़ धारितवन्तौ। वहेर्लुङ्। पुरा किल हिरण्याक्षादिभिरुपद्रुतं सङ्कटमापन्नं भूमण्डलमुद्धृत्य भवद्भ्यां स्वभुजवीर्य्यं प्रख्यापितमित्यर्थः। सम्प्रत्यपि अधुनापि हवींषि अस्माकं हवनीयानि मारीचादिभिरुपहन्यमानानीति शेषः। रक्षतं प्रार्थनायां लोट्, इत्थं तौ क्षितिपालपुत्रौ तप एव धनं येषां तैस्तपोवीर्य्यवद्भिर्मुनिभिरभाषिषातां भाषितौ। भाषेः कर्म्मणि लुङ्॥ २७॥

तानिति। अथ रघोरपत्यं राघवः रामोऽपि यूयं ईप्सितमनतिक्रम्य यथेप्सितं यथेच्छं धर्म्मादनपेतं धर्म्म्यं कर्म्म यागादि प्रस्तुत प्रारभध्वं। प्रपूर्व्वात् प्रारम्भार्थकात् स्तौतेः नियोगकरणे लोट्, मध्यमपुरुषबहुवचनम्। नोऽस्माकं शराग्निः भवतां तपांसि एव मरुतस्तैस्तपोवायुभिः करणभूतैः समिध्यते यैस्तानि समिन्धनानि दाह्यद्रव्याणि अरयः शत्रव एव समिन्धनानि तेषु संधुक्ष्यतां दीप्यताम्। इति तान् तपोधनान् प्रत्यवादीत् प्रत्युक्तवान्।

प्रतुष्टुवुः कर्म्म ततः प्रकृप्तैः
ते यज्ञियैर्द्रव्यगणैर्यथावत् ।
दक्षिण्यदिष्टं कृतमार्त्त्विजीनैः
तद् यातुधानैश्चिचिते प्रसर्पत् ॥ २९ ॥
आपिङ्गरुक्षोर्द्ध्वशिरस्यबालैः
शिरालजङ्घैर्गिरिकूटदघ्नैः ।

भवन्तो यागमारभन्तां, यदि यातुधानास्तमुपहन्तुमागच्छन्ति, तदा तान् हनिष्यामीति रामस्तेभ्यः प्रतिशुश्राव इत्यर्थः ॥२८॥

प्रतुष्टुवुरिति । ततो रामवचनान्तरं ते मुनयः दक्षिणां अर्हन्तीति दक्षिण्या ब्रह्मत्वेनारोपिताः महर्षयः तैर्दिष्टं कथितं प्रदर्शितं, ऋतौ यजन्तीति ऋत्विजः यजेःक्विप्, ऋत्विजां कर्म्म आर्त्त्विजं तस्मिन् निपुणा आर्त्त्विजीनास्तैः कृतमनुष्ठितं कर्म्म यागादि प्रकृप्तैः सम्भृतैः यज्ञाय हितानि यज्ञियानि तैर्द्रव्यगणैः हवनीयवस्तुजातैः करणैः यथावत् यथाविधि प्रतुष्टुवुरारब्धवन्तः । ततः प्रसर्पत् वृद्धिं गच्छत् तत् कर्म्म यातुधानैः राक्षसैः चिचिते व्याप्तम् । चिञः कर्म्मणि लिट् । यदा खलु आरब्धं कर्म्म ववृधे, तदैव तत् सर्व्वं रक्षोभिरुपलब्धमभूदित्यर्थः ॥ २९॥

आपिङ्गेति । ततः यज्ञारम्भज्ञानानन्तरं आपिङ्गा विद्युदिव ईषत्कपिलाः रुक्षाः स्नेहाभावादमसृणा ऊर्द्ध्वा ऊर्द्ध्वं प्रसृताः शिरसि भवाः शिरस्या बालाः येषां तैः तथोक्तैः । शिराः सन्ति एषामिति शिराला जङ्घाः येषां तैः शिरालजङ्घैः । गिरि-

ततः क्षपाटैः पृथुपिङ्गलाक्षैः
खं प्रावृषेण्यैरिव चानशेऽब्दैः ॥ ३० ॥
अधिज्यचापः स्थिरबाहुमुष्टिः
उदञ्चिताक्षोऽञ्चितदक्षिणोरुः ।
तान् लक्ष्मणः सन्नतवामजङ्घो
जघान शुद्धेषुरमन्दकर्षी ॥ ३१ ॥

कूटदघ्नैः गिरिशृङ्गप्रमाणैः । प्रमाणे दघ्नच् । "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः । पृथूनि पिङ्गलानि अक्षीणि येषां तैः क्षपायां रात्रौ अटन्ति चरन्ति ये ते क्षपाटास्तैः निशाचरैः प्रावृषि वर्षासु भवैः प्रावृषेण्यैः अब्दैर्मेघैरिव खं आकाशं आनशे व्याप्तम् । अश्नोतेः कर्मणि लिट् । चकारोऽत्र वाक्यालङ्कारार्थः । न केवलं चिचिते आनशे च इति वा चकारार्थः ॥३०॥

अधिज्यचाप इति । ज्यामधिगतः अधिज्यः समोर्व्वीकः, यद्वा अधिरूढ़ा ज्या गुणो यत्र स अधिज्यः आरोपितगुणः चापः धनुः यस्य स तथोक्तः । स्थिरबाहुमुष्टिः निश्चलभुजमुष्टिः स्थिरबाहुमुष्टित्वात् अव्यर्थसन्धानोऽयममोघास्त्र इति ध्वन्यते । उदञ्चिते उत्क्षिप्ते अक्षिणी यस्य स उदञ्चिताक्षः आकाशव्यापितदृष्टिरित्यर्थः । अञ्चितः पश्चादाकुञ्चितो दक्षिणोरुर्येन स तथोक्तः । सन्नता अग्रतः समावर्ज्जिता प्रसारिता इति यावत् वामजङ्घा यस्य स सन्नतवामजङ्घः प्रत्यालीढाख्यस्थानवं स्थित इत्यर्थः(1) ।

(1) See Mallinatha's commentary on the 52nd stanza of Raghuvansa, canto III.

गाधेयदिष्टं विरसं रसन्तं
रामोऽपि मायाचनमस्त्रचुञ्चुः ।
स्थास्नुं रणे स्मेरमुखो जगाद
मारीचमुच्चैर्वचनं महार्थम् ॥ २२ ॥
आत्मम्भरिस्त्वं पिशितैर्नराणां
फलेग्रहीन् हंसि वनस्पतीनाम् ।

शुद्धेषुः शितसायकः अमन्दं दृढं कृष्टुं शीलमस्य स अमन्दकर्षी कर्णान्ताकृष्टचापः लक्ष्मणः तान् निशाचरान् जघान हतवान् ॥ २१ ॥

गाधेयेति । अस्त्रैः ख्यातः अस्त्रचुञ्चुः चुञ्चुप्रत्ययः, रामोऽपि रामश्च पूर्व्वोक्तसमुच्चयार्थोऽपिशब्दः । स्मेरमुखो मन्दहासयुक्ताननः सन् तस्याक्षुब्धचित्तत्वादिति भावः । गाधेरपत्यं पुमान् गाधेयो विश्वामित्रस्तेन दिष्टं कथितं विरसं कर्कशं यथा तथा रसन्तं क्रोशन्तं मायाचनं मायया ख्यातम् । वित्ते चुञ्चुचणौ इति चनः । रणे स्थास्नुं स्थितिशीलं तस्य सेनापतित्वेन पौरुषातिशयादिति भावः । मारीचं ताड़कासुतं महार्थं गुर्व्वर्थप्रतिपादकं वचनं वक्ष्यमाणरूपमुच्चैरनीचैर्जगाद उक्तवान् ॥ २२ ॥

आत्मंभरिरिति । नराणां पिशितैर्मांसैः आत्मानं बिभर्षि इति आत्मम्भरिस्त्वं वनस्पतीनां वृक्षाणां फलानि गृह्णन्ति (ओविकार्थमाददते ये ते फलेग्रहयस्तान् मुनीन् । आत्मम्भरिः फलेग्रहिशब्दौ निपातनात् सिद्धौ । हंसि मारयसि । येषां

शौवस्तिकत्वं विभवा न येषां
व्रजन्ति तेषां दयसे न कस्मात् ॥ ३३ ॥
अद्मो द्विजान् देवयजीन् निहन्मः
कुर्म्मः पुरं प्रेतनराधिवासम् ।
धर्म्मो ह्ययं दाशरथे निजो नः
नैवाध्यकारिष्महि वेदवृत्ते ॥ ३४ ॥

विभवाः पार्थिवसम्पत्तयः श्वोभवितार इति शौवस्तिका श्वसस्तुट् चेति ठञ् तुडागमश्च। तेषां भावः शौवस्तिकत्वं भाविदिनस्थायित्वं न व्रजन्ति, तेषां कथं न दयसे सुतरां दयितुमर्हसीति भावः। अधीगर्थदयेशामिति कर्म्मणि षष्ठी ॥ ३३ ॥

नहि दयालुत्वमस्माकं धर्म इत्याह अद्म इति। द्विजान् ब्राह्मणक्षत्रियवैश्यान् अद्मः भक्षयामः। देवान् यजन्ति आराधयन्ति ये ते तान् देवयजीन् याज्ञिकान्। यजतेरौणादिक इप्रत्ययः। निहन्मः मारयामः। जासिनिप्रहणेत्यत्र सङ्घातविगृहीतविपर्यस्तग्रहणात् षष्ठी प्राप्तापि न भवति कर्म्मणः शेषत्वेनाविवक्षितत्वात्। पुरं नगरं बहुजनपूर्णमपि प्रेतनराधिवासं मृतमनुष्यवसतिं श्मशानतुल्यं कुर्मः। कस्मादेवं पापमाचरसीत्यत आह धर्म्मो ह्ययमिति। हे दाशरथे दशरथनन्दन अयं द्विजादिहिंसालक्षणः नः अस्माकं निजः आत्मीयो नित्यो धर्म आचारः। वयं वेदवृत्ते वेदविहितं वृत्तमिति मध्यपदलोपी समासः, वेदोक्ते कर्म्मणि अग्निहोत्रादौ नैव अध्य-

धर्म्मोऽस्ति सत्यं तव राक्षसायम्
अन्यो व्यतिस्ते तु ममापि धर्म्मः ।
ब्रह्मद्विषस्ते प्रणिहन्मि येन
राजन्यवृत्तिर्धृतकार्म्मुकेषुः ॥ ३५ ॥

कारिष्यहि अधिकृता विधात्रेति शेषः । अधिकरोतेः कर्म्मणि लुङ् । योहि वैदिको धर्म्मः स द्विजादीनामुक्तः अस्माकन्तु राक्षसानां नरशोणितोचितानां वेदोनानुसर्त्तव्य इति तात्पर्य्यार्थः ॥ ३४ ॥

धर्म्म इति । रक्ष्यते हविरस्मादिति रक्षः अपादाने अस् । रक्ष एव राक्षसः । स्वार्थे अण् । स्वार्थिकाः प्रकृतितो लिङ्ग-वचनान्यतिवर्त्तन्त इति पुंस्त्वम् । हे राक्षस यज्ञद्रोहिन् तव अयं धर्म्मः पराभिद्रोहलक्षणः अस्ति सत्यं असंशयं भवत्येव । ममापि तु अन्यः अस्मात् पृथग्रूपो दुष्टनिग्रहात्मको धर्म्मो व्यतिस्ते व्यतिभवते । यथा तवायं धर्म्मस्तथा ममापि अनीदृशः कश्चित् धर्म्मो विद्यते इत्यर्थः । व्यतीहारे अस्तेरात्मनेपदमकार-लोपश्चापि, व्यतीहारश्च परस्परमेकजातीयक्रियाकरणम् । येन धर्म्महेतुना राज्ञः अपत्यानि राजन्याः क्षत्रियाः तेषां वृत्तिराचारो यस्य स राजन्यवृत्तिः दुष्टनिग्रहव्यवसायः अतएव धृतकार्म्मुकेषुः उपात्तधनुर्वाणः अहं ब्रह्मद्विषो वेदद्वेषिणस्ते तव प्रणिहन्मि त्वां हनिष्यामि । वर्त्तमानसामीप्ये लट् । जासिनि-प्रहणेति कर्म्मणि षष्ठी ॥ ३५ ॥

इत्थंप्रवादं युधि संप्रहारं
प्रचक्रतू रामनिशाविहारौ ।
तृणाय मत्वा रघुनन्दनोऽथ
बाणेन रक्षः प्रधनान्निरास्थत् ॥ २६ ॥
जग्मुः प्रसादं द्विजमानसानि
द्यौर्वर्षुका पुष्पचयं बभूव ।

इत्थमिति । निशायां विहारो यस्य स निशाविहारी निशाचरो मारीचः रामश्च निशाविहारश्च तौ इत्थं पूर्वोक्तप्रकारः प्रवादः वाक्कलहो यत्र तं इत्थम्प्रवादं संप्रहारं संग्रामं युध्यन्ते अस्मिन्निति युधि रणभूमौ प्रचक्रतुः वाग्युद्धानन्तरं आयुधैः युयुधाते इत्यर्थः । अथ रघूणां रघुवंश्यानां नन्दनो नन्दयिता रामः रक्षः मारीचं तृणाय मत्वा तृणवत् लघुरयं निशाचर इति तं अपगणय्य । "मन्यकर्मण्यनादरे" इति चतुर्थी । बाणेन एकेनैव मार्गणेन प्रधनात् संग्रामात् निरास्थत् दूरमपनीतवान् ॥ २६ ॥

जग्मुरिति । द्विजानां मानसानि द्विजमानसानि प्रसादं अव्याकुलत्वं जग्मुर्गतानि यज्ञद्रुहां निरासादिति भावः । द्यौः स्वर्लोकः पुष्पचयं वर्षुका बभूव अभवति स्म वर्षतीति वर्षुका, वृषेर्लषपतेत्यादिना उकञ् न लोकेति षष्ठीनिषेधः । यज्ञद्रुहामुच्छेदे यज्ञांशभागिभिः देवैः पुष्पवृष्ट्या तयोरभिनन्दनमुचितमिति भावः । इज्या यागः । यजतेर्भावे

निर्व्याजमिज्या ववृते वचश्च
भूयो वभाषे मुनिना कुमारः ॥ ३७ ॥
महीय्यमाना भवतातिमात्रं
सुराध्वरे घस्मरजित्वरेण ।
दिवोऽपि वज्रायुधभूषणायाः
ह्रिणीयते वीरवती न भूमिः ॥ ३८ ॥
वलिर्ववन्धे जलधिर्ममन्थे
जह्रेऽमृतं दैत्यकुलं विजिग्ये ।

ष्यप् ततः स्त्रियामाप् । निर्व्याजं निर्विघ्नं ववृते अनुष्ठितं बभूव । मुनिना कौशिकेन च कुमारो रामो भूयः पुनरपि वचः वक्ष्यमाणं वाक्यं वभाषे उक्तः ॥ ३७ ॥

महीय्यमानेति । सुरान् उद्दिश्य यः अध्वरो यज्ञस्तस्मिन् घस्मराणां अदनशीलानां उपद्रोहिणां जित्वरेण अभिभाविना । घसेः क्मरच् जयतेश्च क्वरप् । भवता अतिमात्रं अत्यर्थं महीय्यमाना सम्यक्पालनात् पूज्यमाना वीरवती भवदधिष्ठानादिति भावः भूमिः पृथिवी वज्रायुधभूषणाया महेन्द्रालङ्कृताया दिवः स्वर्गस्यापि न ह्रिणीयते न लज्जते प्रत्युत प्रतिस्पर्द्धते इति भावः । महीङ्ह्रिणीङोरिति कण्ड्वादिगणपठितत्वात् यक् ततः यानच् ॥ ३८ ॥

वलिरिति । येन भवता वामनावस्थायां वलिर्विरोचनपुत्रो ववन्धे वद्धः स्वर्गराज्यात् भ्रंशयित्वा पाताले सविधापितः ।

कल्पान्तदुःस्था वसुधा तथोर्हे
येनैष भारोऽतिगुरुर्न तस्य ॥ ३९ ॥
इति ब्रुवाणो मधुरं हितञ्च
तमाञ्जिहत् मैथिलयज्ञभूमिम्।
रामं मुनिः प्रीतमना मखान्ते
यशांसि राज्ञां निजिघृक्षयिष्यन् ॥ ४० ॥

जलधिर्मन्थे मथितः, अमृतं जह्रे मोहिनीरूपेनासुरान् विभ्राम्य हृतं, दैत्यकुलं विजिग्ये अनेकधा विजितं, तथा कल्पान्तदुःस्था प्रलयजलधिमग्ना वसुधा पृथ्वी ऊढे वराहावतारेण उद्धृता। तस्य भवतः एष भक्तजनरक्षणात्मको भारः अतिगुरुर्दुर्भरो न भवति। सर्गस्थितिप्रत्यवहारहेतोः साक्षात् परमेष्ठिनस्ते कियानयं भार इति भावः॥ ३९॥

इतीति। इति अनेन प्रकारेण मधुरं श्रोत्रसुखं मनोहारीत्यर्थः हितं पथ्यञ्च ब्रुवाणः कथयन् प्रीतमनाः यज्ञदर्शनाभिभवात् हृष्टचित्तः स मुनिः मखान्ते यज्ञकर्मावसाने राज्ञां यशांसि शूरत्वकीर्त्तिं निजिघृक्षयिष्यन् निग्रहीतुमेषयिष्यन् रामं स्ववीर्यख्यापनेन वीरम्मन्यानां नृपाणां भुजार्ज्जितां ख्यातिं तिरस्कर्त्तुं प्रवर्त्तयिष्यामीति कृतमनोरथः सन्नित्यर्थः। निपूर्व्वात् ग्रहातेः सनि कृते णिच् ततः स्यप्रत्ययः। तं रामं मिथिलायां राजा मैथिलस्तस्य यज्ञभूमिं आञ्जिहत् गमयति स्म। अहि गत्यामिति धातोर्णिजन्तस्य लुङि रूपम्॥ ४०॥

इतः स्म मित्रावरुणौ किमेतौ
किमश्विनौ सोमरसं पिपासू।
जनं समस्तं जनकाश्रमस्थं
रूपेण तावौजिहतां नृसिंहौ ॥ ४१ ॥
अजिग्रहत् तं जनको धनुस्तत्
येनार्दिदत् दैत्यपुरं पिनाकी।

इत इति। एतौ अत्रागतौ युवानौ किं सोमरसं सोमलतानिष्कृष्टं यज्ञियं पानीयविशेषं पिपासू पातुमिच्छू मित्रावरुणौ आदित्यवरुणौ। देवताद्वन्द्वे इत्यानङ्। उत किं तादृशौ सोमरसं पिपासू अश्विनौ अश्विनीकुमारौ इतः स्म इमां यज्ञभूमिं प्राप्तौ। एतौ स्म इति पाठे एतौ आगतौ, स्मशब्दः पादपूरणार्थकः। इति अनेन प्रकारेण नरौ सिंहौ इव नृसिंहौ मनुष्यश्रेष्ठौ तौ रामलक्ष्मणौ रूपेण कान्तिविशेषेण जनकाश्रमस्थं समस्तं जनं यज्ञदर्शनार्थं जनकसद्मनि समागतं मायस्थामपि लोकं औजिहतां वितर्कं कारितवन्तौ। ऊह वितर्के इत्यस्मात् णिजन्तात् लुङ्। रामलक्ष्मणयोः लोकोत्तरकान्तिमवलोक्य तत्र स्थिताः सर्व्वे जनाः इत्थं वितर्कयामासुरिति भावः ॥ ४१ ॥

अजिग्रहदिति। जनकः अस्य रामस्य बाहुवीर्यं भुजवीर्य्यं जिज्ञासमानः ज्ञातुमिच्छन् सन्। "ज्ञाश्रुस्मृदृशां सनः" इत्यनेनात्मनेपदम्। तं रामं तत् धनुः अजिग्रहत् ग्राहयामास यद्दर्शिल·

जिज्ञासमानो बलमस्य बाहोः
हसन्नभाङ्क्षीत् रघुनन्दनस्तत् ॥ ४२ ॥
ततो नदीष्णान् पथिकान् गिरिज्ञान्
आह्वायकान् भूमिपतेरयोध्याम् ।
दित्सुः सुतां योधहरैस्तुरङ्गैः
व्यसर्ज्जयत् मैथिलमर्त्यमुख्यः ॥ ४३ ॥

स्मात् लुङ् यहीतुमुवाच इत्यर्थः। येन धनुषा पिनाकी पिनाकनामकधनुष्पाणिः हरः दैत्यपुरं त्रिपुरासुरनगरं आर्द्दिदत् उत्सादितवान्। अर्द्देः स्वार्थिकण्यन्तात् लुङ्। ततः रघुनन्दनः हसन् स्मितं कुर्व्वन् तत् शैवं धनुः अभाङ्क्षीत् वभञ्ज भञ्जेर्लुङ्। क्लेशं विनैव लीलया द्विधा चकार इत्यर्थः। "अजिग्रहत् बोधितवान् अनेन धनुषा त्रिपुरं दग्धम्" इति जयमङ्गलेन व्याख्यातम्। ग्रहेरादानार्थकस्य प्रयोज्यकर्त्तुः कर्म्मत्वानियमात् पाणिनीयैरियं कष्टकल्पना क्रियते, मुग्धबोधमते तु तस्य पृथग्ग्रहणात् सर्व्वमवदातमित्यनुसन्धेयम् ॥ ४२ ॥

तत इति। ततो धनुर्भङ्गानन्तरं मिथिलायां भवाः मैथिलाः। म्रियन्ते प्राणिनो अस्मिन्निति मर्त्यो भूलोकस्तत्र भवा मर्त्त्या मनुष्याः। मैथिला ये मनुष्यास्तेषां मुख्यः श्रेष्ठो राजा जनकः सुतां दित्सुः, ददातेः सन्, तत्पार्श्वे प्रतिपादयितुमिच्छुः सन् नद्यां स्नातीति तान् नदीष्णान् नदीज्ञान्; नदीष्णो नदीज्ञ इति पुरुषोत्तमः, स्नातेः कः, निनदीभ्यां स्नाते-

क्षिप्रं ततोऽध्वन्यतुरङ्गयायी
यविष्ठवद्वृद्धतमोऽपि राजा।
आख्यायकेभ्यः श्रुतसूनुवृत्तिः
अग्लानयानो मिथिलामगच्छत् ॥ ४४ ॥
वन्दिष्ठमाची वसुधाधिपानां
तं प्रेष्ठमेतं गुरुवद्गरिष्ठम्।

रिति यत्नम्। गिरिं जानन्तीति गिरिज्ञास्तान् कुत्र देशे कीदृशी नदी कीदृशो वा गिरिरस्तीति जानतः अतएव पथिकान् पथिकुशलान् भूमिपतेर्दशरथस्य आह्वयन्तीति आह्वायका निमन्त्रणकारिदूतास्तान् योधवरैः सैनिकश्रेष्ठैरचिन्तितैस्तुरङ्गैः क्षिप्रगामिभिरश्वैः अयोध्यां व्यसर्जयत् प्रेरयामास ॥ ४३ ॥

क्षिप्रमिति। ततः आख्यान्तीति आख्यायका दूतास्तेभ्यः श्रुता सूनो रामस्य वृत्तिर्हरधनुर्भङ्गाद्यवदानं येन तथोक्तः। अध्वानं अलङ्गामिनो अध्वन्या ये तुरङ्गमास्तैः यातीति अध्वन्यतुरङ्गयायी अग्लानं अक्लिष्टं यानं यस्य स अग्लानयानः कुत्रचिदपि पथि ग्लानिवशात् निवृत्तगतिरसौ नासीदित्यर्थः। राजा वृद्धतमोऽपि यविष्ठवत् युवतम इव क्षिप्रं द्रुतं मिथिलामगच्छत् प्राप ॥ ४४ ॥

वन्दिष्ठमिति। वंहिष्ठा बहुलतमा कौशिकस्य स जनकः वसुधाधिपानां वन्दिष्ठं वृन्दारकतमं प्रशस्ततममित्यर्थः। प्रेष्ठं प्रियतमं वैवाहिकसम्बन्धवशादिति भावः। गुरुवत् पितृवत्

सदृङ्महान्तं सुकृताधिवासं
वंष्ठिठकीर्त्तिर्यशसा वरिष्ठम् ॥ ४५ ॥

त्रिवर्गपारीणमसौ भवन्तम्
अध्यासयन्नासनमेकमिन्द्रः।
विवेकदृश्वत्वमगात् सुराणां
तं मैथिलो वाक्यमिदं बभाषे ॥ ४६ ॥

गरिष्ठं पूज्यतमम् तस्य वयोज्येष्ठत्वात्। "गुरुस्तु गीष्पती श्रेष्ठे गुरुः पितरि दुर्भरे" इत्यमरः। सदृशां समानप्रतिपत्तियुक्तानां नृपानां मध्ये महान्तं महाशयं सुकृताधिवासं पुण्यनिलयं यशसा वरिष्ठं श्रेष्ठं एतं आगतं इणधातोःक्तः तं दशरथं आर्च्चीत् सभाजयामास। सर्वत्र बहूनामेकोत्कर्षे इष्ठादेशः सदृङ्महान्तमित्यत्र सदृक् अभिजनादिभिस्तुल्यो जनकः महान्तं महानुभावानां मध्ये महान्तं दशरथमिति वा व्याख्यानम् ॥४५॥

त्रिवर्गेति। असौ इन्द्रः त्रिवर्गस्य धर्म्मार्थकामरूपस्य पारीणं पारगम्यदात् नीनः पारदृश्वानं धर्म्मार्थकामेषु परां काष्ठामापद्यमानं इत्यर्थः भवन्तं एकं आसनं अध्यासयन् आरोपयन् सुराणां मध्ये विवेकं दृष्टवान् विवेकदृश्वा। दृशेः क्वनिप्। तस्य भावः विवेकदृश्वत्वं विवेकज्ञतां अगात् प्राप इणो लुङ गादेशश्च। देवानां मध्ये भगवानाखण्डल एव विज्ञप्यकारी यदसौ भवन्तमेकासनारोपणेन सभाजयामास इति भावः। इदं वाक्यं मैथिलो जनकस्तं दशरथं बभाषे उवाच ॥ ४६ ॥

हिरण्मयी साललतेव जङ्गमा
च्युता दिवः स्थास्नुरिवाचिरप्रभा।
शशाङ्ककान्तेरधिदेवताकृतिः
सुता ददे तस्य सुताय मैथिली॥ ४७॥
लब्धां ततो विश्वजनीनवृत्तिः
तामात्मनीनामुदवोढ रामः।

हिरण्मयीति। हिरण्मयी सुवर्णनिर्म्मिता मयटि हिरण्यस्य यलोपो निपातनात् जङ्गमा गमनशीला यङन्तात् गमेः पचाद्यच् सञ्चारिणी साललता सालवृक्षाश्रयिणी लता इव, एतेन रामस्य सालवृक्षतुल्यत्वं सूचितम्, दिवः अन्तरिक्षात् च्युता भूपतिता स्थास्नुः स्थितिशीला अचिरप्रभा विद्युदिव, तथा शशाङ्ककान्तेः चन्द्रद्युतेरधिदेवताकृतिः अधिष्ठातृदेवता इव सौम्याकारा सुता मैथिली मैथिलस्य अपत्यं स्त्री, यद्वा मैथिल भूभागे यज्ञभूमौ जाता अयोनिसम्भवा लक्ष्मीरूपेति बोध्यम्। सीता तस्य दशरथस्य सुताय रामाय ददे दत्ता जनकेनेति शेषः। साललता स्थावरा जानकी तु जङ्गमा, तड़ित् चञ्चला सा तु अचञ्चला, इत्युभयत्रापि व्यतिरेको व्यज्यते। अत्र रामस्य ज्येष्ठत्वात् तस्यैव कविना परिणयो वर्णितः न शेषाणां तेनांवैव लक्ष्मणभरतशत्रुघ्ना अपि यथाक्रममुर्म्मिलामाण्डवीश्रुतकीर्त्तीनां पाणीन् जगृहुरिति बोद्धव्यम्॥ ४७॥

लब्धामिति। ततः सम्प्रदानानन्तरं विश्वजनाय हिता विश्वजनीना, तादृशी वृत्तिर्यस्य स रामः लब्धां प्राप्तां सती

सद्रत्नमुक्ताफलभर्म्मभूषां
संवंहयन्तीं रघुवंशलक्ष्मीम् ॥ ४८ ॥

सुप्रातमासादितसम्पदं तत्
वन्दारुभिः संस्तुतमभ्ययोध्यम्।
आश्वीयराजन्यकहास्तिकाढ्यम्
अगात् सराजं बलमध्वनीनम् ॥ ४९ ॥

शोभना विद्यमाना वा रत्नानां मुक्ताफलादीनां भर्म्मणां सुवर्णानां च भूषा भूषणं यस्याः सा तथोक्ता, रघुवंशलक्ष्मीं रघुवंश्यानां राजश्रियं संवंहयन्तीं संबहुलामतिस्थिरां कुर्व्वतीम्। बहुलशब्दस्य णिचि कृते वंहादेशः ततः शतृ। आत्मनीनां आत्मने हितां तां मैथिलीं उदवोढ़ परिणीतवान्। क्रियाफलविवक्षया आत्मनेपदम् ॥ ४८ ॥

सुप्रातमिति। शोभनं निरुपद्रवत्वात् रमणीयं प्रातर्दिनमुखं यस्य तत् सुप्रातम्। समासान्तटिलोपश्च निपात्यते। आसादितसम्पदं प्राप्तहर्षं वन्दारुभिः स्तुतिपाठकैः संस्तुतं कृतस्तवं अभ्ययोध्यं अयोध्याभिमुखं "अभिप्रती आभिमुख्ये" इति अव्ययीभावः। अश्वानां समूहो आश्वीयं राजन्यानां क्षत्रियाणां समूहः राजन्यकम् हस्तिनां समूहो हास्तिकं तैः आढ्यं पूर्णं सह राज्ञेति सराजं साकल्यवचने अन्तवचने वा अव्ययीभावः। अध्वनीनं अध्वानमलंगामीति [illegible] तत् बलं दशरथसैन्यं अगात् जनकनगरात् [illegible] ॥ ४९ ॥

विशङ्कटो वक्षसि बाणपाणिः
सम्पन्नतालद्वयसः पुरस्तात् ।
भीष्मो धनुष्मानुपजान्वरत्निः
ऐतिस्म रामं पथि जामदग्न्यः ॥ ५० ॥
उच्चैरसौ राघवमाह्वतेदं
धनुः सबाणं कुरु मातियासीः ।

विशङ्कट इति । वक्षसि विशङ्कटः उरसि "वः शालच्छङ्कटचौ" इति शङ्कटच् । विशालो व्यूढोरस्क इत्यर्थः । बाणः पाणावस्य इति बाणपाणिः । प्रहरणार्थेभ्य इत्यादिना सप्तम्यन्तस्य परनिपातः । सम्पन्नः सम्यगुत्पन्नो विशाल इति यावत् यस्तालद्वयः तत्परिमाणकः सम्पन्नतालद्वयसः । "प्रमाणे द्वयसच्" । भीष्मः भयङ्कराकारः भीधातोरौणादिको मक्, धनुष्मान् प्रशस्तधनुर्धारी जानुनोः समीपमुपजानु अरत्निर्हस्तो यस्य स तथोक्तः आजानुलम्बितबाहुरित्यर्थः । "अरत्निस्तु निष्कनिष्ठेन मुष्टिना" इत्यमरः । "रत्निररत्नी स्त्रियौ हस्तौ बद्धमुष्टितताङ्गुलौ" इत्यमरमाला च । जमदग्नेरपत्यं पुमान् जामदग्न्यः परशुरामः पथि रामं पुरस्तात् पुरतः ऐतिस्म आससाद ॥ ५० ॥

उच्चैरिति । असौ जामदग्न्यः राघवं उच्चैः महता ध्वनिना आह्वत आहूतवान् स्पर्द्धते स्म । "स्पर्द्धायामाङः" इत्यात्मनेपदं आह्वयतेर्लुङि रूपम् । कथमाह्वतेत्याह । इदं मद्धस्तस्थितं

अजीगणद्दाशरथं न वाक्यं
यदा स दर्पेण तदा कुमारः ।
धनुर्व्यकार्षीद्गुरुवाणगर्भं
लोकानलावीद्विजितांश्च तस्य ॥ ५३ ॥
जिते नृपारौ सुमनीभवन्ति
शब्दायमानान्यशनैरशङ्कम् ।

अस्मिन् अर्भके शिशौ रामे तव का आस्था को यत्नः । नायं ते तुल्यप्रतिद्वन्द्वी शिशुर्मे पुत्रकः अतोऽस्य यदि किञ्चिन्नापलमभवत् तत् क्षन्तव्यम् भवादृशैर्महानुभावैरिति भावः ॥ ५२ ॥

अजीगणदिति । स जामदग्न्यः दर्पेण गर्वात् यदा दशरथस्य इदं दाशरथं वाक्यं न अजीगणत् न गणितवान् प्रत्युत अवधीरितवानित्यर्थः । तदा एव अविलम्बेनेत्यर्थः कुमारो रामः गुरुर्वाणो गर्भे अभ्यन्तरे यस्य तत् तथोक्तं धनुः व्यकार्षीत् विशेषेण आकृष्टवान्, कृष आकर्षणे इत्यस्य लुङ् । ततस्तस्य विजितान् तपःप्रभावादिना वशीकृतान् लोकान् स्वर्लोकान् अलावीत् चिच्छेद, लुनातेर्लुङ् । यावेन तस्य स्वर्गपथं रुरोध इत्यर्थः ॥५३॥

जिते इति । नृपारौ क्षत्रान्तकारिणि जामदग्न्ये जिते सति असुमनांसि सुमनांसि भवन्ति सुमनीभवन्ति । अभूततद्भावे च्विप्रत्ययः तोऽन्त्यस्य लोपः निःशब्दत्वात् प्रसन्नमनांसीत्यर्थः । अतः अशङ्कं निर्भयं अशनैरुच्चैः शब्दायमानानि जयध्वनिं कुर्व्वन्ति यानि सैन्यानि इदस्य राज्ञो दशरथस्य अनुमते सति अनुमतौ

वृद्धस्य राज्ञोऽनुमते वलानि
जगाहिरेऽनेकमुखानि मार्गान्॥ ५४॥
अथपुरुजवयोगान्नेदयद्दूरसंस्थं
दवयदतिरयेण प्राप्तमुर्व्वीविभागम्।

तस्यां अनुमतिं प्राप्येत्यर्थः। अनेकमुखानि पृथक् भूतत्वात् अनेकदलसंविभक्तानि सन्ति मार्गान् भिन्नान् पथः जगाहिरे आचक्रमुः। पूर्व्वं भयेन वर्त्तुलीभूतत्वात् अधुना तेषां पृथक् संविभक्तत्वं वहुत्वञ्च सङ्गच्छते। अतो वलानीति वहुवचनम्॥ ५४॥

अथेति। अथ पूर्य्यते वर्द्धते इति पृधातोः कुप्रत्ययः। पुरुर्महान् यो जवोवेगस्तस्य योगात् सम्बन्धात् प्रकृष्टवेगवशात् दूरसंस्थं दूरवर्त्तिनमुर्व्वीविभागं भूभागं जनपदादिकं नेदयत् अन्तिकं कुर्व्वत् अन्तिकशब्दात् समीपवाचिनः तत् करोतीति णिच्, नेदादेशश्च, ततः शतृप्रत्ययः, तथा प्राप्तं विपयीकृतं अधिगतमित्यर्थः उर्व्वीविभागं अतिरयेण वेगातिशयवशात् दवयत् दूरीकुर्व्वत्, दूरशब्दात् पूर्व्ववत् णिच् ततः शतृप्रत्ययः। क्लमरहितं ग्लानिमनापन्नं अतिहर्षात् क्लमातिशयं नानुभवत्, अचेतत् कियद्दूरमागतमित्यजानत् हर्षात् लङ्घितमपि अध्वानं न बुध्यमानमित्यर्थः। यत्तं दशरथसैन्यं न सन्ति रजांसि यस्यां सा नीरजाः अनीरजाः नीरजाः कारिता च्मा भूमिर्येन सो

क्रमरहितमचेतन्नीरजीकारितक्ष्मां
बलमुपहितशोभां तूर्णमायादयोध्याम् ॥ ५५ ॥

इति श्रीभट्टिकाव्ये सीतापरिणयोनाम
द्वितीयः सर्गः।

इत्यर्थः। निर्पूर्वात् रजसः अभूततद्भावे च्वि: सलोपश्च। उपहितशोभां छत्रध्वजपताकादिभिः कल्पितशोभां अयोध्यां राजधानीं तूर्णं त्वरितं आयात् आगतम्, आंपूर्वात् यातेर्लङ्। मालिनीवृत्तम् ॥ ५५ ॥

इति भट्टिटीकायां द्वितीयः सर्गः।

---

## तृतीयः सर्गः ।

वधेन संख्ये पिशिताशनानां
क्षत्रान्तकस्याभिभवेन चैव ।
आढ्यम्भविष्णुर्यशसा कुमारः
प्रियम्भविष्णुर्न स यस्य नासीत् ॥ १ ॥
ततः सुचेतीकृतपौरभृत्यः
राज्येऽभिषेक्तुं सुतमित्यनीचैः ।

वधेनेति । संख्ये संग्रामे पिशितं मांसमशनं खाद्यं येषामिति तेषां राक्षसानामित्यर्थः वधेन निधनेन क्षत्रान्तकस्य क्षत्रियकुलकालरात्रेः परशुरामस्य अभिभवेन पराजयेन चैव उत्पन्नादितिशेषः वधादिहेतुना वा यशसा कीर्त्या अनाढ्य आढ्यः सम्पन्नः आढ्यम्भविष्णुः, "कर्त्तरि भुवः" इति खिष्णुच् मुमागमश्च, कुमारो रामचन्द्रः यस्य प्रियम्भविष्णुः यस्यापि प्राक् प्रियो न जातः पश्चादपि तथैव न प्रियो भूतः स नासीत् न बभूव, सर्व्वेषामेव सुतरां प्रियो बभूवेति भावः ॥ १ ॥

तत इति । ततः प्रियम्भविष्णुताया अनन्तरं असुचेतसः सुचेतसः सम्पद्यमानाः पौरा भृत्याश्च यस्य स तथोक्तः । राक्षसवधाय प्रेषितस्य रामस्य उत्कण्ठमानाः प्रजाः सम्प्रति जयलक्ष्मीलाञ्छितं तं जानकीसहचरं प्रतिनिवृत्तं दृष्ट्वा .

आघोषयन् भूमिपतिः समस्तं
भूयोऽपि लोकं सुमनीचकार ॥ २ ॥
आदिद्युतद्दीप्तकृशानुकल्पं
सिंहासनं तस्य स पादपीठम् ।
सन्तप्तचामीकरवल्गुवज्र
विभागविन्यस्तमहार्घरत्नम् ॥ ३ ॥

सञ्जाताः इति भावः। भूमिपतिः राजा सुतं राज्ये यौवराज्ये अभिषेक्ष्ये अभिषिक्तं करिष्यामि। सिचेरुभयपदित्वादात्मनेपदम्। इति अनीचैः उच्चैराघोषयन् घोषणां कुर्व्वन् समस्तं लोकं सकलाः प्रजाः भूयोऽपि पुनरपि सुमनीचकार। बहुगुणसम्पन्नोऽयं कुमारो यौवराज्ये अभिषेक्ष्यते नवेति सन्देहमपनीय सकलानधिकमाह्लादयदिति तात्पर्य्यार्थः। सुचेतःसुमनसोः च्विप्रत्ययात् सकारलोपः। जयमङ्गलस्त्वाह किमयं दशरथः सम्यक् पालयिष्यति न वेति असुचेतसः पौरा भृत्याश्च जाताः ते सम्यक् पालनात् सुचेतसः कृता येन स सुचेतीकृतपौरभृत्य इति ॥ २ ॥

आदिद्युतदिति। स राजा इत्यध्याहर्त्तव्यम्। आदीप्तकृशानुकल्पं प्रज्वलितवह्निसन्निभं यतः सन्तप्तानि अनलतापयोगात् विशुद्धानि चामीकराणि सुवर्णानि यस्मिन् तत् सन्तप्तचामीकरं वल्गूनि मनोहराणि वज्राणि हीरकाणि यस्मिन् तत् तथोक्तं सन्तप्तचामीकरञ्च तत् वल्गुवज्रञ्चेति सन्तप्तचामीकरवल्गुवज्रम्।

प्रास्थापयत् पूगकृतान् स्वपोषं
पुष्टान् प्रयत्नाद्दृढगात्रवन्धान्।
सभर्म्मकुम्भान् पुरुषान् समन्तात्
पत्त्यापिणस्तीर्थजलार्थमाशु ॥ ४ ॥
उच्चाम्रं चक्रुर्नगरस्य मार्गान्
ध्वजान् ववन्धुर्मुमुचुः सधूपान्।

द्वयोरन्यतरस्य विशेषणत्वविवक्षायां कर्म्मधारयसमासः। तथा विभागेषु यथायथं विभक्तेषु स्थानेषु विन्यस्तानि सन्निवेशितानि महार्घाणि महामूल्यानि रत्नानि पद्मरागादीनि यत्र तत् विभागविन्यस्तमहार्घरत्नं सपादपीठं पादपीठान्वितं तस्य सिंहासनं आदिचत् निर्म्मातुमाज्ञापयामास। आदिशतेर्लुङ्॥३॥

प्रास्थापयदिति। अपूगाः पूगाः कृता इति पूगकृताः सङ्घीकृतास्तान्। श्रेण्यादिषु च्व्यर्थवचनमिति समासः। स्वपोषं पुष्टान् स्वेन धनेन पुष्टानित्यर्थः। स्वे पुष इति णमुल्। दृढगात्रवन्धान् संयतशरीरान् भारोद्वहनार्थमिति भावः। सभर्म्मकुम्भान् सहेमकलसान् पत्तौ कषितुं शीलं येषां तान् पत्त्यापिणः पदातीनित्यर्थः। षिनि कृते पादस्य पदादेशः। पुरुषान् जनान् तीर्थजलार्थं अभिषेकार्थं तीर्थजलं आनेतुमित्यर्थः समन्तात् सर्व्वासु दिक्षु प्रयत्नात् आदरेण आशु क्षिप्रं प्रास्थापयत् प्रेषयामास। स इति शेषः॥ ४॥

उच्चामिति। राज्ञा दशरथेन अर्थेषु कार्य्येषु नियुक्ता

दिशश्च पुष्पैश्चकरुर्विचित्रैः
अर्थेषु राज्ञा निपुणा नियुक्ताः ॥ ५ ॥
मातामहावासमुपेयिवांसं
मोहादपृष्ट्वा भरतं तदानीम् ।
तत् कैकयी सोढुमशक्नुवाना
ववार रामस्य वनप्रयाणम् ॥ ६ ॥

अधिकृता निपुणा जनाः । "अर्थः प्रकारे विषये वित्तकारण-वस्तुषु । अभिधेये च शब्दानां वृत्तौ चापि प्रयोजने" इति विश्वः । नगरस्य मार्गान् राजपथान् उच्चांप्रचक्रुः सिक्तवन्तः, ध्वजान् केतून् बबन्धुः उच्छ्रायितवन्तः । खधूपान् खे आकाशे धूपान् मुमुचुः घटिकादिभिः प्रमुक्तवन्तः । तथा विचित्रैः नानावर्णैः पुष्पैः दिशः चकरुः छादितवन्तश्च । कृधातोर्लिटि रूपम् । उच्चाम्प्रचक्रुरित्यत्र उपसर्गक्रियाविशेषणव्यवधानेऽपि भ्वादीनामनुप्रयोगो भवतीति उचधातोः प्रपूर्व्वः कृञनुप्रयुज्यते । तथाच "तं पातयां प्रथममास पपात पश्चात्" इति रघौ । जयमङ्गलादयस्तु उच्चानिति पठित्वा उच्चणमुच्चा तत अर्थं आदित्वात् अप्रत्यय इति व्याचक्षते ॥ ५ ॥

मातेति । केकयस्य केकयदेशाधिपतेरपत्यं स्त्री कैकयी तत् रामस्याभिषेकसंविधानं सोढुं अशक्नुवाना असहमाना सती, रामस्य सपत्नीतनयत्वात् । शक्नोतेः परस्मैपदित्वेऽपि शक्तिवयस्ताच्छील्ये शतुः शान इति शानः पाणिनीयमते तु चानश् इति बोध्यम् । तदानीं अभिषेककाले मातामहावासं

कर्णेजपैराहितराज्यलोभा
स्त्रैणेन नीता विकृतिं लघिम्ना।
रामप्रवासे व्यमृशन्न दोषं
जनापवादं सनरेन्द्रमृत्युम् ॥ ७॥
वसूनि देशांश्च निवर्त्तयिष्यन्
रामं नृपः संगिरमाण एव।

केकयराजभवनं उपेयिवांसं, उपेयिवांसमिति निपातनात् सिद्धम्। आसादितवन्तं भरतं मोहादज्ञानात् अंष्ट्वा। दूतप्रेषणादिनेति शेषः। रामस्य वनाय प्रयाणं गमनं ववार प्रार्थितवती वृणोतेर्लिट् ॥ ६ ॥

कर्णेजपैरिति। कर्णे जपन्ति ये ते कर्णेजपास्तैः कर्णेजपैः सूचकैः खलैरन्तर्द्रोहिभिर्मन्थरादिभिः। तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक्। आहितो जनितो राज्यलोभो यस्याः सा तथोक्ता, तया स्त्रैणेन स्त्रीजनोचितेन लघिम्ना लघुचित्ततया नीचाशयत्वेनेत्यर्थः विकृतिं अन्यथाभावं नीता प्रापिता सा कैकयी रामप्रवासे ज्येष्ठस्य राज्यार्हस्य कुमारस्य निर्वासने सति यद्वा विषये सप्तमी नरेन्द्रस्य राज्ञो मृत्युना सह वर्त्तमानं सनरेन्द्रमृत्युं जनापवादं लोकपरीवादं दोषं न व्यमृशत् न आलोचितवती। मृशतेर्मौदादिकात् लङ्। रामे निर्वासिते सति यत् नरेन्द्रस्य मृत्युर्जनापवादश्चेत्यनिष्टद्वयमापतिष्यति तदसौ नानुचिन्तितवतीत्यर्थः ॥ ७ ॥

वसूनीति। रामं निवर्त्तयिष्यन् निवर्त्तयितुमिच्छन्नस्य

तयावजज्ञे भरताभिषेको
विषादशङ्कुश्च मतौ निचख्ने ॥ ८ ॥
ततः प्रविव्राजयिषुः कुमारम्
आदिद्यदस्याभिगमं वनाय ।
सौमित्रिसीतानुचरस्य राजा
सुमन्त्रनेत्रेण रथेन शोचन् ॥ ६ ॥

वनप्रयाणं प्रतिजिहीर्षुरित्यर्थः, अतः वसूनि धनानि देशान् जनपदांश्च संगिरमाणस्तस्यै दास्यामीति प्रतिजानान एव नृपः। संगिरतेस्तौदादिकात् आत्मनेपदविधानात् शानच्। तया कैकय्या अवजज्ञे अवज्ञातः। भरताभिषेकः विषादः शङ्कुः शल्यमिव विषादशङ्कुश्च मतौ राज्ञो मनसि निचख्ने निखातः। रामं निर्वास्य भरताभिषेचनं याचमानासौ तं पर्य्यतापयदिति भावः। पुरा किल परितुष्टेन राज्ञा कैकय्यै वरद्वयं देयमिति प्रतिश्रुतमासीत्, अधुना मन्थरादिभिः प्रणोदिता कैकयी तयो-रेकेन वरेण रामस्य वनप्रवासनमपरेण च भरतस्य यौवराज्या-भिषेचनं याचितवतीति पौराणिकी वार्त्तात्रानुसन्धेया ॥ ८ ॥

तत इति। ततः कैकयीप्रार्थनानन्तरं कुमारं प्रविव्राज-यिषुः प्रव्रज्यां कारयितुमिच्छुः प्रपूर्व्वात् व्रजतेर्णिजन्तात् सन्। राजा शोचन् समन्युः सन् सुमन्त्रो नेत्रः नेता सारथिर्यस्य स सुमन्त्रनेत्रः। "नेत्रं रथे च नाद्यां च नेत्री नेतरि भेदवत्" इति विग्रहः। तेन रथेन सौमित्रिसीतानुचरस्य लक्ष्मणजानकी-

केचिन्निनिन्दुर्नृपमप्रशान्तं
विचुक्रुशुः केचन सास्रमुच्चैः।
ऊचुस्तथान्ये भरतस्य मायां
धिक्कैकयीमित्यपरो जगाद ॥ १० ॥
गतो वनं श्वो भवितेति रामः
शोकेन देहे जनतातिमात्रम्।

सहायस्य अस्य रामस्य, कर्त्तरि षष्ठी, वनाय अभिगमं प्रयाणम्। गत्यर्थकर्मणीति चतुर्थी। आदिक्षत् आदिष्टवान् आङ्पूर्वकात् दिशतेर्लुङ ॥ ८ ॥

केचिदिति। केचित् जना अप्रशान्तं वार्द्धक्येऽपि स्त्रैणत्वात् शान्तिरहितं इति नृपं निनिन्दुः गर्हितवन्तः। केचन सास्रं सवाष्पं उच्चैरनीचैः विचुक्रुशुराक्रन्दितवन्तः क्रोशतेर्लिट्। तथा अन्ये भरतस्य मायां शाठ्यमूचुः राज्यलाभाय मातरं नियुज्य स्वदोषपरिहारार्थं मातामहावासं गतवान् इति उक्ता तस्य कापट्यं ख्यापयामासुः। अपरः धिक्कैकयीं यया एवमनुष्ठितमिति जगाद। कैकयीमिति धिक् शब्दयोगेन द्वितीया ॥ १० ॥

गत इति। रामः श्वः आगामिनि दिवसे वनं गतो भविता गमिष्यतीति हेतोः जनता जनसमूहः शोकेन अतिमात्रं भृशं देहे दग्धा दहतेः कर्म्मणि लिट्। तत्र ये तु अन्ये अपरे धीराः स्थिरबुद्धय आसन् ते च्युतमन्यवः विगतशोकाः सन्तः

धीरास्तु तत्र च्युतमन्यवोऽन्ये
दधुः कुमारानुगमे मनांसि ॥ ११ ॥
प्रस्थास्यमानावुपसेदुषस्तौ
शोशुच्यमानानिदमूचतुस्तान्।
किं शोचतेहाभ्युदये बतास्मान्
नियोगलाभेन पितुः कृतार्थान् ॥ १२ ॥

कुमारानुगमे मनांसि दधुः कृतवन्तः राममनुगन्तुं निश्चिक्युः इत्यर्थः। गत इति भूतकालः श्वोभवितेति भविष्यत्कालेनापि सम्बध्यमानः साधुः धातुसम्बन्धे प्रत्यया इति नियमादित्यनुसन्धेयम् ॥ ११ ॥

प्रस्थास्यमानाविति। प्रस्थास्यमानौ वनाय गमिष्यन्तौ तौ रामलक्ष्मणौ उपसेदुषः तयोः समीपमागतान्। उपपूर्वात् सीदतेः क्वसुः। शोशुच्यमानान् अतिशयेन शोकं कुर्वतः शोचतेर्यङि लटि शानच्। तान् जनान् इदं वक्ष्यमाणमूचतुः। बत आश्चर्य्ये इह अस्मिन् अभ्युदये महति श्रेयसि समुपस्थिते सति पितुर्नियोगलाभेन अनुमतिप्राप्त्या कृतार्थान् सिद्धमनोरथान् अस्मान् किं कथं शोचत परिदेवयध्वम्। पितुराज्ञालाभेन चरितार्थत्वमस्माकं महत् भाग्यलक्षणं तत्र वयं युष्माभिः शोच्याः प्रत्युताभिनन्दनीया भवाम इति भावः ॥ १२ ॥

असूष्ट यो यश्च भयेष्वरक्षीत्
यः सर्व्वदास्मानपुषत् स्वपोषम्।
महोपकारस्य किमस्ति तस्य
तुच्छेन यानेन वनस्य मोक्षः॥ १३॥
विद्युत्प्रणाशं स वरं प्रनष्टो
यद्दोर्हृ शीर्य तृणवत् विशुष्कः।
अर्थे दुरापे किमुत प्रवासे
न शासनेऽवास्थित यो गुरूणाम्॥ १४॥

असूष्टेति। यः अस्मान् असूष्ट अजीजनत्। सूर्जेर्दैवादिकस्य आत्मनेपदित्वात् लुङि रूपं नतु तौदादिकस्य तस्य परस्मैपदित्वात्। यश्च भयेषु आधिव्याधिभिः प्राणसंशयेषु समुपस्थितेषु सत्सु अरक्षीत् पालयामास, तथा सर्वदा स्वपोषं अपुषत् स्वेन धनेन पुष्टवान्। तस्य पितुः सम्बन्धिनो महोपकारस्य मोक्षः आनृण्यं तुच्छेन अनायाससाध्येन वनस्य यानेन किमस्ति न खलु सम्भवत्येव। वनस्येति कर्म्मणि षष्ठी, तस्याः गत्यर्थकर्मणि चतुर्थी बाध्यमानत्वेऽपि वैभाषिकत्वात्॥ १३॥

विद्युदिति। यो जनः दुरापे अर्थे दुःखसाध्ये प्राणात्ययादिकार्य्ये किमुत प्रवासे किं पुनरचिरात्र विदेशवसतौ विषये गुरूणां पित्रादिपूज्यतमानां शासने न अवास्थित अवपूर्वात् तिष्ठतेर्लुङ, यदाशासनमन्वतिष्ठत् स वरं विद्युत्प्रणाशं प्रनष्टः विद्युदिव उत्पत्त्यनन्तरमेव क्षणेन विनाशं गतः यद्वा अथवा

पौरा निवर्त्तध्वमिति न्यगादीत्
तातस्य शोकापनुदा भवेत ।
मा दर्शतान्यं भरतश्च मत्तः
निवर्त्तयेत्याह रथं स्म सूतम् ॥ १५ ॥
ज्ञात्वेङ्गितैर्गत्वरतां जनानां
एकां शयित्वा रजनीं सपौरः ।

तृणवत् जह्वशेषं विशुष्कः जह्वैं एव स्थित्वा अशुष्यत्। उभयत्रापि णमुल्। यद्यहं स्वल्पायासकरं वनप्रवासमुरीकृत्य पित्राज्ञां न वहु मन्ये तदा मे मृत्युरेव श्रेयानिति तात्पर्य्यार्थः ॥ १४ ॥

पौरा इति। पौरा निवर्त्तध्वं यथागतमयोध्यां प्रतिगच्छत तातस्य पितुः शोकमपनुदन्ति ये ते शोकापनुदाः। नुदः कर्त्तरि कः। भवेत। प्रार्थनायां लिङ्। तथा भरतश्च मत्तः अन्यं मा दर्शत। मां योगात् लुङ् अड़ागमनिषेधश्च। यथाहं तथा भरतोऽपि युष्मान् पालयिष्यतीति समपक्षपातया भक्त्या भरतमुपचरत इति न्यगादीत् रामस्तानवादीत्। तथा रथं निवर्त्तय इति सूतं समन्त्रं आहस्म च। आहेत्यत्र णप्प्रत्ययस्य तिप्स्थानीयत्वेन वर्त्तमानक्रियैव बोध्यते अतः स्मशब्दप्रयोगस्य वैयर्थ्यं पौनरुक्त्यं वा नाशङ्कनीयम्। यत्र कश्चिद्स्म भूते प्रयोगो दृश्यते तत् भ्रान्तमिति परिहर्त्तव्यं लक्षणया वा कथञ्चित् समाधेयमित्यलमतिगहनावगाहनेन ॥ १५ ॥

ज्ञात्वेति। रामः निवर्त्तध्वमित्युक्ते ये तत्र अनिवृत्ताः

रक्षन् वनेवासकृताद्भयात्तान्
प्रातश्छलेनापजगाम रामः ॥ १६ ॥
अस्राम्बुरस्रं करुणं रुवन्तः
मुहुर्मुहुर्न्यश्वसिषुः कवोष्णम् ।
हा राम हा कष्टमिति ब्रुवन्तः
पराङ्मुखैस्ते न्यवृतन्मनोभिः ॥ १७ ॥

जनानां अनुगामिनां इङ्गितैरभिप्रायसूचकैश्चेष्टितैः इङ्गितैर्भावे क्तः । गत्वरतां गमनशीलतां अनुगमनाध्यवसायमित्यर्थः । गमेः क्वरप् । ज्ञात्वा सपौरः पौरैः सह एकां रजनीं शयित्वा गङ्गातटे शयनं कृत्वा वनेवासकृतात् वनवासस्तम्भात् भयात् श्वापदाभियोगादिजनितात् सङ्कटात् । वनेवास इति सप्तम्या अलुक्, तान् रक्षन् पालयन् प्रातरुषसि छलेन सन्ध्यावन्दनादिव्याजेन अपजगाम निभृतमपससार । रजनीमित्यत्र कालाध्वनोरत्यन्तसंयोगे, देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणामिति द्वितीया ॥ १६ ॥

अस्राम्बुरिति । ते पौराः राममपश्यन्तः करुणं दीनं यथा तथा रुवन्तः विलपन्तः अस्रं नेत्रजलं अस्राम्बु मुक्तवन्तः सृजेर्लौटादिकस्य लुङ । कवोष्णं अन्तस्तापात् ईषदुष्णं यथा तथा मुहुर्मुहुः न्यश्वसिषुः वारम्वारमुष्णोच्छ्वासं त्यक्तवन्तः निपूर्व्वात् श्वसेर्लुङ । कवोष्णमिति कोरीषदर्थकस्य कवादेशः । तथा हा राम हा कष्टमिति ब्रुवन्तः विलपन्तः पराङ्मुखैः येन गतो

सूतोऽपि गङ्गासलिलैः पवित्वा
सहाश्वमात्मानमनल्पमन्युः ।
ससीतयो राघवयोरधीयन्
श्वसन् कदुष्णं पुरमाविवेश ॥ १८ ॥

रामस्तेन गतैर्मनोभिः न्यवृतन् प्रत्याजग्मुः । वृतेरात्मनेपदित्वेऽपि लुङि ङविधानात् परस्मैपदित्वं तस्य परस्मैपदे एव नियमितत्वात्। यत्र रामो यातस्तत्र मनो निधाय शून्यहृदयास्ते देहमात्रेण पुरमागता इत्यर्थः। तथाच शाकुन्तले "गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः। चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य" इति ॥ १७ ॥

सूतोऽपीति। सूतः सुमन्त्रोऽपि गङ्गासलिलैः सहाश्वं अश्वैः सह। सहः सोवेति वैभाषिकविधानात् न सादेशः। आत्मानं पवित्वा गङ्गायामवगाहनेन स्वस्य बाह्यमाभ्यन्तरीणामपि शुद्धिमवाप्य अश्वानपि स्नापयित्वा च इत्यर्थः अनल्पमन्युः कथं राजानमेवमात्मानं दर्शयिष्ये इति विवृद्धशोकः सन् ससीतयो राघवयोः अधीयन् सीतया सह रामं लक्ष्मणञ्च स्मरन्। "अधीगर्थदयेशां कर्म्मणि" इति षा षष्ठी। इकधातौ विण तुल्यत्वेऽपि प्रतरि भेदात् इयादेशः। कदुष्णं ईषदुष्णं यथा तथा श्वसन् पुरं आविवेश। कोरीषदर्थे कदादेशः कदुष्णत्वञ्च शोकसन्तापादिति भावः॥ १८ ॥

प्रतीय सा पूर्द्दृशे जनेन
द्यौर्भानुशीतांशुनिराकृतेव।
राजन्यनक्षत्रसमन्वितापि
शोकान्धकारक्षतसर्व्वचेष्टा॥ १८॥
विलोक्य रामेण विना सुमन्त्रम्
अच्योष्ट सत्त्वान्नृपतिश्च्युताशः।

प्रतीयेति। जनेन रामानुयायिना प्रतीय प्रतिनिवृत्त्य। प्रतीय इत्यत्र इङ्धातोः दैवादिकात् ल्यप् न पुनरिणः तथात्वे प्रतीत्य इत्येवं स्यात्। प्रतीयुषा इति पाठान्तरं। प्रतीयुषा प्रतिनिवृत्तेन जनेन इत्यर्थः प्रतिपूर्व्वकेणधातोः क्वसुः। राष्ट्रामपत्यानि राजन्याः क्षत्रिया नक्षत्राणीव तैः समन्वितापि शोकान्धकारेण क्षताः प्रतिहताः सर्व्वाः चेष्टाः क्रयविक्रयादि-रूपा नित्यमनुष्ठेया बहवः संसारव्यापारा यत्र सा तथोक्ता सा पूः अयोध्या भानुशीतांशुनिराकृता सूर्य्यनिशानाथविरहिता द्यौराकाशमिव ददृशे दृष्टा। यथा नभः नक्षत्रान्वितापि चौच-न्द्रसूर्य्यशून्या सती अन्धतमसाच्छन्ना भवति तथा सा अयोध्या राजन्यगणयुक्तापि रामलक्ष्मणविरहिता शोकेन निश्चेष्टेव समजायत इत्यर्थः॥ १८॥

विलोक्येति। नृपतिर्दशरथः रामेण विना सुमन्त्रं विलोक्य च्युताशः सन् कदाचिद्रामः पौरैरनुरुद्धः प्रतिनिवर्त्तेत इति तस्य या आशा आसीत् अधुना तद्रहितः सन् सत्त्वात् स्वभा-

सूतोऽपि गङ्गासलिलैः पवित्वा
सहाश्वमात्मानमनल्पमन्युः।
ससीतयो राघवयोरधीयन्
श्वसन् कदुष्णं पुरमाविवेश ॥ १८ ॥

रामस्तेन गतैर्मनोभिः न्यवृतन् प्रत्याजग्मुः। वृतेरात्मनेपदित्वेऽपि लुङि ङविधानात् परस्मैपदित्वं तस्य परस्मैपदे एव नियमितत्वात्। यत्र रामो यातस्तत्र मनो निधाय शून्यहृदयास्ते देहमात्रेण पुरमागता इत्यर्थः। तथाच शाकुन्तले "गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः। चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य" इति ॥ १७ ॥

सूतोऽपीति। सूतः सुमन्त्रोऽपि गङ्गासलिलैः सहाश्वं अश्वैः सह। सहः सोवेति वैभाषिकविधानात् न सादेशः। आत्मानं पवित्वा गङ्गायामवगाहनेन स्वस्य वाह्यामाभ्यन्तरीणामपि शुद्धिमवाप्य अश्वानपि स्नापयित्वा च इत्यर्थः अनल्पमन्युः कथं राजानमेवमात्मानं दर्शयिष्ये इति चिह्नशोकः सन् ससीतयो राघवयोः अधीयन् सीतया सह रामं लक्ष्मणञ्च स्मरन्। "अधीगर्थदयेशां कर्म्मणि" इति वा षष्ठी। इकधातो रिण तुल्यत्वेऽपि गतरि भेदात् इयादेशः। कदुष्णं ईषदुष्णं यथा तथा श्वसन् पुरं प्राविवेश। कोरीषदर्थे कदादेशः कदुष्णत्वञ्च शोकसन्तापादिति भावः ॥ १८ ॥

प्रतीय सा पूर्ददृशे जनेन
द्यौर्भानुशीतांशुनिराकृतेव।
राजन्यनक्षत्रसमन्वितापि
शोकान्धकारक्षतसर्व्वचेष्टा ॥ १८ ॥
विलोक्य रामेण विना सुमन्त्रम्
धच्योष्ट सत्त्वान्नृपतिश्च्युताशः।

प्रतीयेति। जनेन रामानुयायिना प्रतीय प्रतिनिवृत्त्य। प्रतीय इत्यत्र इङ्धातोः दैवादिकात् ल्यप् न पुनरिणः तथात्वे प्रतीत्य इत्येवं स्यात्। प्रतीयुषा इति पाठान्तरं। प्रतीयुषा प्रतिनिवृत्तेन जनेन इत्यर्थः प्रतिपूर्व्वकेणधातोः क्वसुः। राज्ञामपत्यानि राजन्याः क्षत्रिया नक्षत्राणीव तैः समन्वितापि शोकान्धकारेण क्षताः प्रतिहताः सर्व्वाः चेष्टाः क्रयविक्रयादिरूपा नित्यमनुष्ठेया बहवः संसारव्यापारा यत्र सा तथोक्ता सा पूः अयोध्या भानुशीतांशुनिराकृता सूर्य्यनिशानाथविरहिता द्यौराकाशमिव ददृशे दृष्टा। यथा नक्तं नक्षत्रान्वितापि द्यौश्चन्द्रसूर्य्यशून्या सती अन्धतमसाच्छन्ना भवति तथा सा अयोध्या राजन्यगणयुक्तापि रामलक्ष्मणविरहिता शोकेन निश्चेष्टेव समजायत इत्यर्थः ॥ १८ ॥

विलोक्येति। नृपतिर्दशरथः रामेण विना सुमन्त्रं विलोक्य च्युताशः सन् कदाचिद्रामः पौरैरनुरुद्धः प्रतिनिवर्त्तेत इति तस्य या आशा आसीत् अधुना तद्रहितः सन् सत्त्वात् स्वभा-

मधूनि नैपीद्व्यलिपन्न गन्धै:
मनोरमे न व्यवसिष्ट वस्त्रे ॥ २० ॥
आसिष्ट नैकत्र शुचा व्यरंसीत्
कृताकृतेभ्यः क्षितिपालभाग्भ्यः ।
स चन्दनोशीरमृणालदिग्धः
शोकाग्निनागात् द्युनिवासभूयम् ॥ २१ ॥

यादच्योष्ट च्युतः । "सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः" इति विश्वः । च्यवतेर्लुङ् । स्वभावभ्रंशात् विकृतिमापन्न इत्यर्थः । स्वभावच्युतिरस्य कथं ज्ञायते इत्यत आह मधूनीति । मधूनि न ऐपीत् दृष्टवान् गन्धैश्चन्दनादिभिः न व्यलिपत् अङ्गविलेपनं न कृतवान् । लिम्पतेर्लुङि ङादेशः । तथा मनोरमे मनोज्ञे वस्त्रे दुकूलद्वयं न व्यवसिष्ट परिहितवान् । "वस आच्छादने इत्यस्य लुङि रूपम् । विषयविद्वेषोऽपि स्वभावभ्रंशस्य लक्षणमितिभावः ॥ २० ॥

आसिष्टेति । स राजा शुचा शोकेन हेतुना एकत्र न आसिष्ट उपविष्टः चित्तवैकल्यात् क्षणे क्षणे स्थानपरिवर्त्तनं चकारेत्यर्थः । आस्तेर्लुङ । कृतानि तान्यकृतानि च इति कृताकृतानि असमापितानि तेभ्यः । क्तेन नञ्विशिष्टेनान-ञिति समासः । क्षितिपालं भजन्तीति तेभ्यः क्षितिपालभाग्भ्यः नृपोचितेभ्यः दूतप्रेषणादिकार्य्येभ्यः व्यरंसीत् विरतः बभूव इत्यर्थः । विपूर्व्वात् रमतेः परस्मैपदं, तद्योगात्

विचक्रुशुर्भूमिपतेर्महिष्यः
केशान् लुलुञ्चुः स्ववपूंषि जघ्नुः।
विभूषणान्युन्मुमुचुः क्षमायां
पेतुर्बभञ्जुर्वलयानि चैव ॥ २२ ॥
ताः सान्त्वयन्ती भरतप्रतीक्षा
तं बन्धुता न्यक्षिपदाशु तैले।

क्षितिपालभाग्यैः दुःखसापादानलं च। तया चन्द्रनीगौ-रसपालैरन्तस्तापप्रतीकारभूतैर्दिग्धः अनुलिप्तोऽपि शोका-ग्निना द्यौर्निवासो येषां ते द्युनिवासा देवास्तेषां भावो द्युनिवासभूयम्। दिवो द्युर्भावे क्यप् च। अगात् जगाम। इणधातोर्लुङ्। शोकसन्ततः प्राणान् जहौ इत्यर्थः ॥ २१ ॥

विचुक्रुशुरिति। भूमिपतेर्महिष्यः पत्न्यः विचक्रुशुः तार-स्वरेण रुरुदुः। केशान् लुलुञ्चुश्छिन्दुरुत्पाटितवत्य इत्यर्थः, स्ववपूंषि जघ्नुस्ताडितवत्यः। विभूषणानि आभरणानि उन्मु-मुचुः तत्यजुः, क्षमायां भूमौ पेतुः लुठन्ति स्म। वलयानि च अवैधव्यचिह्नानि बभञ्जुः चूर्णितवत्य एव सर्वत्रापि लिट ॥२२॥

ता इति। ताः महिषीः सान्त्वयन्ती आश्वासयन्ती बन्धुता बन्धुगणः भरतं प्रतीक्षते इति भरतप्रतीक्षा भरतेनैव अस्यौर्ध्वदेहिकसंस्कारः कर्त्तव्य इति तं प्रतीक्षमाणा तं गतासुं नृपं आशु शीघ्रं माभूत् पूतिरिति तैले न्यक्षिपत् तैलद्रोण्यामस्थापयत्।

दूतांश्च राजात्मजमानिनीषून्
प्रास्थापयन्मन्त्रिमतेन यूनः ॥ २३ ॥
सुप्तोनभस्तः पतितं निरीक्षां-
चक्रे विवस्वन्तमधः स्फुरन्तम् ।
आख्यद्वसन्मातृकुले सखिभ्यः
पश्यन् प्रमादं भरतोऽपि राज्ञः ॥ २४ ॥

ततो मन्त्रिमतेन मन्त्रिणां मतं गृहीत्वा राजात्मजं भरतं आनिनीषुन् आनेतुमिच्छून् यूनस्तरुणान् चिप्रगमनचमानितिभावः। दूतान् प्रास्थापयत् केकयनगरं प्रेषयामास च ॥ २३ ॥

सुप्त इति । मातृकुले मातामहालये। "स्वजातीयगणे गोत्रे गृहेऽपि कथितं कुलम्" इति विश्वप्रकाशनिर्देशात् कुलस्य गृहवाचित्वमस्ति तथाच कुमारे "आसीत् पुरं सानुमतोऽनुरागादन्तःपुरञ्चैककुलोपमेयम्" इति । वसन् भरतोऽपि राज्ञो दशरथस्य प्रमादं अनिष्टं पश्यन् वितर्कयन् सन् सखिभ्यः मित्रेभ्यः । क्रियाग्रहणाच्चतुर्थी । आख्यत् कथयामास । ख्याधातो र्लुङि आदेशः। किमाख्यत् इत्याकाङ्क्षायामाह सुप्त इति । अहं सुप्तः सन् नभस्तः आकाशात् । पञ्चम्यास्तसिल् । 'पतितं च्युतं अधःस्फुरन्तं भूमौ चलन्तं विवस्वन्तं मार्त्तण्डं निरीक्षाञ्चक्रे अपश्यमिति, एतत् आख्यदित्यनेन परामृश्यते । स्वप्ने सूर्य्यस्य दिवः पतनदर्शनात् राज्ञोमहदनिष्टं सम्भावयामीत्यवादीदिति भावः ॥ २४ ॥

अशिश्रवन्नात्ययिकं तमेत्य
दूता यदार्थं प्रयियासयन्तः ।
आंहिष्ट जाताञ्जिहिषस्तदासौ
उत्कण्ठमानो भरतोगुरूणाम् ॥ २५ ॥

अशिश्रवन्निति। प्रयियासयन्तः भरतं प्रयाणेच्छां कार-यन्तः प्रस्थातुं प्रयोजितवन्तः इत्यर्थः। दूता एत्य केकय-नगरमागत्य यदा तं भरतं आत्ययिकं अत्ययसम्बन्धि अर्थं वस्तु नृपस्य मृत्युवार्त्तामित्यर्थः न अशिश्रवन् श्रावयन्ति स्म। शृणोतेर्णिजन्तस्य लुङि रूपम्। पितुर्मरणमुपश्रुत्य शोकविह्वलो न गच्छेत् चेदित्याशङ्कया यदा केनचित् व्याजेन तत् निगूढ़-वन्त इत्यर्थः। तदा एव अविलम्बेनेत्यर्थः जाता अञ्जिहिषा गमनेच्छा यस्य स तथोक्तः। गत्यर्थादंहतेर्भौवादिकात् सनि कृते अप्रत्ययः ततः स्त्रियामाप्। असौ भरतः गुरूणां पित्रादीनां उत्कण्ठमानः तेषां अत्याहितमाशङ्कमानः सन् आंहिष्ट प्रतस्थे। दूताः तं भरतं पिता ते स्नानरूपां द्रष्टुमिच्छ-तीति आत्ययिकं विनाशप्रयोजनकं मृत्यूदन्तवद्विदुरमित्यर्थः अर्थ्यते अनेनेति अर्थं वचनं यदा अशिश्रवन् यावितवन्तः तदा भरतः गुरूणां पित्रादीनां उत्कण्ठमानः अरन् आंहिष्टेति जयमङ्गलेन व्याख्यातम्। गुरूणामुत्कण्ठमान इत्यत्र अधी-गर्थदयेशां कर्म्मणीति षष्ठी ॥ २५ ॥

बन्धूनशङ्किष्ट समाकुलत्वात्
आसेदुषः स्नेहवशादपायम्।
गोमायुशारङ्गगणाश्च सम्यक्
नायासिषुर्भीममरासिषुश्च ॥ २६ ॥
स प्रोषिवानेत्य पुरं प्रवेक्ष्यन्
शुश्राव घोषं न जनौघजन्यम्।

बन्धूनिति। स भरतः समाकुलत्वात् दुःस्वप्नदर्शनेन अकस्मात् पितृदूतागमनेन च विकलचित्तत्वात् स्नेहवशाच्च हेतोः बन्धून् अपायं नाशं आसेदुषः प्राप्तवतः। आङ्पूर्वात् सदः क्वसुः। अशङ्किष्ट उत्प्रेक्षितवान्। स्नेहः पापमाशङ्कते, व्याकुलोहि अनर्थमुत्प्रेक्षते चेतिभावः। गोमायुशारङ्गगणाश्च शिवामृगप्रजाश्च सम्यक् न अयासिषुः पथि गच्छतस्तस्य अनुकूलं न आजग्मुः शृगालाः प्रदक्षिणं गताः मृगाश्च सव्यमित्यर्थः। वामतः स्थिताः शिवा दक्षिणे मृगाश्च शुभं सूचयन्ति, तद्विपर्यये तु अशुभम्। यदुक्तं "वामे शवशिवाकुम्भाः दक्षिणे गोमृगद्विजाः" इति। तथा भीमं भीषणं अरासिषुः चुक्रुशुः। दुर्निमित्तं खल्वेतत् तस्य उद्वेगाय बभूवेत्यर्थः ॥ २६ ॥

स इति। प्रोषिवान् मातामहालये कृतप्रवासः। प्रवसतेः क्वसुः एत्य प्रवासादागत्य पुरं प्रवेक्ष्यन् प्रवेष्टुमिच्छन्नित्यर्थः। स भरतः जनौघजन्यं जनसमूहसमुद्भूतं घोषं ध्वनिं एकत्र समवेतोहि जनौघः समधिकं शब्दं करोति तमित्यर्थः। न शुश्राव।

आकर्णयामास न वेदनादान्
नचोपलेभे वणिजां पणायाः ॥ २७ ॥
चक्रन्दुरुच्चैर्नृपतिं समेत्य
तं मातरोऽभ्यर्णमुपागतास्राः।
पुरोहितामात्यमुखाश्च योधाः
विद्वद्मन्युप्रतिपूर्णमन्याः ॥ २८ ॥

वेदनादान् वेदपाठध्वनीन् न आकर्णयामास। तथा वणिजां पण्यजीविनां पणन्ते ये ते वणिजः "पणेरिज्जादेश वः" इति औणादिकोवः। पणायाः क्रयविक्रयव्यवहारान्। पणङ् व्यवहारे इति धातोरायस्ततः अप्रत्यये कृते स्त्रियामाप्। न उपलेभे न ददर्श। पणायानितिपाठे पण्यन्ते इति पणाः पण्यद्रव्याणि तेषु आया लाभास्तानित्यर्थः। शोकान्धकारेण धृतसर्वचेष्टत्वात् समन्तात् सर्वं नीरवमपश्यदिति भावः ॥२७॥

चक्रन्दुरिति। उपागतानि प्राप्तानि अस्राणि नेत्रजलानि यासां ता उपागतास्रा मातरः कौशल्यादयः अभ्यर्णं समीपमागतम्। अभिपूर्व्वादर्द्दतेः क्त-प्रत्यये निपातनात् साधु। तं भरतं समेत्य सम्भूय आगत्य नृपतिं राजानमुद्दिश्य उच्चैश्चक्रन्दुः रुरुदुः हा राजन् हा स्वामिन् क्व गतोऽसीति करुणं परिदेवितवत्यः। तथा पुरः अग्रे धीयते इति पुरोहितः। अमा सह राज्ञा भवतीति अमात्यः। तौ मुखं प्रधानं येषां ते योधाश्च विद्वद्मन्युना उच्छलितशोकेन प्रतिपूर्णे मन्ये गल-

दिदृक्षमाणः परितःससीतं
रामं यदा नैक्षत लक्ष्मणञ्च।
रोरुद्यमानः स तदाभ्यपृच्छत्
यथावदाख्यन्नथ वृत्तमस्मै ॥ २९ ॥
आवद्धभीमभ्रुकुटीविभङ्गः
शिश्वीयमानास्तणरौद्रनेत्रः।

शिरे येषां ते विहृदमन्युप्रतिपूर्णमन्याः सन्तः उच्चैश्चक्रन्दुरित्यनेन सम्बन्धः। "पश्चात् ग्रीवाशिरा मन्या" इत्यमरः। शोकजन्यवायुना मन्यास्तम्भो नाम व्याधिर्जात इत्यर्थः। यथा अस्यैव षष्ठे "मन्युर्मन्ये ममास्तम्भीद्विपादोऽस्तभदुद्यतिम्। अजारीदिव च प्रज्ञा बलं शोकात्तथाजरत्" ॥ २८ ॥

दिदृक्षमाण इति। स भरतः परितः सर्व्वतः ससीतं रामं सीतां रामञ्च तथा लक्ष्मणञ्च दिदृक्षमाणः द्रष्टुमिच्छन्। "ज्ञाश्रुस्मृदृशां सनः" इत्यनेन आत्मनेपदम्। यदा नैक्षत तान् न ददर्श। तदा रोरुद्यमानः भृशं रुदन् सन्। रोदितेर्यङन्तात् शानच्। अभ्यपृच्छत् पुरोहितामात्यादीनिति शेषः। अथ ते यथावत् यादृशं वृत्तं भूतं तादृशम्। यत्तदोर्नित्यसम्बन्धात् तत्पदमध्याहर्त्तव्यम्। अस्मै भरताय आख्यन् कथयामासुः। ख्यातेर्लुङि अङादेशः। रामनिर्वासनादिकं सर्व्वमाख्यातमन्तोऽर्थः ॥ २९ ॥

आवद्धेति। आवद्धः कृतः भीमः भयङ्करः भ्रुवोः कुट्याः

उच्चैरुपालभ्य स कैकयीञ्च
शोके मुहुश्चाविरतं न्यमाङ्क्षीत् ॥ ३० ॥
नृपात्मजौ चिक्लिशतुः ससीतौ
ममार राजा विधवा भवत्यः ।
शोच्या वयं भूरनृपा लघुत्वं
कैकय्युपज्ञं बत वृत्तनर्थम् ॥ ३१ ॥

कौटिल्यस्य विभङ्गः विरचनं येन स तथोक्तः । तथा घूर्णायमाने अत्यर्थं विस्फारिते अरुणे आरक्ते च नेत्रे यस्य स तथोक्तः स भरतः । हृञर्थकात् घूर्णतेर्यङन्तात् शानच् । कैकयीं मुहुर्वारंवारं उच्चैः उपालभ्य निर्भर्त्सयामास । उपपूर्वात् लभतेर्ल्युङ् । तथा शोके अविरतं अजस्रं न्यमाङ्क्षीत् निमग्नः । निपूर्व्वात् मज्जतेर्लुङि रूपम् ॥ ३० ॥

नृपात्मजाविति । नृपात्मजौ रामलक्ष्मणौ ससीतौ सीतया सहेत्यर्थः, चिक्लिशतुः निर्वासनादिक्लेशमनुभूतवन्तौ । राजा ममार मृतः । म्रियतेर्लुङ्लिङोश्चेत्यात्मनेपदनियमात् लिटि परस्मैपदित्वम् । भवत्यः यूयं मातरः विगतो धवो भर्त्ता यासां ता विधवाः अभूवन् । "धवः प्रियपतिर्भर्त्ता" इत्यमरः । वयं शोच्या दैन्यमापन्नाः पालकाभावात् पाल्यानां शोचनीयत्वमिति भावः । अयशोभाजनत्वात् शोच्या इति जयमङ्गलेन व्याख्यातम् । मद्या इति पाठे एतत्कृतोऽयं प्रयोग इति वितर्कणीया इत्यर्थः । भूः पृथ्वी अनृपा अराजका अराजकत्वं हि वृत्तनर्थ-

नैतन्मतं मत्कमिति ब्रुवाणः
सहस्रशोऽसौ शपथान्यशप्यत् ।
उद्घाश्यमानः पितरं सरामं
लुठ्यन् सशोको भुवि रोरुदावान् ॥ ३२ ॥

मूलम् । यदुक्तं "अराजके हि लोकेऽस्मिन् सर्व्वतो विद्रुते भयात् । रक्षार्थमस्य सर्व्वस्य राजानमसृजत् प्रभुः" इति । वत खेदे बहवो अनर्थाः यस्मिन् तत् बह्वनर्थं लघुत्वं वरप्रार्थन-लक्षणं कैकय्या उपज्ञा आद्यं ज्ञानं कैकय्युपज्ञम् । "उपज्ञा ज्ञानमाद्यं स्यात्" इत्यमरः । उपज्ञोपक्रमान्तस्य तदादित्व-प्रकाशने इत्यमरवचनात् नपुंसकत्वं लिङ्गस्य लोकाश्रयत्वात् । रामं निर्वास्य यत् मदर्थं राज्यं प्रार्थितं तत् कैकय्या एव प्रथम-मुद्भावितं नान्येन इति भावः ॥ ३१ ॥

सम्प्रति स्वदोषं परिहरन्नाह नैतदिति । एतत् मतं राम-निर्वासनसंकल्पो न मत्कं न मदीयं इति ब्रुवाणः असौ सहस्रशः बहुवारान् शपथान् सम्प्रत्ययकारणवचनानि अशप्यत कृतवान्, धातूनामनेकार्थत्वात् अत्र करणार्थत्वम् । शपेः दैवादिकस्य उभयपदिनः लुङि रूपम् । ततः सशोकः स भरतः सरामं पितरं पितरं रामञ्च उद्घाश्यमानः हा तात, हा रामेति एवं शब्दयन् । वाशृशब्दे इति धातोः शानच् । रोरुदा भृशं रोदनमस्यास्तीति रोरुदावान् । रुदेर्यङन्तादप्रत्यये यङोलुक् स्त्रियामाप् च ततो मतुः । भुवि लुठ्यन् आसीत् लुटति स्म । लुठ्यतेर्विलोड़नार्थात् शयः ॥ ३२ ॥

तं सुस्थयन्तः सचिवा नरेन्द्रं
दिधक्षयन्तः समुदूह्यरात् ।
अन्त्याहुतिं हावयितुं सविप्राः
चिचीषयन्तोऽध्वरपात्रजातम् ॥ ३३ ॥

तमिति। नरेन्द्रं तैलद्रोणीस्थं मृतं राजानं दिधक्षयन्तः दग्धुमिच्छां कारयन्तः भरतेनेति शेषः। दहतेः सनन्तात् णिचि कृते शतृ। अध्वरपात्राणां यज्ञोपयोगिपात्राणां स्रुवादीनां जातं समूहं चिचीषयन्तः चेतुं संग्रहीतुमिच्छां कारयन्तः अत्रापि भरतेनेति शेषः। चिनोतेः सनन्तात् णिच् ततः शतृ। सविप्राः विप्रैः ऋत्विग्भिः सहिताः सचन्ते कार्येषु समवयन्तीति सचिवा, सचेरौणादिक इवन्, अमात्याः, तं भरतं सुस्थयन्तः सुस्थं प्रकृतिस्थं कुर्वन्तः सान्त्वयन्तः सन्तः अन्त्याहुतिं शेषाहुतिं हावयितुं अग्नौ प्रक्षेपयितुं आरात् नातिदूरे समुदूहुः नरेन्द्रमिति शेषः समुत्पूर्वात् वहतेर्लिटि रूपम्। शिबिकायामारोप्य तं अनतिदूरवर्त्तिनि श्मशाने भृत्यैरुह्यापितवन्त इत्यर्थः। अत्र आश्वलायनः। "अथै तान्दिग्यमग्नीन्वहन्ति यज्ञपात्राणि च ॥१॥ अन्वञ्चं प्रेतमयुजोऽमिथुनाः प्रवयसः। २। "यज्ञपात्राणामन्वञ्चं पृष्ठतः प्रेतं नयन्ति अयुजः विषमाः अमिथुना स्त्रियः पुरुषाय न मिश्राः स्युरित्यर्थः"। इति नारायणः चतुर्थाध्यायस्य प्रथमकाण्डिकायाम् ॥ ३३ ॥

उदक्षिपन् पट्टदुकूलकेतून्
अवादयन् वेणुमृदङ्गकांस्यम्।
कम्बूंश्च तारानधमन् समन्तात्
तथानयन् कुङ्कुमचन्दनानि ॥ ३४ ॥
७ ग्रीवाच्छिनासावदनं सरुक्मं
कृत्वाजिने प्राक्शिरसं निधाय।

उदक्षिपन्निति। तत्तत्कार्य्येषु नियुक्ता भृत्यवर्गा इति अध्याहृत्य व्याख्येयम्। समन्तात् सर्व्वतः पट्टदुकूलकेतून् पट्टांशुकविरचितान् ध्वजान् उदक्षिपन् उच्छ्रायितवन्तः। वेणुमृदङ्गकांस्यं वंशमुरजकांस्यतालं अवादयन्। जातिरप्राणिनामित्येकवद्भावः। तारान् उच्चध्वनीन् कम्बून् शङ्खान् च अधमन् शब्दितवन्तः ध्माधातोर्लङि धमादेशः। तथा कुङ्कुमचन्दनानि आनयन् यागार्थं आनीतवन्तः ॥ ३४ ॥

ग्रीवेति। ऋतौ यजतीति ऋत्विक् ऋतूपपदात् यजतेः क्विप् निपातनात् साधु। अजिने कृष्णसारचर्म्मणि प्राक् पूर्वस्यां दिशि स्थितं शिरो यस्य तं प्राक्शिरसं शवं निधाय स्थापयित्वा शाययित्वेत्यर्थः। ग्रीवाच्छिनासावदनं प्राण्यङ्गत्वादेकवद्भावः। सरुक्मं ससुवर्णं कृत्वा तथा यथाविधानं यथाशास्त्रं पात्राणि स्रुगादीनि सन्निधाय यज्ञमन्यङ्गेषु विन्यस्य ज्वलितं चितं चयनं तदर्थमग्निं चिताग्निं जुहाव जुहोतिस्म ऋत्विगित्यर्थः। अत्र आश्वलायनः। "तस्मिन् बर्हिरास्तीर्य कृष्णाजिनञ्चोत्तर-

सञ्चित्य पात्राणि यथाविधानम्
ऋत्विग्जुहाव ज्वलितं चिताग्निम् ॥ ३५ ॥
कृतेषु पिण्डोदकसञ्चयेषु
हित्वाभिषेकं प्रकृतं प्रजाभिः ।

लोम तस्मिन् प्रेतं संवेशयन्त्युत्तरेण गार्हपत्यं हुत्वावहवनीयमभिमुखशिरसम् । १५ । अथैतानि पात्राणि योजयेत् । १ । दक्षिणहस्ते जुहूं (पलाशकाष्ठनिर्म्मितं अर्द्धचन्द्राकृतियज्ञपात्रम्) । २ । सव्ये उपभृतं (अश्वत्थकाष्ठनिर्म्मितं वर्त्तुलाकारं यज्ञपात्रम्) । ३ । दक्षिणे पार्श्वे स्फाम् (खड्गाकारं यज्ञकाष्ठभेदम्) सव्येऽग्निहोत्रहवनीम् (अग्निहोत्रसाधनं पात्रम्) । ४ । उरसि ध्रुवां (उडुम्बरपत्राकारं बृहत् स्रुग्भेदम्) शिरसि कपालानि दत्सु ग्राव्नः । ५ । नासिकयोः स्रुवौ । ६ । कर्णयोः प्राशित्रहरणे । ७ । उदरे पात्रीम् (यस्यां हवींषि साध्यन्ते) । १० । उभाभ्यां शम्याम् । ११ । अरणीमूर्व्वोः । उदूखलमुषले जङ्घयोः । १२ । पादयोः शूर्पे । १५ । सङ्क्रममित्यत्र नारायणेन उद्धृतं "ततो हिरण्यशकलैः छिद्राण्यपि दधाति वै । घृतमिश्रांस्तिलांश्चापि किरेत् प्रेतकलेवरे" इति ॥ ३५ ॥

कृतेष्विति । पिण्डोदकसञ्चयेषु पिण्डदानतर्पणास्थिचयनकार्य्येषु कृतेषु सत्सु भरतः प्रजाभिः प्रकृतं प्रस्तुतं अभिषेकं हित्वा परित्यज्य विनयेन प्रसादनया न तु विभीषिकया रामं प्रत्यानिनीषुः प्रत्यानेतुमिच्छुः सन् सर्व्वाः प्रकृतीः मयैकेन प्रसाद्यमानः

प्रत्यानिनीषुर्विनयेन रामं
प्रायादरण्यं भरतः सपौरः ॥ ३६ ॥

कदाचिन्नागच्छेत् यदीति आग्रहः अयोध्यावासिभिः सह अरण्यं प्रायात् गतवान्। प्रपूर्व्वात् यातेर्लङ्। अस्थिसञ्चयने आश्वलायनः—"सम्वत्सरान्ते चेत् सपिण्डयिष्यन् कृष्णपचस्य ऊर्द्धं दशम्यां अयुजासु तिथिषु। अथ द्वादशाहे सपिण्डयिष्येत् अन्तर्दशाहे षष्ठाष्टमदशाहवर्जमेकनचत्रेषु (फल्गुनीद्वयप्रोष्ठपद्द्वयाषाढ़द्वयभिन्नेषु) पुमांसं अलचणे (स्तनरहिते) कुम्भे सञ्चिनियुः कुम्भ्यामलचणायां स्त्रियं अयुजोऽमिथुना वृद्धाः। तं देशं चीरोदकेन शमीशाखया त्रिः प्रसव्यं परिव्रजन् कर्त्ता प्रोचति। अथ अङ्गुष्ठोपकनिष्ठाभ्यां एकैकमस्थि उपसंगृह्य असन्दयन्तः कुम्भे निदधुः पादौ पूर्व्वं, शिरः उत्तरं सुसञ्चितं सञ्चित्योपरि कपालेन शूर्पेण सम्पूय यत्रैनं वर्षा आपो नाभिसरन् तत्र गर्त्ते च कुम्भमवदधुः। अथ पांसून् अवसम्पूर्य (यथा गर्त्ते कुम्भ आननपर्य्यन्तं निमग्नो भवति) अथ कुम्भं कपालेनापिधाय मृदाच्छादयेत् यथा न दृश्येत। अथ दाहायतने मृदावेदिं कृत्वा त्रीन् उपलान् अभ्यक्तस्नापितान् प्राङ्मुखान् निधाय मध्यमे प्रेत उत्तरे श्मशानवासिनः, पूर्व्वे प्रेतान् दक्षिणे तत्सर्व्वीयावारा उपलानलंकृत्याभ्यर्च्य पयतस्तेभ्य एकैकं पिण्डमुत्सृज्य उदकुम्भं पादुकाच्छत्राणि दद्यात्। यथानवेचं प्रत्यावृत्य स्नात्वागारमुपेयुर्मृतदेशे मृतकोपसिकतासु बीजान् वपेयुः श्राद्धं पार्व्वणं दद्युः"। परिशिष्ट। २। ८॥ ३६॥

शीघ्रायमाणैः ककुभोऽश्नुवानैः
जनैरपन्थानमुपेत्य सृप्तैः ।
शोकादभूपैरपि भूषकासां-
चकार नागेन्द्ररयाश्वमिश्रैः ॥ ३७ ॥
उच्चिक्यिरे पुष्पफलं वनानि
सस्नुः पितॄन् पिप्रियुरापगासु ।

शीघ्रायमाणैरिति । अशीघ्रैः शीघ्रैर्भवद्भिः शीघ्रायमाणैः। भृशादित्वात् अभूततद्भावे क्यङ् । ककुभो दिशः अश्नुवानैः व्याप्नुवद्भिः । अश्नोतेः शानच् । अपथ्यानं बहुलादमार्गमपि उपेत्य प्राप्य सृप्तैः यातैः । अपन्थानमित्यत्र पथोविभाषेति विकल्पितः समासान्ताच्प्रत्ययः । शोकात् अभूपैः अलङ्करणशून्यैरपि नागेन्द्रा रथा अश्वाश्च नागेन्द्ररथाश्वम् । सेनाङ्गत्वात् द्वन्द्वैकवद्भावः । तेन मिश्रैः अन्वितैः जनैः पौरैरित्यर्थः हेतुभूतैः भूः पयासाञ्चकार शुशुभे । चकास्तेर्लिटि रूपम् ॥ ३७ ॥

उच्चिक्यिरे इति । ते जना गच्छन्तः पुष्पाणि फलानि च पुष्पफलम् । जातिरप्राणिनामित्येकवद्भावः । वनानि उच्चिक्यिरे, वनेभ्यः पुष्पाणि फलानि च संगृहीतवन्त इत्यर्थः । चिनोतेर्द्विकर्म्मकस्य लिटि क्यादेशः । आपगासु नदीषु सस्नुः स्नातवन्तः पितॄन् स्वधाभुजः पिप्रियुः तर्पितवन्तः । पुलिनानि सैकतानि इत्वा गत्वा आरेमुः शोकापनोदनार्थं क्रियत्तमपि कालं क्रीड़न्ति स्म इत्यर्थः । व्याङपरिभ्यो रम इति परस्मै-

आरेमुरित्वा पुलिनान्यशङ्कं
छायां समाश्रित्य विशश्रमुश्च ॥ ३८ ॥
सम्प्राप्य तीरं तमसापगायाः (१)
गङ्गाम्बुसम्पर्कविशुद्धिभाजः ।
विगाहितुं यामुनमम्बु पुण्यं
ययुर्निरुद्धश्रमवृत्तयस्ते ॥ ३९ ॥

पदम् । तथा अशङ्कं विस्रब्धं छायां समाश्रित्य विशश्रमुः अध्वखेदमपनिन्युः । आरेमुरित्यत्रारेटुरिति पाठान्तरम् । पुलिनानि इत्वा आरेटुः पुलिनेषु इतस्ततः परिक्रामन्ति स्म इत्यर्थः ॥ ३८ ॥

सम्प्राप्येति । ते जना गङ्गाम्बूनां सम्पर्केण विशुद्धिं भजते इति गङ्गाम्बुसम्पर्कविशुद्धिभाक् तस्याः गङ्गाम्बुसम्पर्कविशुद्धिभाजः गङ्गासङ्गमाहितपावनतायाः । यस्याः स्मरणात् पापं ताम्यति सा तमसा आपं जलसमूहं गच्छति प्राप्नोतीति आपगा नदी तमसा एव आपगा तस्याः तीरं सम्प्राप्य निरुद्धा प्रशमिता श्रमस्य वृत्तिः प्रसरो यैस्ते तथोक्ताः अध्वखेदमपनयन्तः इत्यर्थः । यमुनाया इदं यामुनं पुण्यं पवित्रं अम्बु विगाहितुं तत्र स्नातुं ययुः चलिताः । तरसापगाया इति पाठे तरसा वेगेन आपगाया नद्याः तमसायाः इत्यर्थः ॥ ३९ ॥

(1) The Tamasa′ or Tonse flows into the Ganges below Pratishthana. There is another Tamasa′ flowing along the Midnapur district and discharging itself into the Mayurakshi; but that is not meant here.

ईयुर्भरद्वाजमुनेर्निकेतं
यस्मिन् विशश्राम समेत्य रामः।
च्युताशनायः फलवद्विभूत्या
व्यस्यन्नुदन्यां शिशिरैः पयोभिः ॥ ४० ॥

वाचंयमान् स्थण्डिलशायिनश्च
युयुक्षमाणाननिशं मुमुक्षून्।
अध्यापयन्तं विनयात् प्रणेमुः
पद्गा भरद्वाजमुनिं सशिष्यम् ॥ ४१ ॥

ईयुरिति। ते भरद्वाजमुनेर्निकेतं आश्रमम्। कित निवासे इति धातोरधिकरणे घञ्। ईयुः जग्मुः। इण धातोर्लिटि रूपम्। यस्मिन् निकेते रामः समेत्य मिलित्वा तस्य पश्चात् समागतैः जनैः सार्द्धमिति बोद्धव्यम्। फलवतां वृक्षाणां विभूत्या सम्पदा च्युता नष्टा अशनाया क्षुधा यस्य स तथोक्तः, अशनायेति निपातितम्, तथा शिशिरैः शीतलैः पीयन्ते इति पयांसि तैः। पीङ्पाने इत्यस्य कर्म्मण्यसुन्। उदन्यां व्यस्यन् वारयन् विशश्राम पर्य्यटनक्लेशमपनिनाय। अथवा उद-न्याशनायाशब्दौ उदकाशनाभ्यां क्यचि कृते अप्रत्ययेन साधितौ ॥ ४० ॥

वाचमिति। विनयात् पादाभ्यां गच्छन्तीति पद्गाः पदा-तयः मुनिभक्त्या रथादिभ्यः अवतीर्य्य पादचारेणाभिगच्छन्त इत्यर्थः। विनयादित्यत्र हेतौ यवर्थे वा पञ्चमी गमोत्तरपदे,

आतिथ्यमेभ्यः परिनिर्विवप्सोः
कल्पद्रुमा योगबलेन फेलुः ।
धामप्रथिम्नो म्रद्‌िमान्वितानि
वासांसि च द्राघिमवन्त्युदूहुः ॥ ४२ ॥
आम्नां प्रतीपुर्विनयादुपास्थुः
जगुः सरागं ननृतुः सहावम् ।

पदादेशः । ते भरतादयः वाचंयमान् मौनव्रतान् । "वाचियमो व्रते" इति खच् । स्थण्डिलशायिनः व्रतार्थं भूशायिनः अनिशं अविच्छेदेन युयुक्षमानान् योक्तुमिच्छतः योगाभ्यासनिष्ठान् मुमुक्षून् मोक्षाभिलाषिणः अध्यापयन्तं मुमुक्षुभ्यः योगशास्त्रमनुशासतं सभिष्यं भरद्वाजं प्रणेमुः ॥ ४१ ॥

आतिथ्यमिति । आतिथ्यं अतिथ्यर्थमन्नपानादिकं एभ्यः भरतादिभ्यः परिनिर्व्विवप्सोः परिनिर्वप्तुं दातुमिच्छोः परिनिपूर्व्वोवपिर्दाने वर्त्तते, तस्मात् सन्नन्तात् उः । धाम्ना तेजसा प्रथिमा पृथुत्वं यस्य तस्य धामप्रथिम्नः, तेजसो वहिर्विसमरत्वात् शरीरस्य पृथुत्वमिवोपजायते इति भावः । तस्य मुनेः योगबलेन समाधिबलेन कल्पद्रुमाः फेलुः फलितवन्तः अन्नपानादिकमिति शेषः । तथा म्रद्रिमान्वितानि मृदूनि द्राघिमवन्ति दीर्घाणि च वासांसि वस्त्राणि उदूहुः उदवहन्तिश्च । उत्पूर्वस्य वहतेर्लिटि रूपम् । प्रथिमादिशब्दा इमनप्रत्ययान्ताः ॥ ४२ ॥

आम्नामिति । च किञ्च तस्मिन् तपोवने तिलोत्तमाद्या

सविभ्रमं नेमुरुदारमूचुः
तिलोत्तमाद्या वनिताश्च तस्मिन् ॥ ४३ ॥
वस्त्रान्नपानं शयनञ्च नाना
कृत्वावकाशे रुचिसम्प्रक्लृप्तम्।
तान् प्रीतिमानाह मुनिस्ततः स्म
निवध्वमाद्धं पिबताच शेध्वम् ॥ ४४ ॥

वनिता दिव्ययोषितः अप्सरसः इत्यर्थः आज्ञां मुनेरादेशं प्रतीपुः गृहीतवत्यः। प्रतिपूर्व्वादिण्धातोर्लिट्, सहि ग्रहणार्थकः। विनयात् उपास्थुः समीपमागमन् भरतादीनां परिचर्य्यार्थं उपस्थानं कृतवत्य इत्यर्थः। उपतिष्ठतेर्लुङ्। सरागं रक्तं मालवादिरागयुक्तं वा यथा तथा जगुः गीतवत्यः, गैधातोर्लिट्। सहावं सशृङ्गारचेष्टं ननृतुः नृत्यन्ति स्म। सविभ्रमं सविलासं नेमुः प्रणताः, उदारं अग्राम्यं ऊचुः उक्तवत्यः। मुनिप्रभावात् दिव्यस्त्रियस्तत्रागत्य भरतादीन् शुश्रूषाञ्चक्रिरे नृत्यगीतादिभिर्मोदयामासुश्चेति भावः। पुरा किल भगवान् विरिञ्चिः सर्व्वरत्नमुत्थः तिलप्रमाण-माकलय्य तिलोत्तमां नामाप्सरसमसृजत्। ततस्तां कामयमानौ महासुरौ सुन्दोपसुन्दौ भ्रातरौ युध्यमानौ अन्योन्यमवधिपातां तेन च देवा निर्वृतिमलभेदुरिति पुराणवार्त्ता ॥ ४३ ॥

वस्त्रेति। ततो दिव्यवनितोपस्थानानन्तरं प्रीतिमान् अतिथिविशेषलाभेन आनन्दी योगबलसमद्दर्शनायकाागनात्मा या

ते भुक्तवन्तःससुखं वसित्वा
वासांस्युषित्वा रजनीं प्रभाते।
द्रुतं समध्वा रथवाजिनागैः
मन्दाकिनीं रम्यवनां समीयुः॥ ४५॥

हृष्टचित्तः मुनिः भरद्वाजः अवकाशे यथाभिमते प्रदेशे रुचिसंप्रक्रमं यस्य यादृगभिरुचिस्तस्य तथैव सम्पादितं वस्त्राणि अन्नानि भक्ष्याणि पानानि पानीयानि च वस्त्रान्नपानम्। समाहारे द्वन्द्वैकवद्भावः। शयनं शय्याश्च नाना कृत्वा पृथक् कृत्वा तान् आह स उक्तवान्। किमिति। निवद्ध वस्त्राणि आच्छादयत। निपूर्व्वात् वस्तेर्लोट्। आद्ध उपविशत। आस्तेर्लोट्। आत्त अन्नं भक्षयत, आत्तेर्लोट्, पिवत पानीयं पिवत। तथा शेद्धं शयने शयनं कुरुत इति आहेत्यनेन सम्बन्धः सर्व्वत्र विधौ लोट॥ ४४॥

ते इति। ते भरतादयः ससुखं सहर्षं भुक्तवन्तः सन्तः, वासांसि वसित्वा परिधाय, रजनीं उषित्वा। "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया। प्रभाते उषसि द्रुतं शीघ्रं अध्वानं सङ्गताः समध्वाः मार्गानुसारिणः सन्त इत्यर्थः। "उपसर्गादध्वनः" इति समासान्तष्टच। रथाश्च, वाजिनश्च, नागाश्च इति रथवाजिनागैः। समाहारविधेरनित्यत्वात् सेनाङ्गत्वेऽपि इतरेतरद्वन्द्वः। जयमङ्गलस्तु रथवाजीत्यत्र द्वन्द्वैकवद्भावः तेन सहिता नागा इति शाकपार्थिवादित्वात् समास इति व्याचष्टे। रम्यवनां मनोज्ञकाननां निम्नगां जजग्मुः। "पयःकीलालममृतं

वैखानसेभ्यः श्रुतरामवार्त्ताः
ततो विशिञ्जानपतत्त्रिसङ्घम् ।
अभ्रंलिहाग्रं रविमार्गभङ्गम्
आनंहिरेऽद्रिं प्रति चित्रकूटम् ॥ ४६ ॥
दृष्ट्वोर्णुवानान् ककुभो वलौघान्
वितत्य शार्ङ्गं कवचं पिनह्य ।

जीवनं भुवनं वनम्" इत्यमरः। मन्दाकिनीं चित्रकूटवर्त्मनि स्थितां तन्नाम्नीं काञ्चित् नदीं समीयुः सम्भूय गताः सङ्गताः। सम्पूर्वादिणधातोर्लिट्। यद्वा मन्दाकिनीं नर्मदां गङ्गामात्रे मन्दाकिनीति केचित् वदन्ति ॥ ४५ ॥

वैखानसेति। ततस्ते वैखानसेभ्यः वानप्रस्थेभ्यः। "वैखानसो वनैवासी वानप्रस्थश्च तापसः" इति वैजयन्ती। श्रुतरामवार्त्ताः चित्रकूटे रामोऽस्तीत्यधिगतरामोदन्ताः सन्तः विशिञ्जानः कूजन् पतत्त्रिणां सङ्घो यस्मिंस्त तथोक्तम्। शिजिकिङ्क्ष्णुटध्वनाविति धातोः शानच्। अभ्रं लेढ़ि स्पृशति इति अभ्रंलिहं अग्रं शिखरं यस्य तं अभ्रंलिहाग्रं रविमार्गस्य भङ्गो विघातो यस्मिन् तस्य अत्युन्नतत्वात् तं रविमार्गभङ्गं चित्रकूटं (१) अद्रिं प्रति तं लक्ष्यीकृत्य इत्यर्थः आनंहिरे, प्रतस्थिरे। अहिङ् गताविति धातोर्लिट्, अद्रिमित्यत्र प्रतियोग्येन द्वितीया ॥ ४६ ॥

दृष्ट्वेति। शितेषुः तीक्ष्णशरः सौमित्रिर्लक्ष्मणः ककुभः दिशः

तस्थौ सिसंग्रामयिषुः शितेषुः
सौमित्रिरक्षिभ्रुवमुज्जिहानः ॥ ४७ ॥
शुक्लोत्तरासङ्गभृतोविशस्त्रान्
पादैः शनैरापततः समन्यून्।
औहिष्ट तान् वीतविरुद्धबुद्धीन्
विवन्दिषून् दाशरथिः स्ववर्ग्यान् ॥ ४८ ॥

ऊर्णुवानान् आच्छादयतः ऊर्णोतेरादादिकादुभयपदिनः शानच्। बलीयान् सैन्यसमूहान् दृष्ट्वा शृङ्गस्य विकारं शार्ङ्गं धनुः वितत्य आरोपितगुणं कृत्वा कवचं पिनह्य बद्धा। णह बन्धने इत्यस्माल्ल्यप् अपेरकारलोपश्च। सिसंग्रामयिषुः संग्रामयितुमिच्छुः। संग्राम युद्धे इति चौरादिकात् णिचिकृते सन्, तत उः। अक्षिणी च भ्रुवौ च अक्षिभ्रुवं समाहारद्वन्द्वे निपातनात् साधु। उज्जिहानः उत्क्षिपन् ऊर्द्ध्वं नयन्नित्यर्थः तस्थौ। हाङ्गताविल्यस्मात् जुहोत्यादिकात् शानच् ॥ ४७ ॥

शुक्लेत्यादि। दाशरथिः रामस्तु शुक्लं उत्तरासङ्गं उत्तरीयं बिभ्रतीति शुक्लोत्तरासङ्गभृतः विशस्त्रान् त्यक्तायुधान् पादैः शनैरापततः मुक्तवाहनत्वात् पद्भ्यजिनैव मन्दं मन्दं आगच्छतः अतः समन्यून् सशोकान् तान् वीतविरुद्धबुद्धीन् विगतयुद्धादिमतीन् विवन्दिषून् वन्दितुमिच्छून् स्ववर्गे भवाः स्ववर्ग्यास्तान् आत्मीयान् औहिष्ट ज्ञातवान्। ऊह तर्के इति धातोर्लुङ्। तेषां तादृशविनीतवेशचेष्टितानि दृष्ट्वा नैतेऽस्माकमरयो युयु-

समूलकाषं चकषूरुदन्तः
रामान्तिकं बृंहितमन्युवेगाः।
आवेदयन्तः क्षितिपालमुच्चैः
कारं मृतं रामवियोगशोकात्॥ ४९॥
चिरं रुदित्वा करुणं सशब्दं
गोत्राभिधायं सरितं समेत्य।

त्वः किन्तु सभाजयितुमागच्छन्तः स्वजना एव इति निषिकाय॥ ४८॥

समूलेति। बृंहितमन्युवेगा विवृद्धशोकावेगाः रुदन्तस्ते भरतादयः रामान्तिकं रामसमीपं समूलं कषित्वा भूमेरधोभागमुत्खाय। निर्मूलसमूलयोः कष इति कषेर्णमुल्। स्वशरीराघातात् स्वाधोभागं कषित्वा रामस्य पुरतः भूमौ लुठन्ति स्म इति भावः। किं कुर्वन्तः। रामवियोगशोकात् मृतं त्यक्तासुं क्षितिपालं दशरथं उच्चैःकारं उच्चैः कृत्वा आवेदयन्तः विज्ञापयन्तः। अव्यये यथाभिप्रेताख्याने इति कृञो णमुल्। अयथाभिप्रेताख्यानं नाम अप्रियस्य उच्चैः प्रियस्य च नीचैः कथनम्॥ ४९॥

चिरमिति। राघवलक्ष्मणाभ्यां चिरं बहुक्षणं करुणं सशोकं सशब्दं सफुत्कारं रुदित्वा क्रन्दित्वा। रुदेः सेटक्त्वाद् प्रत्ययस्य नित्यं कित्त्वमतो न गुणः। सरितं नदीं समेत्य सम्भूय गत्वा मध्येजलात् जलमध्यमपतीर्य। त्यब्लोपे पञ्चमी। जलमध्यात्

मध्येजलाद्राघवलक्ष्मणाभ्यां
प्रत्तं जलं द्व्यञ्जलमन्तिकेऽपाम् ॥ ५० ॥

अरण्ययाने सुकरे पिता मां
प्रायुङ्क्त राज्ये बत दुष्करे त्वाम् ।
मागाः शुचं वीर भरं वहामुम्
आभाषि रामेण वचः कनीयान् ॥ ५१ ॥

गृहीतमिति शेषः । "पारे मध्ये षष्ठ्या वा" इत्यव्ययीभावः । द्वौ अञ्जली प्रमाणं अस्य द्व्यञ्जलं अञ्जलिद्वयपरिच्छिन्नमित्यर्थः । "द्विनिभ्यामञ्जलेः" इति टच् । जलं अपां अन्तिके तटे इत्यर्थः गोत्राभिधायं पितुर्नामोल्लेखपूर्वकमित्यर्थः । प्रत्तं प्रदत्तम् । प्रदृदातेः क्तः । प्रत्येकमेकमेकैकाञ्जलिजलदानेन पितुस्तर्पणम-कारीत्यर्थः । जयमङ्गलस्तु अञ्जली द्वौ विगृह्य तद्धितार्थे समास-माह द्वावञ्जली प्रमाणमस्येत्यस्मिन् वाक्ये तु प्रमाणप्रत्ययस्य लुकि सति समासान्तो न प्राप्नोति अतद्धितलुकीत्यधिकारादिति हेतुञ्च उपन्यस्यति । द्वयोरञ्जल्योः समाहार इति तत्परिच्छि-न्नत्वादभेदोपचारात् जलमपि द्व्यञ्जलमुक्तमिति भरतेन व्याख्या-तम् ॥ ५० ॥

अरण्येति । पिता सुकरे सुखसाध्ये अरण्याय यानं अरण्य-यानं तस्मिन् मां प्रायुङ्क्त, बत खेदे दुष्करे दुःखसाध्ये राज्ये राजकार्येषु त्वां प्रायुङ्क्त नियोजितवान् । युजेरोधादिकस्य लङि रूपं प्रपूर्व्वकत्वात् आत्मनेपदम् । एवं सति हे वीर शुचं

श्रुती कृती वृद्धमतेषु धीमान्
त्वं पैतृकं चेद्वचनं न कुर्य्याः।
विच्छिद्यमानेऽपि कुले परस्य
पुंसः कथं स्यादिह पुत्रकाम्या ॥ ५२ ॥

मागाः विषादं मागमः। माङ्योगात् इणधातोर्लुङि गादेशे अडागमनिषेधः। अमुं भरं पितुर्नियोगरूपं वह सम्पादय इति वचः रामेण कनीयान् अनुजो भ्राता भरतः आभाषितः। ईयसुनि अल्पस्य कनादेशः ॥ ५१ ॥

श्रुतीति। वृद्धानां भूयोदर्शिनां मनीषिणां मतानि श्रुतानि गुरुमुखादधिगतानि, कृतानि अनुष्ठितानि च येन स वृद्धमतेषु श्रुतीकृती। क्तस्येन्विषयस्येति कर्मणि सप्तमी। धीमान् प्रशस्तबुद्धिसम्पन्नः। प्रशंसायां मतुप्। त्वं चेत् पैतृकं पितुरागतं वचनं न कुर्य्याः न करिष्यसि। तदा इह अस्मिन् लोके कुले वंशे विच्छिद्यमाने विच्छेदमापद्यमानेऽपि परस्य अन्यस्य उत्तरकालिकस्य या पुंसः जनस्य पुत्रकाम्या आत्मनः पुत्रेच्छा कथं स्यात् न भविष्यतीत्यर्थः। पुत्रशब्दात् स्वेच्छायां काम्यच् ततो अप्रत्यये स्त्रियामाप्। भवादृशि सत्पुत्रे पितुर्नियोगमवधीरयति लोकानामतःपरं पुत्रलाभेच्छा न भविष्यतीति भावः ॥ ५२ ॥

अस्माकमुक्तं बहु मन्यसे चेत्
यदीशिषे त्वं न मयि स्थिते च।
जिह्रेष्यतिष्ठन् यदि तातवाक्ये
जहीहि शङ्कां व्रज शाधि पृथ्वीम् ॥ ५२ ॥
दृढोरसां राज्यधुरां प्रवोढुं
कथं कनीयानहमुत्सहेय।

अस्माकमिति। अस्माकं उक्तं अग्रजवाक्यम्। वचेर्भावे क्तप्रत्ययात् अस्माकमिति कर्त्तरि षष्ठी। चेत् यदि बहु मन्यसे आद्रियसे पितृतुल्येनाग्रजेनानुमतः कथमेवं न कुर्य्यामिति चेत् जानासि। मयि स्थिते जीवति यदि त्वं न ईशिषे प्रभुत्वं न करोषि स्वातन्त्र्यं नावलम्बसे इत्यर्थः। प्रभुस्त्वं त्वदाज्ञाकरोऽहमिति चेत् मन्यसे इति भावः। तथा तातवाक्ये पितृनियोगे। पुत्रे पितरि पूज्ये च तातशब्दं प्रचक्षते इति। अतिष्ठन् अवर्त्तमानः तातवाक्यमकुर्व्वन् इत्यर्थः। यदि जिह्रेषि लज्जसे। गुरुवचनमनतिक्रमणीयम् विशेषतस्तातवचनं तदनादृत्य यदि ते लज्जा भवतीत्यर्थः। तदा शङ्कां विकल्पं जहीहि त्यज, व्रज अयोध्यां प्रतिनिवर्त्तस्व, पृथ्वीं कोशलराज्यमित्यर्थः शाधि पालय। तदकरणे तु मां मातॄश्च विमानयिष्यसीति स्वकर्त्तव्यानुष्ठाने मनो निधेहीति भावः ॥५१॥

दृढोरसामिति। कनीयान् कनिष्ठोऽहं उरसा निर्म्मित पौरुषः पुत्रः दृढः अचल पौरुषो यस्यां तां दृढोरसां ज्येष्ठाधि-

मा मां प्रयुंक्थाः कुलकीर्त्तिलोपे
प्राहस्म रामं भरतोऽपि धर्म्मम् ॥ ५४ ॥
सर्व्वंस्खलं हस्तितुरङ्गमेतत्
अमूनि रत्नानि च राजभाञ्जि।
राजन्यकं चैतदहं चितीन्द्रः
त्वयि स्थिते स्यामिति शान्तमेतत् ॥ ५५ ॥

कारार्हां राज्यस्य समाङ्गरूपस्य धूर्भारः राजधुरा ताम्। अमत्यये परवल्लिङ्गमिति स्त्रीलिङ्गत्वम्। "धूर स्यात् भारचिन्तयोः" इति विश्वः। प्रवोढुं ग्रहीतुं कथं उत्सहेय न कथमपि शक्यामीत्यर्थः। विभाषा कथमि लिङ्चेति लिङ्। अतः मां कुलकीर्त्तिलोपे कुलकीर्त्तिनाशार्थं। "निमित्तात् कर्म्मसमवाये" इति सप्तमी। मा प्रयुंक्थाः नियोजय। प्रपूर्व्वात् युजेः लुङ्। इति धर्म्मं धर्म्मादनपेतं वचनं भरतोऽपि रामं प्राहस्म उक्तवान्। ज्येष्ठातिक्रमस्य पूर्व्वैरनाचरितत्वात् तद्विपरीतवाक्यस्य धर्म्मत्वमिति भावः। जयमङ्गलम् लोपयतीति लोपः रघुवंशस्य या कीर्त्तिः तस्या लोपे क्षयकरे कार्य्ये इति व्याचष्टे ॥ ५४ ॥

सर्व्वस्खलमिति। एतत् सर्व्वंस्खलं बलवत्। "सर्व्वक जीवने बले" इति धातोरम् ततो अस्त्यर्थे वलच्। हस्तिनतुरङ्गाश्च हस्तितुरङ्गम्। सेनाङ्गत्वादेकवद्भावः। अमूनि राजभाञ्जि राजयोग्यानि रत्नानि मरकतेन्द्रनीलपद्मरागादीनि च।

इति निगदितवन्तं राघवस्तं जगाद
व्रज भरत गृहीत्वा पादुके त्वं मदीये ।

एतत् राजन्यकं चत्रियसमूहश्च अस्तीतिशेषः। अहञ्च त्वयि स्थिते विद्यमाने चितीन्द्रः स्यां भवेयमित्येतत् शान्तं उक्तं माभूत्। शान्तमलीकमिति जयमङ्गलेन व्याख्यातम्। त्वयि जीवति अहमेतेषां मणिमाणिक्यहस्त्यश्वराजन्यानामीश्वरो भवेयमित्येतत् नितरामनुचितं मे प्रतिभातीति भावः॥ ५५॥

इतीति। राघवो रामः इति इत्थं निगदितवन्तं उक्तवन्तं तं जगाद। किमित्याह। हे भरत त्वं मदीये पादुके उपानहौ गृहीत्वा व्रज अयोध्यां गच्छ। तथा धुतनिखिलविशङ्कः अपगताशेषविकल्पः जनौघैः प्रकृतिपुञ्जैः पूज्यमानः बहुमन्यमानः सन् अस्मन्मतेन अस्माकं मतमनुसृत्य सकलभुवनराज्यं सर्व्वत्र भूमण्डले राज्यं कारय अनुष्ठापय पादुके इति योजना। हृक्रोरन्यतरस्यामिति प्रयोजककर्त्तुः कर्म्मत्वम्। भरतस्त्वाह "अस्मन्मतेन" इत्यत्र प्रयोजककर्त्तरि तृतीया। "अस्मन्मतेन" इत्यत्र गौरवादस्मच्छब्दस्य बहुत्वं तत्र "मदीये" इत्येकवचनप्रयोगेन पूर्व्वापरसङ्गतिभङ्गात् समीचीनतया न सङ्गच्छते। जयमङ्गलस्तु पादुके रामस्यैव मतन्तु रामलक्ष्मणयोरिति भिन्नवचनत्वं न दोषाय इति सिद्धान्तयति। अस्मन्मतमित्यत्र सीतालक्ष्मणसहितत्वेन बहुत्वविवक्षया न मदादेश इति भरतेन मीमांसितम्। भरतो रामस्यैव मतानुसारी राजा भशास,

च्युतनिखिलविशङ्कः पूज्यमानो जनौघैः
सकलभुवनराज्यं कारयास्मन्मतेन ॥ ५६ ॥

इति श्रीभट्टिकाव्ये श्रीरामप्रवासो नाम
तृतीयः सर्गः।

न खलु लक्ष्मणस्य नापि च सीताया इति रामायणे वर्णितं तद्धि युक्तियुक्तञ्च। तदेषा मीमांसा कष्टकल्पनमेव केवलं, कविं प्रति अतिभक्तिविजृम्भितञ्चेत्यनादरणीया ॥ ५६ ॥

इति भट्टिटीकायां तृतीयः सर्गः।

## चतुर्थः सर्गः ।

---

निवृत्ते भरते धीमानवेरामस्तपोवनम् ।
प्रपेदे पूजितस्तस्मिन् दण्डकारण्यमीयिवान् ॥ १ ॥
अटाव्यमानोऽरण्यानीं ससीतः सहलक्ष्मणः ।
बलाद्बुभुक्षुणोत्क्षिप्य जह्रे भीमेन रक्षसा ॥ २ ॥

निवृत्त इति । भरते निवृत्ते सति धीमान् बुद्धिमान् रामः । अत्र स्थिते मयि कदाचित् भरतः पुनरेष्यतीत्यवधारणात् तस्य धीमत्त्वमिति भावः । अत्रेर्महर्षेस्तपोवनं प्रपेदे गतः । तस्मिन् अत्रितपोवने पूजितः पाद्यार्घ्यादिभिरर्चितः सन् दण्डकारण्यमीयिवान् प्राप । इण धातोः क्वसुः । पुरा किल इक्ष्वाकुपुत्रो दण्डाख्यो राजा विन्ध्याद्रिशृङ्गद्वयमध्ये निवसति स्म । स कदाचित् भार्गवदुहितरं विरजां धर्षयमाणो मुनिना भिशप्तः सभृत्यबलवाहनं विनाशं गतः । ततो देवराजेन पांशुवर्षणं कृत्वा तस्य राज्यं शतयोजनं यावत् अरण्याकीर्णमकारि । तत्र दण्डकारण्यमिति लोके प्रसिद्धम् (१) ॥ १ ॥

अटाव्येति । अरण्यानीं महारण्यं अटाव्यमानः पुनः पुनः

---

1 The actual position of the Dandakaranya is between the Narmada and Godavari rivers. This forest in the time of Ramachandra was celebrated as a place of pilgrimage.

अवाक्शिरसमुत्पादं कृतान्तेनापि दुर्दमम्।
भंक्त्वा भुजौ विराधाख्यं तं तौ भुवि निचख्नतुः ॥३॥
आंह्रिपातां रघुव्याघ्रौ शरभङ्गाश्रमं ततः।
अध्यासितां श्रिया ब्राह्म्या शरण्यं शरणैषिणाम् ॥४॥

अत्यर्थं वा अटन् भ्राम्यन्। अटतेर्यङ् ततः कर्त्तरि शानच्। ससीतः सहलक्ष्मणः सीतालक्ष्मणाभ्याम् सहितः। सहशब्दस्य समासे वैकल्पिकः सादेशः। रामः बुभुक्षुणा भोक्तुमिच्छुना भीमेन रक्षसा केनचित् राक्षसेन विराधेन बलात् तरसा उत्क्षिप्य ऊर्द्ध्वमुत्थाप्य जह्रे हृतः गृहीतः हृधातोः कर्म्मणि लिट्। तान् भक्षयितुं हस्ताभ्यां गृहीत्वा उत्क्षिप्तवानित्यर्थः॥ २ ॥

अवागिति। तौ रामलक्ष्मणौ तस्य भुजौ भंक्त्वा मोटयित्वा कृतान्तेनापि दुर्दमं दुःखेन दमनीयं विराध इति आख्या यस्य तं तथोक्तं तं राक्षसं अवाक्शिरसं अधोमस्तकं उत्पादं ऊर्द्ध्वगतपादं कृत्वा भुवि निचख्नतुः निखातवन्तौ। तं भग्नभुजमधोमस्तकमूर्द्ध्वपादं कृत्वा भूगर्भे निहितवन्तौ इत्यर्थः। तुम्बुरुनामा गन्धर्व्वो वैश्रवणशापात् राक्षसयोनिं प्राप्तः नाम्ना विराधो भूत्वा दण्डकारण्ये विचचार इति पुराणवार्त्ता॥ ३ ॥

आंह्रिपातामिति। ततो विराधवधानन्तरं रघुव्याघ्रौ रघूणां मध्ये श्रेष्ठौ तौ ब्राह्म्या ब्रह्मसम्बन्धिन्या तपोजनितया इत्यर्थः। "वेदस्तत्त्वं तपोब्रह्म" इत्यमरः। श्रिया लक्ष्म्या अध्यासितं अधिष्ठितं अतएव शरणं त्राणं एषितुं शीलं येषां तेषां शरणैषिणां जनानां शरणे अवस्थाने साधु शरण्यम्।

पुरो रामस्य जुहवाञ्चकार ज्वलने वपुः।
शरभङ्गः प्रदिश्यारात् सुतीक्ष्णमुनिकेतनम्॥ ५॥
यूयं समैष्यथेत्यस्मिन् आसिष्महि वयं वने।
दृष्टाःस्थ स्वस्ति वो यामः स्वपुण्यविजितां गतिम्॥६॥

"शरणं वधरक्षित्रोः शरणं रक्षणे गृहे" इति विश्वः। शरभङ्गाश्रमं शरभङ्गस्य मुनेराश्रमं आंहिषातां गतवन्तौ। अंहेर्लुङि रूपम्। तपोमहिम्ना तत्रागतानां हिंस्रेभ्यः किमपि भयं नासीत् इत्यर्थः॥ ४॥

पुर इति। शरभङ्गः आरात् समीपे। "आराद्दूरसमीपयोः" इत्यमरः। सुतीक्ष्णमुनिकेतनं सुतीक्ष्णस्य मुनेः केतन्ति निवसन्ति अत्र इति केतनं आश्रमं प्रदिश्य कथयित्वा तत्र वासमुपकल्पय इति उक्त्वेत्यर्थः। रामस्य पुरः अग्रतः ज्वलने अग्नौ वपुः शरीरं जुहवाञ्चकार हुतवान् निजदेहमग्निसात् चकारेत्यर्थः॥ ५॥

तत्र किमर्थमत्रावस्थानमिति चेदाह यूयमिति। यूयं समैष्यथ समागमिष्यथ इति हेतोः वयं अस्मिन् वने आसिष्महि स्थिताः। आसेर्लुङ्। वयमिति एकत्वेऽपि बहुत्वविवक्षा। अधुना यूयं दृष्टाः साक्षात्कृताः स्थ वः युष्मभ्यं स्वस्ति। वयं स्वपुण्यविजितां स्वपुण्येन विजितां लब्धां गतिं स्थानं ब्रह्मलोकमित्यर्थः। यामः व्रजामः। इति च प्रदिश्येति पूर्वेण सम्बन्धः। रामदर्शनावधौ भगवान् विष्णुरागमिष्यतीति एधिरं

तस्मिन् कृशानुसाद्भूते सुतीक्ष्णमुनिसन्निधौ।
उवास पर्णशालायां भ्रमन्ननिशमाश्रमान्॥ ७॥
वनेषु वासतेयेषु निवसन् पर्णसंस्तरः।
शय्योत्थायं मृगान् विध्यन् आतिथेयो विचक्रमे॥८॥
ऋग्यजुषमधीयानान् सामन्यांश्च समर्चयन्।

प्रतीक्ष्य तं त्वामधुना साक्षात्कृत्य कृतकृत्यो निजतपसार्जितां गतिं प्राप्नोमीति भावः॥ ६॥

तस्मिन्निति। तस्मिन् शरभङ्गे कृशानुसाद्भूते कार्त्स्न्येन दग्धीभूते सति। विभाषा साति: कार्त्स्न्ये इति सातिः। रामः सुतीक्ष्णमुनिसन्निधौ सुतीक्ष्णस्य मुनेः सन्निधौ समीपे पर्णशालायां उटजे उवास। वसेर्लिट्; किं कुर्वन्। अनिशं सदा आश्रमान् भ्रमन् मुनीनुपासितुं तत्रत्यान् आश्रमान् पर्यटन्नित्यर्थः। तत्र कृताधिवासस्य तदानीमियमेव वृत्तिरासीदिति भावः॥ ७॥

वनेष्विति। वसतौ साधुषु अनुकूलेषु वासतेयेषु वनेषु निवसन् वासं कुर्वन्। संस्तीर्य्यते इति संस्तरः शय्या पर्णानि संस्तरो यस्य स तथोक्तः। अतिथौ साधुः आतिथेयः रामः शय्योत्थायं शय्याया उत्थाय। उत्पूर्वात्तिष्ठतेर्णमुल्। मृगान् विध्यन् अतिथिसत्कारार्थं मृगयां कुर्वन्नित्यर्थः। विचक्रमे विचचार विहरतिस्मेत्यर्थः॥ ८॥

ऋग्यजुषमिति। होमोऽस्य विद्यते असौ होमवान् कृता-

तस्मिन् कृशानुसाद्भूते सुतीक्ष्णमुनिसन्निधौ।
उवास पर्णशालायां भ्रमन्ननिशमाश्रमान् ॥ ७ ॥
वनेषु वासतेयेषु निवसन् पर्णसंस्तरः।
शय्योत्थायं मृगान् विध्यन् आतिथेयो विचक्रमे ॥८॥
ऋग्यजुषमधीयानान् सामन्यांश्च समर्चयन्।

प्रतीक्ष्य त्वां त्वामधुना साक्षात्कृत्य कृतकृत्यो निजतपसार्जितां गतिं प्राप्नोमीति भावः ॥ ६ ॥

तस्मिन्निति। तस्मिन् शरभङ्गे कृशानुसाद्भूते कार्त्स्न्येन दग्धीभूते सति। विभाषा साति: कार्त्स्न्ये इति साति:। रामः सुतीक्ष्णमुनिसन्निधौ सुतीक्ष्णस्य मुनेः सन्निधौ समीपे पर्णशालायां उटजे उवास। वसेर्लिट्, किं कुर्वन्। अनिशं सदा आश्रमान् भ्रमन् मुनीनुपासितुं तत्रत्यान् आश्रमान् पर्यटन्नित्यर्थः। तत्र कृताधिवासस्य तदानीमियमेव वृत्तिरासीदिति भावः ॥ ७ ॥

वनेष्विति। वसतौ साधुषु अनुकूलेषु वासतेयेषु वनेषु निवसन् वासं कुर्वन्। संस्तीर्य्यते इति संस्तरः शय्या पर्णानि संस्तरो यस्य स तथोक्तः। अतिथौ साधुः आतिथेयः रामः शय्योत्थायं शय्याया उत्थाय। उत्पूर्वात्तिष्ठतेर्णमुल्। मृगान् विध्यन् अतिथिसत्कारार्थं मृगयां कुर्वन्नित्यर्थः। विचक्रमे विचचार विहरतिस्मेत्यर्थः ॥ ८ ॥

ऋग्यजुषमिति। होमोऽस्य विद्यते असौ होमवान् कृता-

बुभुजे देवसात् कृत्वा शूलग्रमुख्यञ्च होमवान् ॥ ९ ॥
वसानस्तन्त्रकनिभे सर्व्वाङ्गीने तरुत्वचौ ।
काण्डीरःखाड्गीकः शार्ङ्गी रक्षन् विप्रांस्तनुत्रवान् ॥१०
छित्वाशितङ्गवीनानि फलैर्येष्वाशितम्भवम् ।

ग्निकार्य्यः स शूले उखायां स्थाल्याञ्च संस्कृतं शूल्यं उख्यं च मांसं देवसात् कृत्वा देवेभ्यो देयं कृत्वा दत्त्वेत्यर्थः । ऋक् च यजुश्च ऋग्यजुषम् । समाहारे टच् । ऋग्वेदं यजुर्वेदञ्च अधीयानान् द्विजान् तथा सामानि साधून् सामन्यान् च समर्चयन् । "देवद्रव्यं द्विजे दद्यात्" इति शासनात् तेन मांसेन वेदविद्ब्राह्मणान् भोजयन्नित्यर्थः बुभुजे भुक्तवान् । मृगयालब्धं मांसं अग्नावाहुतिदानेनादौ देवेभ्यो निवेद्य ततो ब्राह्मणान् भोजयित्वा तेषां भोजनावशिष्टं स्वयमभ्यवजहारेति तात्पर्य्यार्थः ॥९॥

वसान इति । तन्त्रात् अचिरापहृते तन्त्रके नववस्त्रे ताभ्यां निभा सादृश्यं ययोस्ते तन्त्रकनिभे । तन्त्रकञ्च नवाम्बरे इत्यमरः । सर्व्वाङ्गानि व्याप्नुवत्यौ सर्व्वाङ्गीने तरुत्वचौ वल्कले वसानः परिदधानः काण्डमस्यास्तीति काण्डीरः सबाणः । "काण्डोऽस्त्रीदण्डबाणार्व्ववर्गावसरवारिषु" इत्यमरः । खड्गेन युध्यते खाड्गिकः, शार्ङ्गी धृतधन्वा, तनुं त्रायते तनुत्रं तदस्यास्तीति तनुत्रवान् पिनद्धकवचः तथा विप्रान् रक्षन् राक्षसादिभ्यस्त्रायमाणः असौ रामः वनेषु आनश्च आत्मवानिति उत्तरश्लोकेन अन्वयः ॥ १० ॥

छित्वेति । पुनः पुनरतिशयेन वा दग्धिरा दन्दशूकाः ।

तेष्वसौ दन्दशूकारिर्वनेष्वानभ निर्भयः ॥१२॥ युग्मकं।
व्रातीनव्यालदीप्तास्त्रः सुत्वनः परिपूजयन्।
पर्षद्वलान्महाब्रह्मैराट नैकटिकाश्रमान् ॥ १२ ॥

दशतेर्यङन्ताटूकः। तेषां दन्दशूकानां राक्षसानां व्यालानां वा अरिः हत्वा निर्भयः भयशून्यः स आश्रितास्तृप्ता गावो येषु तेषां तृणप्रायत्वात् तानि आश्रितङ्गवीनानि। आश्रितगोशब्दात् ईनः। वनानि हित्वा त्यक्त्वा गोष्पदा तृणबाहुल्यात् तत्त्याग इतिभावः। येषु वनेषु फलैः आशितम्भवं तृप्ति भवति। आङ्पूर्व्वादश्नातेः तृप्त्यर्थकात् भावे क्तः ततः भूधातोर्भावे खच्। तेषु वनेषु आनभ पर्य्यटति स्म। अभ गत्यामिति धातोर्लिट् ॥ ११ ॥

व्रातीति। नानाजातीया अनियतवृत्तयः शरीरमायास्य ये जीवन्ति ते व्रातास्तेषां यत् कर्म्म तदपि व्रातं तेन जीवन्ति इति व्रातीनाः तेषां व्याला उपघातुकाः तेषु दीप्तास्त्रः ज्वलदायुधः। "व्यालं भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनि" इति विश्वः। सुन्वन्तीति, सुत्वानस्तान् सुत्वनः सोमपान्। सुनुतेः सयोत्पादनार्थकात् ङ्वनिप्। परिपूजयन् स रामः महान्तः ब्रह्माणः महाब्रह्मास्तैः करणैः। कुमहद्भ्यामन्यतरस्यामिति टच्। पर्षत् परिषत् अस्ति येषु ते पर्षद्वलास्तान् सभायुक्तान् महाब्राह्मणसमूहजुष्टानित्यर्थः। ग्रामस्यान्तिके क्रोशमात्रं त्यक्त्वा यतयो भिक्षवो ये निवसन्ति ते नैकटिकाः तेषां आश्रमान् आट गतवान। अटते लिंट्। जयमङ्गलस्तु पर्षद्वलान् सुत्वनः परिपूजयन् स महाब्रह्मैः सह आट इत्यन्वयं करोति। परिषद्-

परेद्यव्यद्यपूर्वेद्युरन्येद्युश्चापि चिन्तयन् ।
वृद्धिक्षयौ मुनीन्द्राणां प्रियम्भावुकतामगात् ॥१३॥
आतिष्ठद्गु जपन् सन्ध्यां प्रक्रान्तामायतीगवम् ।
प्रातस्तरां पतत्रिभ्यः प्रबुद्धः प्रणमन् रविम् ॥१४॥ युग्मकं ।

लानिति पाठे नवाक्षरपादस्यापीष्टत्वात् न च्छन्दोभङ्गदोषस्यावकाशः। "आस्थानं संसदास्थानी पर्यत्परिषदौ समे" इति रभसः ॥ १२ ॥

परेद्यवीति । रामः परेद्यवि परस्मिन् आगामिनि दिवसे इत्यर्थः। अद्य एतस्मिन् अहनि पूर्वेद्युः पूर्वस्मिन् अहनि अन्येद्युः अन्यस्मिन् अहनि चिरातिक्रान्ते चिरागामिनि च दिवसे इत्यर्थः। मुनीन्द्राणां वृद्धिक्षयौ धनशरीरादिगतोपचयापचयौ चिन्तयन् अनुध्यायन् सन् पूर्व्वं प्रियकार्य्येष्वनियुक्तत्वात् अतथाभूतः सन् प्रियो भवतीति प्रियम्भावुकः तस्य भावः तत्तां प्रियम्भावुकतां। अभूततद्भावे भुवः कर्त्तरि खुकञ्। अगात् प्राप। परेद्यव्यादयः शब्दा निपातिताः ॥ १३ ॥

आतिष्ठदिति। आयन्त्यः गावो अस्मिन् काले इति आयतीगवं प्रक्रान्तां आरब्धाम्। गावोऽपि गोचरात् गोष्ठमायान्ति दिवसस्यार्द्धनाड़िकावशेषे सन्ध्यापि तदैव प्रवर्त्तते। सम्यक् ध्यायन्ति यस्यां इति सन्ध्या तां व्याप्य। अत्यन्तसंयोगे द्वितीया। तिष्ठन्ति गावः दोहाय अस्मिन् काले इति तिष्ठद्गु तत्पर्य्यन्तं आतिष्ठद्गु। गावो हि रात्रिप्रथमयामस्य नाड़िकायां अतीतायां विश्रान्ताः सत्यः उत्थाय दुह्यन्ते। गवानयनकाला-

**ददृशे पर्णशालायां राक्षस्याभीकयाय सः ।**
**भार्य्योढं तमवज्ञाय तस्थे सौमित्रयेऽसकौ ॥ १५ ॥**

दारभ्य गोदोहकालं यावत् इत्यर्थः । जपन् सावित्रीमिति शेषः । पतत्रिभ्यः प्रातस्तरां अधिकप्रभाते तेभ्यः प्राक् इत्यर्थः प्रबुद्धः जागरितः । प्रातस्तरामित्यत्र प्रकर्षविवक्षायां तरप् । रविं प्रणमन् "नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे । जगत्सवित्रे शुचये सवित्रे कर्मदायिने" इति मन्त्रोच्चारणपूर्वकं नमस्कुर्वन् यदा चरतिस्म तदा प्रियभावुकताम् अगादिति पूर्वेण अन्वयः । आयतीगवतिष्ठद्गुशब्दौ काले अव्ययीभावे निपातितौ । जपन् सन्ध्यामित्यत्र प्रमाणं "प्रातःसन्ध्यां सनक्षत्रामुपासीत यथाविधि । सादित्यां पश्चिमां सन्ध्यामर्द्धास्तमितभास्कराम्" इति । अपिच "पूर्वां सन्ध्यां जपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् । पश्चिमां तु समासीनः सम्यगृक्षविभावनात्" इति ॥ १४ ॥

ददृश इति । सः रामः पर्णशालायां अभिकामयते इति अभीका निपातनात् साधु । तया अभीकया कामुक्या राक्षस्या शूर्पणखया ददृशे दृष्टः । अथ असकौ पापासौ निन्दिता असौ राक्षसी ऊढ़ा भार्य्या येन तं भार्य्योढ़म् सहभार्य्यं । आहिताग्न्यादिषु पाठात् परनिपातः । तं अवज्ञाय अनादृत्य सौमित्रये लक्ष्मणाय तस्थे स्वाभिप्रायमाविष्कृतवती । यस्मै दित्सेत्यादिना चतुर्थी । "प्रतिज्ञानिर्णयप्रकाशे" इति आत्मनेपदम् । असकौ इत्यत्र कुत्सायां अक् । यदुक्तं "कुपायां

दधाना वलिभं मध्यं कर्णजाहविलोचना ।
वाक्त्वचेनातिसर्व्वेण चन्द्रलेखेव पक्षती ॥ १६ ॥
सुपाद् द्विरदनासोरूस्तुपाणितलाङ्गुलिः ।
प्रथिमानं दधानेन जघनेन घनेन सा ॥ १७ ॥

निन्दनेऽप्राने नीतौ दानेन मानिते । प्रायोऽगस्त्यस्वरात् पूर्वः सर्व्वनामतिङव्ययात्" इति ॥ १५ ॥

त्रिभिः कलापकेन कामरूपिण्या राक्षस्या रूपं वर्णयति । दधानेति । सा तं प्रार्थयाञ्चक्रे इति वक्ष्यमाणेन सम्बन्धः । कीदृशी वलयोऽस्मिन् सन्तीति वलिभं मध्यं दधाना धारयन्ती, "तुन्दिवलिवटेर्भः" कर्णजाहं कर्णमूलसमीपमित्यर्थः । मूलार्थे कर्णात् जाहच् । कर्णजाहयोः विश्रान्ते लोचने यस्याः सा कर्णजाहविलोचना इति उपपदलोपी बहुव्रीहिः । अतिसर्वेण माधुर्य्यसौन्दर्य्याभ्यां सर्व्वमतिक्रान्तेन वाक् च त्वक् च वाक्त्वचं तेन उपलक्षिता । प्राण्यङ्गत्वात् द्वन्द्वैकवद्भावः समासान्तः टच् । पक्षती पक्षमूले प्रतिपदि चन्द्रलेखा इव स्थिता । प्रतिपच्चन्द्रोपमेयत्वात् सा नितरां तन्वङ्गी भासीदित्यर्थो लभ्यते ॥ १६ ॥

सुपादिति । शोभनौ पादौ यस्याः सा सुपात् । सङ्ख्यासुपूर्व्वस्येति पादान्तलोपः इप् प्रत्ययस्य वैकल्पिकत्वात् तदभावः । द्विरदनासा करिकर इव ऊरुर्यस्याः सा द्विरदनासोरूः । उपमानपूर्व्वादूरोरूङ् । तलच मृदुनिव तलाङ्गुलि । कर्म्मधारयः । मृदु पाणितलमाङ्गुलि यस्याः सा तथोक्ता । प्रथि-

उन्नसं दधती वक्त्रं शुद्धदल्लोलकुण्डलम्।
कुर्व्वाणा पश्यतः शंयून् स्रग्विणी सुहसानना॥१८॥
प्राप्य चञ्चूर्य्यमाणासौ पतीयन्ती रघूत्तमम्।
अनुका प्रार्थयाञ्चक्रे प्रियाकर्त्तुं प्रियम्वदा॥१९॥ युग्मकं।

मानं पृथुलं दधानेन पृथुना इत्यर्थः घनेन निविड़ेन जघनेन उपलक्षिता सा॥ १७॥

उन्नसमिति। उन्नता नासिका यस्मिन् तत् उन्नसम्। उपसर्गात् नसादेशः। शुद्धाः शुक्लाः दन्ता यस्मिन् तत् शुद्धदत्। अग्रान्त-शुद्धेत्यादिना दत्रादेशः। लोलकुण्डलं चञ्चलकुण्डलं वक्त्रं मुखम्। उच्यते अनेनेति वक्त्रं वक्त्रशब्दो मुखैकदेशे वर्त्तमानोऽपि कविभिः समुदाये प्रयुज्यते। दधती धारयन्ती स्रग्विणी मालावती सुहसं आननं यस्याः सा सुहसानना अतएव पश्यतो जनान् शंयून् सुखितान् कुर्वाणा। अस्त्यर्थे युः। यद्वा अपश्यत इति पदच्छेदे अपश्यतां जनानां सुखकरी पश्यतान्तु पीड़ाकरी मदनवेदनाजननादिति भावः॥ १८॥

प्राप्येति। पुनः पुनः गर्हितमाचरन्ती चञ्चूर्य्यमाणा। चरतेर्गर्हार्थे यङ्, ततः शानच्। भरतेनोक्तं गर्हितं पुनः पुनः चरन्तीति। पतीयन्ती आत्मनः पतिमिच्छन्ती अनुका कामुका प्रियम्वदा असौ राक्षसी रघूत्तमं लक्ष्मणं प्रियाकर्त्तुं अनुकूलयितुम्। आनुकूल्यार्थे डाच्। प्रार्थयाञ्चक्रे वक्ष्यमाणश्लोकेन स्वाभिलाषं विज्ञाप्य तत्पूरणायानुरुद्धवतीत्यर्थः अनुकेति निपातनात् साधु॥ १९॥

सौमित्रे मामुपायंस्थाः कन्नामिच्छुर्वशम्वदाम्।
सुभोगीनां सहचरीमशङ्कः पुरुषायुषम्॥ २०॥
तामुवाच स गौष्ठीने वने स्त्रीपुंसभीषणे।
असूर्य्यम्पश्यरूपा त्वं किमभीरुररार्य्यसे॥ २१॥

किं प्रार्थितवतीत्याकाङ्क्षायामाह सौमित्रे इति। हे सौमित्रे सुमित्रानन्दन त्वं अशङ्कः निर्विकल्पः तथा इच्छुः अभिलाषुकः सन् कन्नां कामयमानां वशम्वदां ते वश्याहमिति वदन्तीं सुभोगीनां सुभोगाय हिताम्। सुभोगात् ईनः। पुरुषस्य आयुः पुरुषायुषम्। निपातनात् साधु। पुरुषस्य आयुष्कालं व्याप्य यावज्जीवनमित्यर्थः सहचरीं अवैधव्यादियोगात् ते चिरसङ्गिनीं मां उपायंस्थाः परिणय। आशंसायां भूतवच्चेति लुङ्। "उपयमो विवाहे" इति आत्मनेपदम्। त्वद्भोगीनामिति पाठे भुज्यते अनेन अस्मिन् वेति भोगः शरीरं तव भोगाय हितां त्वद्भोगीनामित्यर्थः॥ २०॥

तामिति। स लक्ष्मणः तां उवाच। किमिति। गावस्तिष्ठन्ति अस्मिन् इति गोष्ठं भूतपूर्वं गोष्ठं गौष्ठीनं तस्मिन् गौष्ठीने। सम्प्रति गोसञ्चाराभावात् यत्र हिंस्रप्राणिसङ्कुलत्वमनुमीयते तस्मिन् इति भावः। अतः स्त्री च पुमान् च स्त्रीपुंसौ। निपातनात् साधु। तयोः भीषणे भयावहे वने। अति गोपनीयतया सूर्य्यमपि निमित्तदर्शनं न पश्यतीति असूर्य्यम्पश्यं रूपं यस्याः सा तथोक्ता। नञ्पूर्व्वात् सूर्य्योपपदात् पश्यतेः खश्। त्वं न बिभेतीति अभीरुः सती किं किमर्थं चरार्य्यसे भृशर्थं

मानुषानभिलष्यन्ती रोचिष्णुर्दिव्यधर्म्मिणी।
त्वमप्सरायमाणा इह स्वतन्त्रा कथमञ्चसि ॥ २२ ॥
उग्रम्पश्याकुलेऽरण्ये शालीनत्वविवर्ज्जिता।
कामुकप्रार्थनापट्वी पतिवत्नी कथन्नवा ॥ २३ ॥

भ्रमसि। अर्त्तेर्गत्यर्थात् यङ्। भीरुशब्दस्य क्रियावाचिनो मनुष्यजातिबोधकत्वाभावादूप् न भवति। तथाच अमानुषीयमिति भङ्ग्या प्रदर्शितमित्यनुसन्धेयम् ॥ २१ ॥

मानुषानिति। मनोरपत्यानि मानुषास्तान् अभिलषन्ती कामयन्ती तैः सह रन्तुमिच्छन्तीत्यर्थः। रोचिष्णुः दीप्तिमती ज्वलदलङ्कारादिभिरुद्भासमाना इत्यर्थः। दिवि भवा दिव्याः देवयोनित्वात् राक्षसाः इत्यर्थः तेषां धर्म्मः अस्त्यस्याः दिव्यधर्म्मिणी। अतएव अप्सरायमाणा अप्सरा इव आचरन्ती राक्षसभावं गोप्तुमिति भावः। त्वं इह वने स्वः आत्मा तन्त्रः प्रधानं यस्याः सा स्वतन्त्रा सती। "तन्त्रः कुटुम्बे कृत्ये स्यात् कारणेऽपि परिच्छदे शास्त्रे प्रधाने सिद्धान्ते तन्तुवाये गदोत्तमे" इति विश्वः। कथं अञ्चसि भ्रमसि। स्वतन्त्रभ्रमणात् सा स्वैरिणीति सूच्यते ॥ २२ ॥

उग्रमित्यादि। उग्रं पश्यन्ति ये तैरुग्रम्पश्याः सिंहव्याघ्रादयः पापाशयत्वात् शबरादयो वा तैराकुले व्याप्ते अरण्ये। उग्रोपपदात् दृशेः खश्। शालां प्रवेष्टुमर्हन्ति शालीना अधृष्टा तस्या भावः शालीनत्वं स्त्रीस्वभावसुलभा लज्जा तेन विवर्ज्जिता निर्लज्जा इत्यर्थः। तथा कामुकस्य या प्रार्थना तस्यां पट्वी,

राघवं पर्णशालायामिच्छानुरहसं पतिम् ।
यः स्वामी मम कान्तावानौपकर्णिकलोचनः ॥२४॥
वपुश्चान्दनिकं यस्य कार्णवेष्टनिकं मुखम् ।
संग्रामे सर्व्वकर्म्मीणौ पाणी यस्यौपजानुकौ ॥२५॥

निपुणा एव पतिरस्या अस्तीति पतिवत्नी जीवद्भर्तृका । मतुपो-मत्वं निपातनात् साधु । क्वथं वा कथमपि न भवसीति शेषः । पतिसत्त्वे ईदृक् स्यातव्यस्यासम्भवादिति भावः ॥ २३ ॥

राघवमिति । पर्णशालायां पुरोवर्त्तिनि उटजे स्थितमिति शेषः । अनुगतं रहः विजनस्थानं येन स अनुरहसस्तं एकान्ते स्थितं अतस्त्वदुपसर्पणयोग्यमित्यर्थः । अनुपूर्व्वात् रहस अच् । राघवं पतिं इच्छ पतित्वेन वृणु इत्यर्थः । यो राघवः मम स्वामी प्रभुः अतः सति तस्मिन् मद्वरणमयुक्तमिति भावः । कान्तावान् कान्तां प्रति समुचिताचरणाभिज्ञ इत्यर्थः अहन्तु तपस्वीति ध्वनिः । कर्णयोः समीपं उपकर्णं तत्र भवः औप-कर्णिकः साद्दश्ये लोचने यस्य स तथोक्तः कर्णायतलोचन इत्यर्थः । अनेन तस्य रूपमत्त्वं दर्शितम् ॥ २४ ॥

वपुरिति । यस्य राघवस्य वपुः शरीरं चान्दनिकं चन्दनेन अनुलिप्तं, मुखं कार्णवेष्टनिकं कर्णवेष्टनाभ्यां कुण्डलाभ्यां राजि-तम् । एतेन तस्य विलासित्वं दर्शितम् । यस्य पाणी संग्रामे सर्व्वकर्म्मीणौ सर्व्वकर्म्मसु छेदनभेदनादिषु असिशायकादि-धारणेषु व्यापारेषु कुशलौ तथा औपजानुकौ आजानुलम्बितौ । एतत् इयच तस्य वीरत्वं महापुरुषत्वञ्च सूचयति ॥ २५ ॥

वद्धो दुर्बलरक्षार्थमसिर्यैनौपनीविकः।
यश्चापमाश्मनप्रख्यं सेषुः धत्तेऽन्यदुर्वहम् ॥ २६ ॥
जेता यज्ञद्रुहां संख्ये धर्म्मसन्तानसूर्वने।
प्राप्य दारगवानां यं मुनीनामभयं सदा ॥ २७ ॥

वद्ध इति। येन, रामेण दुर्बलरक्षार्थं दुर्बलानां रक्षार्थं नीवीसमीपे प्रायेण भवतीति, औपनीविकः वामपार्श्वादधःस्थायीत्यर्थः। स्त्रीकटी वस्त्रबन्धेऽपि नीवी मूलधनेऽपि च" इति अभिधानात्, यद्यपि नीवीपदं स्त्रीकटिबन्धपरं, तथापि लक्षणयात्र पुंकटिबन्धस्याप्युपलक्षणम्। यश्च अन्यदुर्वहं अन्येन रामादन्येन दुःखेन उह्यते यत् तथोक्तं अश्मनो विकारः आश्मनः तेन प्रख्यां साहस्य यस्य तत् तथोक्तं प्रस्तरघटितवत् दृढ़ं सेषुं सवाणं चापं धत्ते धारयति। अतः शूरोऽयं परत्राणपरायण इति भावः॥ २६ ॥

जेतेति। यः संख्ये युद्धे यज्ञाय द्रुह्यन्ति यज्ञद्रुहः तेषां जेता। कृद्योगात् कर्म्मणि षष्ठी। तथा धर्म्मस्य सन्तानं अनुबन्धं अविच्छिन्नभावमिति यावत् सूते जनयति साधयतीति यावत् यः स धर्म्मसन्तानसूः वर्णाश्रमधर्मपालननिरतः इत्यर्थः। वने यं प्राप्य मुनीनां दाराश्च गावश्च दारगवानि तेषाम्। निपातनात् साधु। सदा अभयं भयाभावः भवतीति शेषः। येषामेव प्राप्तिक्रिया तेषामेवाभयमिति समानकर्त्तृकत्वम्। यस्मादभयं प्राप्य मुनयः पत्नीभिः सह गार्हस्थधर्म्ममनुपालयन्तः अग्निहोत्रादिकं निर्विघ्नमाचरन्ति, यस्य च शासनादि-

ततो वाह्लयमानासौ रामशालां न्यविच्चत ।
मामुपायंस्त रामेति वदन्ती सादरं वचः ॥ २८ ॥
अस्त्रीकोऽसावहं स्त्रीमान् स पुष्यतितरां तव ।
पतिरित्यब्रवीद्रामस्तमेव व्रज मा मुचः ॥ २९ ॥
लक्ष्मणं सा वृषस्यन्ती महोक्षं गौरिवागमत् ।
मन्मथायुधसम्पातव्यथमानमतिः पुनः ॥३०॥

दानीं यातुधानाः तेषां पत्नीभ्यो नाभिद्रुह्यन्ति, नापि श्वापदाः गा हिंसन्तीति तात्पर्य्यार्थः ॥ २७ ॥

तत इति । ततो लक्ष्मणवचनानन्तरं वाह्लयमाना रामं ह्वयाना, वाह्लृ वरणे इति धातोर्दैवादिकात् कर्त्तरि शानच् । अतएव हे राम मां उपायंस्त परिणयतु भवान् इति वचः सादरं सवहुमानं वदन्ती असौ रामशालां रामस्य उटजं न्यविच्चत प्रविष्टा । निपूर्व्वात् विशतेर्लुङ् । उपायंस्त इत्यत्र आशंसायां भूतवच्चेति लुङ् ॥ २८ ॥

अस्त्रीति । असौ लक्ष्मणः अस्त्रीकः अस्त्रीसहायः । नद्यृतश्चेति कप् । अहं स्त्रीमान् उत्तमस्त्रीसहायः । प्रशंसायां मतुप् । स तव पतिर्भूत्वा पुष्यतितरां त्वामत्यर्थं पोषयिष्यतीत्यर्थः । वर्त्तमानसामीप्ये वर्त्तमानवद्वेति लट्, अद्रव्यप्रकर्षात् च तराम् । तं एव व्रज गच्छ, मा मुचः मा त्याक्षीः । मुचतेर्लुङ्लृदित्वादङ् । इति रामः अब्रवीत् उवाच ॥ २९ ॥

लक्ष्मणमिति । इयं लक्ष्मणमिच्छन्ती वृषस्यन्ती कामुकी ।

तस्याः सासूयमानाया लोलूयावान्रघूत्तमः।
असिं कौचेयमुद्यम्य चकारापनसं मुखम्॥२१॥
अहं सूर्पणखा नाम्ना नूनं नाज्ञायिषि त्वया।
दण्डोऽयं चैत्रियो येन मय्यपातीति साब्रवीत्॥२२॥

वृषस्यन्त्यश्वात् क्यच् ततः शतृः। आयुध्यन्ते एभिरायुधानि घञर्थे कविधानम्। मन्मथस्य आयुधानां सम्पातेन प्रहारेण व्यथ्यमाना पीड्यमाना मतिर्यस्याः सा तथोक्ता, स्मरार्दितेत्यर्थः सा वृषस्यन्ती गौः महान् उचा महोचस्तमिव। समासान्तष्टच्। पुनः लक्ष्मणं अगमत् प्राप॥ ३०॥

तस्या इति। लोलूया अत्यर्थं लवनं तदस्यास्तीति लोलुयावान् लुनातेर्यङि कृते अप्रत्ययस्ततः स्त्रियामाप् मतुश्च। रघूत्तमः लक्ष्मणः कुची कोपे भवं विद्यमानं कौचेयं असिं उद्यम्य कोषात् उत्क्षिप्य सासूयमानायाः समीपे गर्हितं सीदन्त्या उपविशन्त्याः तस्या मुखं अपगता नासिका यस्मात् तत् तथोक्तं चकार। उपसर्गाच्च इति अच् नासिका च नसादेशमापद्यते। सासूयमानाया इत्यत्र गत्यर्थात् गर्हायां यङ् विधानात् यङ् ततः शानच्॥ २१॥

अहमिति। त्वया नूनं निश्चितं अहं सूर्पणखा इति नाम्ना न अज्ञायिषि न ज्ञातास्मि। कर्मणि लुङ्। येन हेतुना चैत्रे परचैत्रे जन्मान्तरशरीरे चिकित्स्य इति चैत्रियः एतज्जन्मनि नासाया अनुत्पत्त्या शरीरान्तरे एव तत्सम्भवात् उक्तं चैत्रिय इति। अयं दण्डः नासाच्छेदलक्षणः मयि अपाति पातितः।

पर्य्यशाप्सीद्दिविष्ठासौ संदर्श्य भयदं वपुः।
अपिस्फवच्च बन्धूनां निनंक्षुर्विक्रमं मुहुः॥३३॥
खरदूषणयोर्भ्रात्रोः पर्य्यदेविष्ट सा पुरः।
विजिग्राहयिषू रामं दण्डकारण्यवासिनोः॥ ३४॥

माते: कर्म्मणि लुङ्। इति सा अब्रवीत्। मत्स्वरूपाज्ञाना देव त्वयेदममतिविधेयदण्डधारणे साहस क्रतमिति भावः॥३२॥

पर्य्यशाप्सीदिति। असौ सूर्पणखा दिवि तिष्ठतीति दिविष्ठा सती। तत्पुरुषे कृतिबहुलमिति सप्तम्या अलुक्। भयदं वपुः संदर्श्य भीषणं शरीरं धारयित्वा लक्ष्मणं भीषयितु मिच्छुरित्यर्थः। संपूर्वात् पश्यतेः णिचि क्त्वे ल्यप्। पर्य्यशा प्सीत् आक्रुष्टवती। तथा नष्टुं अन्तर्द्धातुमिच्छुः निनंक्षुः सा बन्धूनां खरदूषणादीनां विक्रमं बलं मुहुः पुनः पुनः अपिस्फवत् स्फीतीचकार विवर्द्ध कथयामास इत्यर्थः। स्फायतेर्णिजन्तात् लुङ्। अपिस्फरदिति पाठे प्रकाशितवतीत्यर्थः॥ ३२॥

खरेति। रामं विजिग्राहयिषु खरादिभिः योधयितु मिच्छुः। विपूर्वात् ग्रहेर्णिजन्तात् सन् तत उः। सा दण्ड कारण्यवासिनोः दण्डकान्तर्वर्त्तिनो जनस्थानस्य रावनाधि कृतजनपदस्य रक्षणे नियुक्तयोरित्यर्थः। भ्रात्रोः खरदूषणयोः पुरः अग्रतः पर्य्यदेविष्ट परिदेवन कृतवती। परिपूर्वात् देवृ देवने इत्यर्थात् धातोर्लुङ्॥ ३४॥

कृते सौभागिनेयस्य भरतस्य विवासितौ।
पित्रा दौर्भागिनेयौ यौ पश्यतं चेष्टितं तयोः ॥३५॥
मम रावणनाथाया भगिन्या युवयोः पुनः।
अयं तापसकाद्ध्वंसः क्षमध्वं यदि वः क्षमम् ॥ ३६ ॥

कृते इति। सुभगायाः पतिबहुमतायाः कैकेय्याः अपत्यं पुमान् सौभागिनेयः तस्य भरतस्य कृते कार्य्यनिमित्तं दुर्भगे पतितिरस्कृते कौशल्यासुमित्रे तयोरपत्ये पुमांसौ दौर्भागिनेयौ यौ रामलक्ष्मणौ पित्रा दशरथेन विवासितौ राष्ट्रात् निराकृत्य निष्कासितौ। तयोः चेष्टितं मन्नासाच्छेदनरूपं कार्य्यं पश्यतं युवां प्रेक्षेथाम्। सौभागिनेय-दौर्भागिनेय-शब्दयोरुभयपद-वृद्धिः ॥ ३५ ॥

ममेति। रावणो नाथः प्रभुर्यस्याः तादृश्याः युवयोर्भगिन्याः मम पुनः मम तु अयं तापसकात् कुतापसात्। कुत्सायां कन्। ध्वंसः नासिकाविनाशः वो युष्माकं गुरूणामित्यर्थः। युष्मदि गुरावेकेषामिति बहुवचनं तयोर्ज्यैष्ठ्यादित्यनुसन्धेयम्। यदि क्षमं सन्तु योग्यम्। तर्हि क्षमध्वं उपेक्षध्वं रावण एव शास्तीति भावः। क्षममिति क्षमायोग्यं सामान्यतः प्रयुक्तम्। शक्ते योग्ये हिते क्षममिति कोषात्। क्षममव्ययमित्यन्ये। पुनरित्यत्र पुर इति पाठे भगिन्या मम युवयोः पुरः अयं तापसकात् ध्वंस इत्यन्वयः कर्त्तव्यः ॥ २६ ॥

असंस्कृत्रिमसंव्यानावनुप्तिमफलाशिनौ।
अकृत्रिमपरीवारौ पर्य्यभूतां तथापि माम् ॥३७॥
श्वःश्रेयसमवाप्तासि भ्रातृभ्यां प्रत्यभाणि सा।
प्राणिवस्तवमानार्थं व्रजाश्वसिहि मारुतः ॥३८॥

असंस्कृत्रिमेति। संस्कारेण तन्त्वादीनां विन्यासेन वपनेन भरणेन च निर्वृत्तं संस्कृत्रिमं तन्न भवतीति असंस्कृत्रिमं संव्यानं उत्तरीयं ययोः तथोक्तौ वल्कलवाससौ इत्यर्थः। वपनेन निर्वृत्तानि न भवन्तीति अनुप्त्रिमानि अयत्नलभ्यानि फलानि अशितुं भोक्तुं शीलं ययोः तौ तथोक्तौ। अकृत्रिमः भरणेन न निर्वृत्तः परीवारः अनुजीविलोको ययोः तौ अकृत्रिमपरीवारौ, मृगपरिजनौ इत्यर्थः। परिव्रियते अनेनेति परीवारः मृगाणाममनुष्यत्वात् "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इति दीर्घः। तौ यद्यपि ईदृशौ, तथापि मां पर्य्यभूतां परिभूतवन्तौ, नासिकाच्छेदनेन विमानयामासतुरित्यर्थः॥ ३७॥

श्व इति। श्वःशब्दः प्रशंसामाह शोभनं श्रेय इति वाक्ये श्वः श्रेयसं निपातनात् साधु। अवाप्तासि प्राप्स्यसि। भविष्यदनद्यतने लुट्। इति सा भ्रातृभ्यां प्रत्यभाणि प्रत्युक्ता। अचिरेणैव तव रिपुं हत्वा त्वां सम्मङ्गलभाजं करिष्याव इति तस्यै प्रत्युत्तरं दत्तमिति भावः। तव मानार्थं तव मानखण्डनं माभूदिति हेतोः प्राणिवः जीवावः। तव मानत्राणमेवावयोर्जीवितस्य प्रयोजनमित्यर्थः। अतः व्रज स्वस्थानं गच्छ, आश्व-

जक्षिमोऽनपराधेऽपि नरान्नक्तन्दिवं वयम् ।
कुतस्त्यं भीरु यत्तेभ्यो द्रुह्यद्भ्योऽपि क्षमामहे ॥३९॥
तौ चतुर्दशसाहस्रबलौ निर्ययतुस्ततः ।
पारश्वधिकधानुष्कशाक्तीकप्रासिकान्वितौ ॥४०॥

सिहि घैमनस्यं विजहीहि, मारुदः मारोदीः रोदनं त्यज । माङ्योगात् रोदितेर्लुङ्, पत्ते ङः ॥ ३८ ॥

क्षमध्वं यदि वः क्षममिति यत् उक्तं तत्रोत्तरमाह जक्षिम इति। वयम्। लिटोऽति बहुलनिर्देशः अन्यराचसयोगादित्वनुस-न्धेयम् । नक्तञ्च दिवाच नक्तन्दिवम् । निपातनात् साधु । अन-पराधे दोषाभावेऽपि नरान् जक्षिमः भक्षयामः । रुदादित्वात् इट् । अतः हे भीरु भयशीले । भयशीलत्वं खलु तव यत्नु-क्तपरिभवेऽप्यावयोरौदासीन्याशङ्कया प्रकटितम् । द्रुह्यद्भ्यो द्रोहं कुर्वद्भ्योऽपि तेभ्यः नरेभ्यः क्षमामहे मर्षयामः इति यत् तत् कुतस्त्यं कुतआगतं अमूलकमित्यर्थः । कुतः इति तसन्तात् भवार्थे त्यः। तेभ्य इत्यत्र यदभिप्रेत्य धात्वर्थः तत्र चतुर्थीविधा-नात् चतुर्थी । भीरु इत्यत्र सम्बुद्धौ गुणो न भवति संज्ञापूर्वकी विधिरनित्य इति नियमात् । भरतस्त्वाह "तन्वादीनां" इति पक्षे ऊङ् ततः ह्रस्वकरणात् न गुणः ॥ ३९ ॥

ताविति । ततः प्रतिवचनान्तरं चतुर्दशसहस्राणि परि-माणं अस्य चतुर्दशसाहस्रं :तादृशं बलं ययोः तौ तथोक्तौ। उत्तरपदवृद्धिः । परश्वधैर्युध्यन्ते पारश्वधिकाः, धनुर्भिर्युध्यन्ते

अथ सम्पततो भीमान् विशिखैरामलक्ष्मणौ।
बहुमूर्द्धो द्विमूर्द्धांश्च त्रिमूर्द्धांश्चाहतां मृधे ॥ ४१ ॥
तैर्वृक्णरुग्णसंभुग्नक्षुण्णभिन्नविपन्नकैः।
निमग्नोद्विग्नसंक्षीणैः पप्रे दीनैश्च मेदिनी ॥ ४२॥

धानुष्काः,शक्तिभिर्युध्यन्ते शाक्तीकाः,प्रासैः कुन्तैर्युध्यन्ते प्रासिकाः। एतेषां समाहारः पारश्वधिकधानुष्कशाक्तीकप्रासिकम्। सेनाङ्गत्वात् द्वन्द्वैकवद्भावः। तेन अन्वितौ अनुगतौ तौ निर्ययतुः संग्रामार्थं निर्गतौ ॥ ४० ॥

अथेति। अथ रामलक्ष्मणौ मृधे युद्धे विशिखैः शरैः बहवः मूर्द्धानो येषां ते बहुमूर्द्धानस्तान् द्वौ मूर्द्धानौ येषां तान् द्विमूर्द्धान् च तथा त्रयः मूर्द्धानः येषां तान् त्रिमूर्द्धान् च अतः भीमान् भयङ्करान् सम्पततः आक्रमणार्थमभिमुखमागच्छतः राक्षसान्। विशेषणोपादानात् विशेष्यप्रतिपत्तिः प्रकृतत्वात्। अहतां हतवन्तौ। हन्तेर्लङ्। "द्वित्रिभ्यां ष मूर्ध्नः" इति समासान्तः षप्रत्ययः ॥ ४१ ॥

तैरिति। वृक्णाः छिन्ना शरैः क्तः। रुग्णा भग्नहस्तपादाः। संभुग्नाः सम्यक् वक्रीकृताः शस्त्राघातात् न्युब्जीकृता इत्यर्थः, भुज कौटिल्ये इति धातोस्तौदादिकात् क्तः। क्षुण्णाः संपिष्टदेहाः, क्षुदिर संपेषणे इति धातोरौधादिकात् क्तः। भिन्नाः विदारिताः। विपन्नकाः नष्टा अनुकम्पायां कन्। विपन्नका मृताः,विपूर्व्वपदिर्मरणे वर्त्तते, स्वार्थे कुत्सायां वा कः इति भरतसेनोक्तम्। तैः

केचिद्विपथुमासेदुरन्ये दवथुमुत्तमम्।
सरक्तं वमथुं केचिद्भ्राजथुं न च केचन ॥ ४३ ॥
मृगयुमिव मृगोऽथ दक्षिणेर्मा
दिशमिव दाहवतीं मरावुदन्यन्।

वृक्णरुग्णसंभुग्नचुत्तभिन्नविपन्नकैः। तथा निमग्नाः परिभूताः। भीत्या गुप्ता रुधिरप्रवाहे मग्ना वा इति भरतः। उद्विग्नाः भीताः। संक्षीणाः वयसपीड्यां दशां प्राप्ता इति लज्जिताः। तैः निमग्नोद्विग्नसंक्षीणैः। दीनैः हा तात हा भ्रातरित्येवं भाषमाणैः। सुतादिदुःखान्वितैरिति भरतः। तैः राक्षसैः मेदिनी पप्रे पूरिता। प्रापूरणे पूलिपूर्त्तौ वेतिधातोः कर्म्मणि लिट। ते राक्षसा बहुधा निपीड़िता म्रियो मेजिरे, केचिच निहता भग्नमाहता वा रणभूमिमलङ्कुरित्यर्थः ॥ ४२ ॥

केचिदिति। तेषां मध्ये केचित् वेपथुं कम्पं आसेदुः प्रापुः। अन्ये उत्तमं महान्तं दवथुं उपतापं आसेदुः। केचित् सरक्तं सशोणितं वमथुं छर्द्दनं आसेदुः शोणितं उद्गिरन्ति स्म। केचन च भ्राजथुं दीप्तिं शोभां न आसेदुः। सर्व्व एव राक्षसाः परिभवदुःखाभिभूता म्लानिमुपयन्नित्यर्थः ॥ ४३ ॥

मृगयुमिति। अथ राक्षसपराभवानन्तरं त्रिमूर्द्धा त्रिशिरा नाम कश्चित् निशाचरः रघुतनयं रामं उपाययौ अभ्यधावत्। कः कमिव। दक्षिणे ईर्म्मं व्रणं यस्य स दक्षिणेर्म्मा "लुब्धयोगे" इत्यनिच्। "व्रणोऽस्त्रियामीर्म्ममरुः" इत्यमरः। व्याधेन

रघुतनयमुपाययौ त्रिमूर्द्धा
विषभृदिवोग्रमुखं पतत्त्रिराजम् ॥ ४४ ॥
शितविशिखनिकृत्तकृत्स्नवक्त्रः
क्षितिभृदिव क्षितिकम्पकीर्णशृङ्गः ।

त्रषितदक्षिणाङ्गः मृगः, मृगं याति यः स मृगयुः औणादिकः कुप्रत्ययः। तमिव। उदन्यन् उदकं पातुमिच्छन् जनः। उदकात् क्यचि उदनादेशः, ततः शतृप्रत्ययः। मरौ निर्जले देशे दाहवतीं दावाग्नियुतां दिशं इव। तथा विषभृत् आशीविषः उग्रमुखं भीषणतुण्डं पतत्त्रिराजं खगपतिं गरुड़मिव। त्रषितमृगादिभिरुपमानसामर्थ्यात् रामसन्निधानाभिगमनेन त्रिशिरसो मरणमवश्यम्भावीति सूचितम्। पुष्पिताग्रावृत्तमिदं यदुक्तं "अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति ॥ ४४ ॥

शितेति। शितैः तीक्ष्णैः विशिखैर्बाणैः निकृत्तानि छिन्नानि कृत्स्नानि वक्त्राणि यस्य स तथोक्तः, अखिलस्य समस्तस्य कुलस्य वंशः कुलस्य क्षये यत् पूर्वलिङ्गं पूर्वचिह्नं भाविक्षयसूचक उत्पातविशेषस्तद्रूपः स त्रिशिराः क्षितिकम्पेन भूमिकम्पेन कीर्णानि विक्षिप्तानि शृङ्गाणि यस्य स क्षितिभृत् पर्वत इव। ईदृक् पर्वतोऽपि अखिलस्य सर्वस्य कुलस्य लोकसमूहस्य क्षये

भयमुपनिदधे स राक्षसानाम्
अखिलकुलक्षयपूर्वलिङ्गतुल्यः ॥ ४५ ॥

इति श्रीभट्टिकाव्ये चतुर्थः सर्गः।

पूर्वलिङ्गं भवति इत्यनुसन्धेयम्। राक्षसानां भयं उपनिदधे जनयामास इत्यर्थः। वृत्तश्चेदं पूर्ववत् ॥ ४५ ॥

इति श्रीभट्टिटीकायां चतुर्थः सर्गः।

# पञ्चमः सर्गः ।

निराकरिष्णू वर्त्तिष्णू वर्द्धिष्णू परितोरणम् ।
उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ ॥ १ ॥
तौ खड्गमुषलप्रासचक्रवाणगदाकरौ ।
अकार्ष्टामायुधच्छायं रजःसन्तमसे रणे ॥ २ ॥

निराकरिष्णू इति । निराकरिष्णू शत्रुनिराकरणशीलौ, वर्त्तिष्णू प्रतियोधाभिमुखं वर्त्तनशीलौ, वर्द्धिष्णू मायया महाप्राणोद्भावनशीलौ, उत्पतिष्णू आकाशोत्पतनशीलौ, सहिष्णू शस्त्रप्रहारसहनशीलौ च खरदूषणौ तन्नामानौ रावणभ्रातरौ रणं परितः रणभूमेः समन्तात् चेरतुः,भ्रमतुः। तसन्तपरियोगात् द्वितीया । अत्र सर्वत्र शीलार्थे इष्णुच्प्रत्ययः ॥ १ ॥

ताविति । खड्गश्च, मुषलश्च प्रासश्च चक्रञ्च वाणश्च गदा च ताः करे ययोस्तौ तथोक्तौ । जातिरप्राणिनामित्यनेन द्वन्द्वैकवद्भावे तु "वाणगदकरौ" इत्येवं स्यात् अतः खड्गमुषलप्रासचक्रवाणैः सहिता गदा करे ययोरिति शाकपार्थिवादित्वात् समास इति जयमङ्गलेन व्याख्यातम् । तादृशौ खरदूषणौ रजसा सम्यक् तमः यस्मिन्निति रजःसन्तमसे । सम्पूर्वात्तमसः समासान्तोऽच्प्रत्ययः । रणे रणाङ्गने आयुधानां छाया आयुधच्छायं । "नित्यं छायाबाहुल्ये" इति नपुंसकत्वे ह्रस्वत्वम् । अकार्ष्टां कृतवन्तौ कृञो लुङ् ॥ २ ॥

अथ तीक्ष्णायसैर्वाणैरधिमर्म्म रघूत्तमौ।
व्याधंव्याधममूढौ तौ यमसाच्चक्रतुर्द्विषौ ॥ ३ ॥
हतबन्धुर्जगामासौ ततः सूर्पणखा वनात्।
पारेसमुद्रं लङ्कायां वसन्तं रावणं पतिम् ॥ ४ ॥
संप्राप्य राक्षससभं चक्रन्द क्रोधविह्वला।
नामग्राहमरोदीत् सा भ्रातरौ रावणान्तिके ॥ ५ ॥

अथेति। अथ अमूढौ सावधानौ रघूत्तमौ अयसोविकार आयसं फलं तीक्ष्णानि आयसानि येषां तैर्वाणैः अधिमर्म्म मर्म्मसु जीवितस्थानेषु। विभक्त्यर्थेऽव्ययीभावः। व्याधं व्याधं विद्ध्वा विद्ध्वा। आभीक्ष्ण्ये णमुल् आभीक्ष्ण्ये द्वेभवत इति द्विर्वचनम्। तौ द्विषौ खरदूषणौ यमसात् यमाधीनौ। "तदधीनवचने" इति सातिः। चक्रतुः सावधानत्वात् तयोरायुधच्छायं निराकृत्य तौ निजघ्नतुरित्यर्थः ॥ ३ ॥

हतेति। ततः तदनन्तरं हतबन्धुः व्यापादितभ्रातृयुगला असौ सूर्पणखा वनात् दण्डकारण्यात् समुद्रस्य पारे पारेसमुद्रम्। "पारेमध्ये षष्ठ्या वा" इत्यव्ययीभावः। स्थितायां लङ्कायां वसन्तं पतिं प्रभुं शरण्यमिति यावत्। रावणं जगाम तत्समीपमभ्यगच्छदित्यर्थः ॥ ४ ॥

सम्प्राप्येति। क्रोधविह्वला कोपविवशा सा राक्षसानां सभा राक्षससभम्। "सभा राजाऽमनुष्यपूर्व्वा" इत्यनेन क्लीवत्वम्। सम्प्राप्य चक्रन्द क्रन्दनं चकार। तथा रावणान्तिके,

दण्डकामध्यवास्तां यौ वीरं रक्षःप्रकाण्डकौ ।
न्रभ्यां संख्येऽक्षपातां तौ सभृत्यौ भूमिवर्द्धनौ ॥६॥

रावणसमीपे नामग्राहं नाम गृहीत्वा "हा वीर खर हा भगिनीवत्सल दूषण क्वासि देहि मे प्रतिवचनम्" इति तयोर्नामग्रहणपूर्व्वकं भ्रातरौ अरोदीत् तावुद्दिश्य अश्रुमोचमकरोदित्यर्थः। अत्र नामग्रहणविशिष्टाया रोदनक्रियाया व्याप्यमिष्टत्वात् रुदिः सकर्मकः इति जयमङ्गलेन सिद्धान्तितम्। भरतस्त्वाह "अश्रुमोचनमात्रे रुदिरकर्मकः शब्दयुक्ताक्रन्दने तु सकर्मक इति प्राञ्चः" इति। तथाच उत्तरचरिते "हद्धी हद्धी दुक्खिविणएण विप्पलद्धा अहं अज्जउत्तं आक्कन्दामि" इति। तथा इहैव द्वितीये। "उपारुरोदेव नदत्पतङ्गः कुमुद्वतीं तीरतरुर्दिनादौ" इत्यादिषु द्रष्टव्यम् ॥ ५ ॥

दण्डकामिति। हे वीर यौ रक्षःप्रकाण्डकौ प्रशस्तौ राक्षसौ। "प्रशंसावचनैश्च" इति समासस्ततः स्वार्थे कन्। दण्डकां अध्यवास्तां अध्युषितवन्तौ वसतेर्लुङ्।ः अधिपूर्व्वात् वसेरधिकरणस्य कर्म्मसंज्ञा। सभृत्यौ सानुचरौ तौ संख्ये संग्रामे न्रभ्यां नराभ्यां भूमिं वर्द्धयतः इति भूमिवर्द्धनौ अक्षपातां क्षतौ। क्षधातोः कर्म्मणि लुङ्। भूमिवर्द्धनौ इत्यत्र नन्यादित्वात् ल्युः। "प्रवत्तु भूमिवर्द्धनः" इति त्रिकाण्डशेषः। तौ निहत्य लघ्वराभ्यां यथा चितिर्न्नितिकोपचयो भवति तथा विहितमित्यर्थः। दण्डकानिति पाठे दण्डकारण्यसन्निवेशानित्यर्थः। यद्यपि प्रकाण्डसुबतप्रजाविति अमरेणोक्तं दृश्यते च गोप्रकाण्ड-

विग्रहस्तव शक्रेण बृहस्पतिपुरोधसा।
सार्द्धं कुमारसेनान्या शून्यश्चासीति को नयः ॥७॥
यद्यहं नाथ नायास्यं विनसा हतवान्भवा।
नाज्ञास्यस्त्वमिदं सर्व्वं प्रमाद्यन् चारदुर्व्बलः ॥८॥

मित्यादौ अजहल्लिङ्गता तथापि कप्रत्यये सति "स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपि" इति न्यायात् पुंस्त्वम्। वस्तुतस्तु पुंलिङ्गोऽपि प्रकाण्डशब्दो वर्त्तते। "निगड़ाक्रीड़नल-प्रकाण्डकाण्डाः" इति पुंनपुंसकवर्गे हेमचन्द्रः। "उद्दप्रकाण्डौ द्वौ प्रशंसायाम्" इति च हलायुधः ॥ ६ ॥

विग्रह इति। बृहतां वाचां पतिः बृहस्पतिः। पृषोदरादित्वात् साधु। पुरः अग्रे हितं विधत्ते पुरोधाः। बृहस्पतिः पुरोधा यस्य तेन बृहस्पतिपुरोधसा। कार्य्येषु पुरोधीयते इति पुरोधा मन्त्री इति जयमङ्गलेन व्युत्पाद्यते। तथा कुमारः कार्त्तिकेयः सेनानीः सेनापतिर्यस्य तेन तथोक्तेन शक्रेण सार्द्धं विग्रहो विरोध आसीत्। पुरा इदृशेनापि देवराजेन सह विग्रह्य जयश्रीलाञ्छितोऽभूरित्यर्थः। अधुना च शून्यः निरुत्साहः कार्य्याकार्य्यविचाररहितो वा असि भवसि इति को नयः का नीतिः दुर्नीतिरित्यर्थः। विजिगीषुणा तु सततमप्रमत्तेन भाव्यं त्वयितु समभाग्यविभ्रवात् तद्वैपरीत्यं दृश्यते इति भावः ॥ ७ ॥

यदीति। हे नाथ अहं विगता नासिका यस्याः सा विनसा। नासिकाया नसादेशस्ततः समासान्तोऽच्

दण्डकामध्यवास्तां यौ वीर रक्षःप्रकाण्डकौ।
नृभ्यां संख्येऽक्षधातां तौ सभृत्यौ भूमिवर्द्धनौ ॥६॥

रावणसमीपे नामग्राहं नाम गृहीत्वा "हा वीर खर हा भगिनीवत्सल दूषण क्वासि देहि मे प्रतिवचनम्" इति तयो-र्नामग्रहणपूर्व्वकं भ्रातरौ अरोदीत् तावुद्दिश्य अश्रुमोचनमकरो-दित्यर्थः। अत्र नामग्रहणविशिष्टाया रोदनक्रियाया व्याप्-मिष्टत्वात् रुदिः सकर्मकः इति जयमङ्गलेन सिद्धान्तितम्। भरतस्त्वाह "अश्रुमोचनमात्रे रुदिरकर्मकः शब्दयुक्ताक्रन्दने तु सकर्मक इति प्राञ्चः" इति। तथाच उत्तरचरिते "हद्धी हद्धी दुस्सिविणएण विप्पलद्धा अहं अज्जउत्तं आक्रन्दामि" इति। तथा इहैव द्वितीये। "उपारुरोदेव नदत्पतङ्गः कुमुद्वतीं तीरतरु-र्दिनादौ" इत्यादिषु द्रष्टव्यम् ॥ ५ ॥

दण्डकामिति। हे वीर यौ रक्षःप्रकाण्डकौ प्रशस्तौ राक्षसौ। "प्रशंसावचनैश्च" इति समासस्ततः स्वार्थे कन्। दण्डकां अध्यवास्तां अधुषितवन्तौ वसतेर्लुङ्। अधिपूर्वात् वसेरधिकरणस्य कर्म्मसंज्ञा। सभृत्यौ सानुचरौ तौ संख्ये संग्रामे नृभ्यां नराभ्यां भूमिं वर्द्धयतः इति भूमिवर्द्धनौ अक्षधातां क्षतौ। क्षधातोः कर्म्मणि लुङ्। भूमिवर्द्धनौ इत्यत्र नन्द्यादित्वात् ल्युः। "अवस्तु भूमिवर्द्धनः" इति त्रिकाण्डशेषः। तौ निहत्य तच्छवाभ्यां यथा क्षितेर्म्मांसोपचयो भवति तथा विहित-मित्यर्थः। दण्डकानिति पाठे दण्डकारण्यसन्निवेशानित्यर्थः। यद्यपि प्रकाण्डमुद्घतल्लजाविति अमरेणोक्तं दृश्यते च गोप्रकाण्ड-

विग्रहस्तव शक्रेण बृहस्पतिपुरोधसा।
सार्द्धं कुमारसेनान्या शून्यश्चासीति को नयः ॥७॥
यदहं नाथ नायास्यं विनसा हतवान्स्वया।
नाज्ञास्यस्त्वमिदं सर्व्वं प्रमाद्यन् चारदुर्व्वलः ॥८॥

मित्यादौ अवहृद्रिङ्गता तथापि कमलये सति "सार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपि" इति न्यायात् पुंस्त्वम्। वस्तुतस्तु पुंलिङ्गोऽपि प्रकाण्डशब्दो वर्त्तते। "निगड़ाक्रीड़नल-प्रकाण्डकाण्डाः" इति पुंनपुंसकवर्गे हेमचन्द्रः। "उद्यप्रकाण्डौ हौ प्रशंसायाम्" इति च हलायुधः॥६॥

विग्रह इति। हृहतां वाचां पतिः बृहस्पतिः। पृषोदरादित्वात् साधु। पुरः अग्रे हितं विधत्ते पुरोधाः। बृहस्पतिः पुरोधा यस्य तेन वृहस्पतिपुरोधसा। कार्य्येषु पुरोधीयते इति पुरोधा मन्त्री इति जयमङ्गलेन व्युत्पाद्यते। तथा कुमारः कार्त्तिकेयः सेनानीः सेनापतिर्यस्य तेन तथोक्तेन शक्रेण सार्द्धं विग्रहो विरोध आसीत्। पुरा देवेगैनापि देवराजेन सह विरुद्ध जयश्रीलाञ्छितोऽभूरित्यर्थः। अधुना च शून्यः निरुत्साहः कार्य्याकार्य्यविचाररहितो वा असि भवसि इति को नयः का नीतिः दुर्नीतिरित्यर्थः। विजिगीषुणा तु सततम-प्रमत्तेन भाव्यं त्वयि तु ममभाव्यविप्लवात् तद्विपरीतं दृश्यते इति भावः॥७॥

यदीति। हे नाथ अहं विगता नासिका यस्याः सा विनसा। नासिकाया नसादेशस्ततः समासान्तोऽच्। केचित्तु,

करिष्यमाणं विज्ञेयं कार्य्यं किन्नु कृतं परैः।
अपकारे कृतेऽप्यज्ञो विजिगीषुर्नवा भवान् ॥८॥

नसादेशस्य संज्ञाविषयत्वात् "वैर्य्योवक्तव्यः" इति खादेशविधायकस्य वार्त्तिकस्य बाधकत्वाच्चात्र विगतया नासिकया उपलक्षिता इति व्याचचते। हतबान्धवा नाशितभ्रातृका सती यदि न आयास्यं त्वत्सकाशं नागच्छेयं, तदा प्रमाद्यन् अनवहितः तथा, कार्य्याकार्य्यज्ञानाय लोके चरतीति चरः। पचाद्यच्। चर एव चारः। स्वार्थे अण्। चारेण दुर्बलः हीनः चारदुर्बलः त्वं इदं सर्वं भगिनीधर्षणभ्रातृवधादिकं न अज्ञास्यः न जानीयाः। "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" इति लृङ्। अत्र निषेधवाचिना नञा क्रियातिपत्तेरभावप्रतीतावपि न दोषः तस्याप्रयोगे तु क्रियातिपत्तिप्रतीतेर्दुर्वारत्वात्। अतः कुमारसम्भवसञ्जीवन्यां "गामधास्यत् कथं नागः मृणालमृदुभिः फणैः। आरसातलमूलात्त्वमवालम्बिष्यथा न चेत्" इति अत्र मल्लिनाथेन "अत्र क्रियातिपत्त्यभावात् लृङ्प्रयोगश्चिन्त्यः" इति यदुक्तं तत् न सम्यक् ॥ ८ ॥

करिष्यमाणमिति। परैः शत्रुभिः करिष्यमाणं अपकारार्थं विधास्यमानमपि न तु विहितं कार्य्यं विज्ञेयं विजिगीषुणेति भावः। यत् कृतं परैः सम्पादितं, तत् किन्नु किमुत, तत् अवश्यमेव विज्ञेयमित्यर्थः। अपकारे कृतेऽपि अज्ञः अनभिज्ञः भवान् विजिगीषुः न वा न भवत्येव। अत्र वाशब्दः एवार्थकः। "वा स्यात् विकल्पोपमयोरेवार्थेऽपि समुच्चये" इत्यमरः। त्वं

हतस्त्वं पात्रे समितैः खट्वारूढः प्रमादवान्।
पानशौण्डः श्रियं नेता नात्यन्तीनत्वमुन्मना॥१०॥
अध्वरेष्वग्निचित्वत्सु सोमसुत्वत आश्रमान्।
अत्तुं महेन्द्रियं भागमेति दुश्च्यवनोऽधुना॥ ११॥

विजिगीषुश्चेत् कथं परात्रिकारप्राप्तोऽपि माध्यस्थमवलम्ब्य तिष्ठसीति भावः॥ ९॥

हत इति। पात्रे भोजनकाले एव समिताः सन्निहितास्तैः अनुजीविभिरित्यर्थः। "पात्रे समितादयश्च" इति क्षेपे समासः। हतः धृष्टः खट्वामारूढः खट्वारूढः उत्पथप्रस्थितः। "खट्वा क्षेपे" इति समासः। प्रमादवान् अनवहितचित्तः पाने शौण्डः प्रसक्तः पानशौण्डः। तथा उन्मना उद्भ्रान्तचित्तस्त्वं श्रियं राज्यलक्ष्मीं अत्यन्तं गामिनी अत्यन्तीना तत्तां आत्यन्तीनत्वं न नेता न प्रापयिष्यसि। शीलार्थकतृनवर्ज्जनात् न कर्म्मणि षष्ठी। यद्यपि महोदयं राज्यं प्राप्तवानसि तथापि नैतत्ते राजगुणविहीनस्य चिराय स्थास्यतीति भावः॥ १०॥

अध्वरेष्विति। अधुना दुश्च्यवनो वासवः अग्निं चितवन्तः अग्निचितः साग्निकाः। अग्निपूर्व्वात् चिनोतेरतीतकाले क्विप्। ते विद्यन्ते येषु तेषु अग्निचित्वत्सु आहिताग्निभिरनुष्ठितेषु इत्यर्थः। अध्वरेषु महेन्द्रियं महेन्द्रदेवताकं भागं हविर्भागं अत्तुं भक्षयितुम्। सोमं सुन्वन्ति ये ते सोमसुतः ते एषु सन्तीति सोमसुत्वतः तादृशान् आश्रमान् एति आयाति। पूर्व्वमिन्द्रस्य यज्ञभागः भक्तैरभिविलुप्त आसीत् इदानीन्तु तव प्रमादात् स स्वभागं यथेष्टमाददातीत्यर्थः॥ ११॥

आमिक्षीयं दधिक्षीरं पुरोडाश्यं तथौषधम् ।
हविर्हैयङ्गवीनञ्च नाप्युपघ्नन्ति राक्षसाः ॥ १२ ॥

युवजानिर्धनुष्पाणिर्भूमिष्ठः खविचारिणः ।
रामो यक्ष्मद्रुहो हन्ति कालकल्पशिलीमुखः ॥१३॥

आमिक्षीयमिति । आमिष्यते जलेन सिच्यते या सा आमिक्षा दध्ना सहितं शृतं पयः । औणादिकः सक् ततस्त्रिया-माप् । तप्ते पक्के दुग्धे दधियोगजा विकृतिः । "आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः" इत्यमरः । आमिक्षायै हितं आमिक्षीयं दधि च क्षीरञ्च दधिक्षीरम् । द्वन्द्वैकवद्भावो व्यञ्जनत्वात् । पुरो दाश्यते दीयते पुरोडाः अन्नविकारः पिष्टकादिः । निपातनात् साधु । तस्मै हितं पुरोडाश्यं, ओषधिरेव औषधम् । "ओषधिः फलपाकान्ता" इत्यमरः । "स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते" इति नपुंसकलिङ्गता । तथा हूयते हविः हव्यं ह्योगोदोहस्य विकारः हैयङ्गवीनं । निपातनात् साधु । "तत्तु हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतम्" इत्यमरः । तत्र । एतानि राक्षसा न उपघ्नन्ति न नाशयन्ति । त्वयि उदासीने राक्षसाः स्वकार्य्यप्रमत्ता यत्प्रियं वस्तु न दूषयन्तीत्यर्थः ॥ १२ ॥

इदानीं कार्य्यप्रदर्शनेन प्रोत्साहयितुमाह युवेति । युवतिः जाया यस्य असौ युवजानिः, जायाया निङ् पुम्वद्भावश्च । पाणौ धनुर्यस्य असौ धनुष्पाणिः, "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ" इति परनिपातः । भूम्यां तिष्ठति इति भूमिष्ठः कालकल्पशिलीमुखः मृत्युतुल्यसायकः रामः खविचारिणः आकाशचरणशीलान्

सहायवन्त उद्युक्ता बहवो निपुणाश्च याम् ।
श्रियमाशासते लोलां तां हस्तेकृत्य मा श्वसीः ॥१६॥
लक्ष्मीः पुंयोगमाशंसुः कुलटेव कुतूहलात् ।
अन्तिकेऽपि स्थिता पत्युश्छलेनान्यं निरीक्षते ॥१७॥

सहायेति । सहायवन्तः प्रशस्तसहायसम्पन्ना उद्युक्ता उत्साहवन्तः निपुणाः कार्य्यकुशलाश्च बहवः बहुसंख्यकाः पुरुषा यां त्वदीयां श्रियं आशासते कामयन्ते, आङ्पूर्व्वात् शास्तेरात्मनेपदं ङिद्भावश्च । लोलां चञ्चलां तां हस्तेकृत्य स्वीकृत्यापि माश्वसीः आश्वासं मा कार्षीः । हस्ते शब्दः सप्तम्यन्तप्रतिरूपकोऽव्ययः स्वीकारे वर्त्तते, तस्य गतिसंज्ञायां समासे ल्यबादेशः । स्वभावचञ्चला लक्ष्मीः स्वल्पेनापि प्रमादेन भ्रंशते, बहवश्च उद्योगिनस्तामाकाङ्क्षन्ति अतो निजायत्तामपि तामप्रमत्तेन मनसा सततमनुपालयेति भावः ॥ १६ ॥

लक्ष्मीरित्यादि । कुलात् अटति कुलं विहाय गच्छतीति कुलटा पुंश्चली इव । निपातनात् साधु । पुंभिः योगः पुंयोगः बहुपुरुषसंसर्गः तं आशंसुः अभिलषन्ती "सनाशंसभिक्ष उः" इति कर्त्तरि उप्रत्ययः । लक्ष्मीः पत्युः अन्तिके अदूरे स्थितापि । दूरान्तिकार्थैरित्यादिना षष्ठी । कुतूहलात् कौतुकात् छलेन व्याजेन किञ्चित् छिद्रं प्राप्य इत्यर्थः अन्यं पुरुषं निरीक्षते साभिलाषं पश्यति । इयमेवहि लोलतायाः परा काष्ठा यत् स्वामिसन्निधानेऽपि पुरुषान्तरप्रार्थनमिति भावः ॥ १७ ॥

योषिद्वृन्दारिका तस्य दयिता हंसनादिनी।
दूर्व्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला ॥१८॥
नास्यं पश्यति यस्तस्या निस्तं दन्तच्छदं न वा।
संशृणोति न चोक्तानि मिथ्यासौ विहितेन्द्रियः ॥१९॥

सम्प्रति प्रलोभनार्थं जानकीं वर्णयति। योषिदिति। तस्य रामस्य दयिता प्रिया योषितां मध्ये वृन्दारिका श्रेष्ठा। पाणिनीयास्तु योषिच्चासौ वृन्दारिका चेति समासं कुर्व्वन्ति विशेष-सूत्रबलात् "न निर्द्धारणे" इति षष्ठीसमासनिषेधाच्च। हंस इव नदितुं शीलं यस्याः सा हंसनादिनी। "कर्त्तर्य्युपमाने" इति णिनिः। दूर्व्वाकाण्डं इव स्थिता तद्वत् श्यामा, श्यामा "शीते सुखोष्णसर्व्वाङ्गी ग्रीष्मे तु सुखशीतला। तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते" इत्युक्तलक्षणान्विता। यद्वा श्यामा अप्रसूताङ्गना। यदुक्तं विश्वप्रकाशे "अप्रसूताङ्गनायाञ्च श्यामा-सोमलतौषधी" इति। न्यग्रोधपरिमण्डला "स्तनौ सुकठिनौ यस्या नितम्बे च विशालता। मध्ये क्षीणा भवेत् या सा न्यग्रोधपरिमण्डला" इत्युक्त-स्वरूपा। न्यग्रोधस्य वटवृक्षस्य इव परिमण्डलं यस्याः सा तथोक्ता यद्वा वहुपात् वटपादपः सर्व्वतो विस्तृतिमापद्यते, तद्वत् सा गुरुणा नितम्बविम्बेन पश्चात् प्रस्तृतत्वमधिगतादव तस्थौ इति केचित्। दूर्व्वाकाण्डमिव श्यामा श्यामवर्णेति व्याख्यानं तु पुराणविरुद्धं तत्र गौरत्वकथनादित्यनु-सन्धेयम्। हंसनादिनीत्यत्र हंसगामिनीति पाठान्तरम् ॥१८॥

नास्यमिति। यो जनः तस्या आस्यं मुखमण्डलं न पश्यति,

सारोऽसाविन्द्रियार्थानां यस्यासौ तस्य नन्दथुः।
तस्ये कान्तान्तरैः सार्द्धं मन्येऽहं धिङ्निमज्जथुम्॥२०॥
न तं पश्यामि यस्यासौ भवेन्नोद्वेजया मतेः।
त्रैलोक्ये नापि विन्दस्त्वं तां क्रीत्वा सुकृती भव॥२१॥

अथवा दन्ताः छाद्यते अनेनेति दन्तच्छदं अधरम्। छादेः करणे घस्तती ह्रस्वः। न निंस्ते न चुम्बति। निंसि लङ चुम्बने। उक्तानि न च संशृणोति। असौ मिथ्या विद्दितेन्द्रियः। विधात्रा तस्मै यत् चक्षुरादीनि इन्द्रियाणि दत्तानि, तत् निष्फलं अत स्तस्यामलाभोऽपि विड़म्बनैव इति भावः॥ १८॥

सार इति। असौ रामदयिता इन्द्रियाणां ये अर्थाः भोग्या विषयाः तेषां मध्ये सारः उत्कर्षः रूपायतिशययोगात्। "अर्थः प्रकारे विषये वित्तकारणवस्तुषु। अभिधेये च शब्दानां हत्तौ चापि प्रयोजने" इति विश्वः। असौ रामप्रिया यस्य जनस्य सम्बन्धे सम्पद्यते इति शेषः, तस्य नन्दथुः आनन्दः स एव सुखीत्यर्थः, तस्ये शय्यायां कान्तान्तरैः अन्यस्त्रीभिः सार्द्धं निमज्जथुं निमज्जनं शयनमित्यर्थः धिक् इत्यहं मन्ये॥ २०॥

नेति। तं न पश्यामि, तादृशो जनो जगति दुर्लभ इत्यर्थः। असौ जानकी यस्य मतेः उद्वेजयति उत्कम्पयतीति उद्वेजया क्षोभजनिका। उत्पूर्व्वादेजयतेः शः। तद्योगात् कर्म्मणि षष्ठी। न भवेत्। अतः त्वं त्रयः लोका एव त्रैलोक्यं चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। तेनापि तां क्रीत्वा विन्दतीति विन्दः लाभयान् सन्। कर्त्तरि शः। सुकृतमस्यास्तीति

नैवेन्द्राणी न रुद्राणी न मनावी न रोहिणी।
वरुणानी नचाग्नायी तस्याः सीमन्तिनी समा ॥२२॥
प्रत्यूचे राक्षसेन्द्रस्तामाश्वसिहि बिभेषि किम्।
त्यज नक्तञ्चरि क्षोभं वाचाटे रावणोऽस्म्यहम् ॥ २३ ॥

सुकृती पुण्यवान् भव लोके पुण्यशालितया प्रथितो भव इत्यर्थः। यद्वा सुकृती सुष्ठु कृती कृतार्थो भव सफलात्मलाभो भवे-त्यर्थः ॥ २१ ॥

ननु अन्या अपि देवादिषु वरस्त्रियः सन्ति तत् किमनया मानुष्येत्याशङ्क्याह नैवेति। तस्याः समा तुल्या, सीमन्तः केशेष्विति निपातनात् साधु अन्यत्र सीमान्तः। स विद्यते यस्याः सा सीमन्तिनी स्त्री इन्द्राणी इन्द्रपत्नी शची नैव। रुद्राणी गौरी न। उभयत्र ङीप् आनुक् च। मनावी मनुभार्या शतरूपा न। ङीपि मनोरौकारादेशः। रोहिणी चन्द्रपत्नी न। रोहित शब्दात् ङीप् नकारश्च। वरुणानी वरुणपत्नी न। अत्र पूर्ववत् ङीप् आनुक् च। तथा अग्नायी अग्निभार्या स्वाहा न। ङपि अग्नेरैकारादेशः। सा रमणीमण्डले अपूर्वा सृष्टि-रिति भावः ॥ २२ ॥

प्रत्यूचे इति। राक्षसेन्द्रः तां प्रत्यूचे प्रतिवचनं उक्तवान्। किमिति आश्वसिहि आश्वस्ता भव, किं कथं बिभेषि भयमाप्-यसि। हे नक्तञ्चरि रात्रिञ्चरि क्षोभं दुःखं त्यज तापसकावधी-रणया यस्ते निर्वेदस्तं परिहर। क्षोभमिति दुःखं मां प्रति रोषं वा। वाचोऽस्तीत्यर्थे वाग्मिवाचाटवाचाला निपात्यन्ते। हे

मामुपास्त दिदृक्षावान् याष्टीकव्याहतो हरिः ।
धाम्नालाभोन्मुखो दूरात् काक्षेणानादरेक्षितः ॥२४॥
विरुग्णोदग्रधाराग्रः कुलिशो मम वक्षसि ।
अभिन्नं शतधात्मानं मन्यते वलिनं वली ॥ २५ ॥

वाचाटे वाचाले । "वाचाटो बहुगर्ह्यवाक्" इत्यमरः । अहं हि निश्चितं रावणः, रवणस्य विश्रवसः अपत्यं यद्वा रावयति सर्व्वभूतानि आक्रन्दयतीति रावणः । प्रसिद्धनामानुवादात् उत्कर्षः सूचितः । अतोऽहं रामलक्ष्मणौ हत्वा तव क्षोभं निराकरिष्यामीति भावः ॥ २३ ॥

सम्प्रति आत्मपौरुषख्यापनार्थमाह मामिति । दिदृक्षावान् दर्शनेच्छावान् द्रष्टुमिच्छुरित्यर्थः । याष्टीकेन वेत्रधारिणा दौवारिकेण व्याहतः विनिवारितः याष्टीकव्याहतस्तथापि धाम्नालाभोन्मुखः मदाज्ञालाभार्थं ऊर्द्ध्वमुखः हरिः इन्द्रः दूरात् सन्निधानगमनायोग्यत्वादिति भावः । काक्षेण कटाक्षेण, कोरीषदर्थे इति कादेशः । यद्वा कु अक्षं तेन काक्षेण कुदृष्ट्या, अक्षशब्दस्य इन्द्रियसामान्याभिधायित्वेऽपि ईक्षितशब्देन परामर्शात् चक्षुषि वर्णनम् । अथवा कु अक्षि यस्य तेन काक्षेण मया सक्थ्यक्ष्णोरिति षच् । अनादरेक्षितः अवज्ञाविलोकितः सन् मयेति शेषः । मां उपास्त सेवितवान् । उपपूर्व्वात् आसतेर्लङ् ॥ २४ ॥

विरुग्णेति । वलमस्यास्तीति वली सारवान् कुलिशः वज्रः मम वक्षसि विरुग्णोदग्रधाराग्रः कुण्ठितविपुलधाराकोटिः

कृत्वा लङ्काद्रुमालानमहमैरावतं गजम् ।
बन्धनेऽनुपयोगित्वान्नतं तृणवदत्यजम् ॥ २६ ॥
आहोपुरुषिकां पश्य मम सद्रत्नकान्तिभिः ।
ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः सन्निधिः सदा ॥२७॥

सन्नपि शतधा अभिन्नं अभग्नं आत्मानं बलिनं मन्यते प्रत्येति । अत्र प्रतीयमानोत्प्रेक्षा । असुरनिवहविदारणेन पूर्वं सारवत्तया प्रसिद्धोऽपि महेन्द्रस्य कुलिशः "अहो मे बलवत्ता यद्रावणवचसि निपातितोऽपि शतधा न चूर्णीकृतोऽस्मि" इति आत्मानं बहुमन्यते इत्यर्थः ॥ २५ ॥

कृत्वेति । अहं इरावान् समुद्रः तत्र भवं ऐरावतं गजं आलीयन्ते एष्विति आलानानि । अधिकरणे ल्युट लीयतेर्ल्यदेशः । लङ्कायां ये द्रुमाः त एव आलानानि बन्धनस्तम्भा यस्य तथोक्तं कृत्वा बन्धने अनुपयोगित्वात् प्रयोजनाभावात् तस्य स्वयमेव वशीभूतत्वात् अनुपादेयत्वाद्वेति भावः । नतं नम्रं तं तृणवत् अत्यजं त्यक्तवान् । भरतस्तु तं न अत्यजं अपितु अत्यजमेवेति विरथालने नव ॥ २६ ॥

आहो इति । मम रावणस्य अहोपुरुषस्य भाव आहोपुरुषिका कार्यसिद्धावपि तत्साधने वृत्तिः तां पश्य । यतः सद्रत्नकान्तिभिः उत्कृष्टमणिप्रभाभिः ध्वस्तान्धकारे निरस्ततिमिरेऽपि पुरे सदा सततं पौर्णमासीभिन्नतिथिष्वपि पूर्णेन्दोः सकलकलान्वितचन्द्रस्य सन्निधिः सन्निधानं अस्तीति शेषः । प्रयोजनाभावेऽपि भीत्या पूर्णीभूत्वा चन्द्रस्तिष्ठति देवैरपि भीत्या नासौ

हृतरत्नश्च्युतोद्योगो रक्षोभ्यः करदो दिवि ।
पूतक्रतायीमभ्येति सत्रपः किन्न गोत्रभित् ॥२८॥
अतुल्यमहसा सार्द्धं रामेण मम विग्रहः ।
त्रपाकरस्तथाप्येष यतिष्ये तद्विनिग्रहे ॥ २९ ॥

पीयते चन्द्रोपमानि च रत्नानि मम सन्तीति सूचितम् । अह-मेव पुरुषो यत्रेति सम्भावनायामाहोपुरुषिका निपातनात् साधु । "आहोपुरुषिका दर्पात् या स्यात् सम्भावनात्मनि" इत्यमर इति भरतेन व्याख्यातम् ॥ २७ ॥

हृतेति । हृतानि रत्नानि जातिश्रेष्ठवस्तूनि ऐरावदुच्चैः-श्रवःपारिजातादीनि यस्य तथोक्तः । "जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते" इति यादवः । च्युतोद्योगः उद्योगहीनः निरुत्साह इति यावत् । दिवि स्वर्गे स्थितोऽपि रक्षोभ्यो लङ्कावासिभ्यो राक्षसेभ्यः करं राजग्राह्यभागं ददाति इति करदः गोत्रभित् इन्द्रः सत्रपः सलज्जः सन् किं न पूताः क्रतवः यस्य स पूतक्रतुरिन्द्रः तस्य पत्नीं पूतक्रतायीं शचीम् । वृषाक-प्यग्नीत्यादिना ईप् ऐङ् च । अभ्येति अभिगच्छति । यद्धि स्त्रीजनसन्निधानेऽपि लज्जां जनयति, तदतीव सुदुःसहमिति भावः ॥ २८ ॥

अतुल्येति । अतुल्यमहसा असदृशतेजसा हीनबलेनेत्यर्थः रामेण सार्द्धं एवम्विधस्य मम विग्रहः युद्धं त्रपाकरः लज्जाकरः । तथापि एषोऽहं तद्विनिग्रहे तस्य विविधनिग्रहविषये यतिष्ये अविलम्बेनेव यत्नं करिष्यामि स्वमार्यमयेति शेषः । मर्त्तगाम-

उत्पत्य खं दशग्रीवो मनोयायी शितास्त्रभृत्।
समुद्रसविधावासं मारीचं प्रति चक्रमे॥ ३०॥
सम्पत्य तत्सनीड़ेऽसौ तं वृत्तान्तमशिश्रवत्।
वसुनाथ श्रुतार्थेन तेनागादि दशाननः॥ ३१॥
अन्तर्द्दस्व रघुव्याघ्रात् तस्मात् त्वं राक्षसेश्वर।
यो रणे दुःखपस्थानो हस्तरोधं दधद्धनुः॥ ३२॥

सामीप्ये वर्त्तमानवद्वेति विकल्पेन लटो विधानात् लुङुदाहृतः। न खलु त्रिभुवनविजयिनो मम तापसकेन युद्धं युज्यते, तथापि मानत्राणं सर्व्वथा कर्त्तव्यमिति भावः॥ २८॥

उत्पत्येति। मन इव यातुं शीलमस्य मनोयायी कर्त्तर्य्युपमान इति णिनिः। शितास्त्रभृत् गृहीततीक्ष्णचन्द्रहासः दशग्रीवो दशकन्धरः रावणः खं आकाशं उत्पत्य उड्डीय समुद्रस्य सविधे समीपे आवासो यस्य तं मारीचं ताड़कापुत्रं प्रति लक्षीकृत्य चक्रमे गतः। अनुपसर्गाद्वेति आत्मनेपदम्। "सदेशाभ्याससविधसमर्य्यादसवेशवत्" इत्यमरः॥ ३०॥

सम्पत्येति। असौ रावणः तस्य मारीचस्य सनीड़े समीपे तत्सनीड़े। "समीपेनिकटासन्नसन्निकृष्टसनीड़वत्" इत्यमरः। सम्पत्य सङ्गत्य अवतीर्य्य तं वृत्तान्तं सूर्पणखोक्तं अशिश्रवत् श्रावयामास। श्रृणोतेर्णिजन्तात् लुङ्। अथ श्रुतार्थेन ज्ञातवृत्तान्तेन वसुना भयशीलेन तेन दशाननः दशवदनः अगादि अभिहितः। गदेः कर्म्मणि लुङ्॥ ३१॥

अन्तरित्यादि। हे राक्षसेश्वर त्वं तस्मात् वीरत्वेन प्रसि-

**भवन्तं कार्त्तवीर्य्यो यो हीनसन्धिमचीकरत् ।**
**जिगाय तस्य हन्तारं स रामः सार्व्वलौकिकम् ॥२३॥**

स्तात्। प्रक्रान्तप्रसिद्धानुभूतपूर्व्वार्थे तत्यदं यत्यदमनपेक्षते। रघुर्व्याघ्रात् रक्षुम्ब्रेछात्। रघुव्याघ्रादित्यत्र "अन्तर्द्धौ येनादर्शनमिच्छति" इति पञ्चमी। "स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जरसिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः" इत्यमरः। अन्तर्हितम् यथा न तेन दृश्येथास्तथा व्यवहितोभव इत्यर्थः। अन्त.पूर्वात् दधातेर्लोट्। यो रामः हस्तेन ग्रहा यथा हस्तस्यान्यकर्म्मनिवृत्तिस्तथा दृढ़ धृत्वा इत्यर्थ। हस्तोपपदात् रुधेर्णमुल्। धनु' दधत् गृह्णन्। नाभ्यस्तात् शतुर्णम् इति नुणभाव.। अतएव दु.खेन उपस्थीयते उपगम्यते इति दुरुपस्थानः। कर्म्मणि लुट्। शत्रुभिस्तस्य समीपगमनमेवाशक्यं किं पुनर्युद्धमिति भाव'॥२२॥

तदेव दुरुपस्थानत्वं स्फुटयन्नाह भवन्तमिति। य.,कृतवीर्य्यस्य अपत्यं पुमान् कार्त्तवीर्य्यः सहस्रबाहुरर्जुन. भवन्तं हीनेन दुर्बलेन कर्त्रा य., सन्धि. त अचीकरत् कारयामास। हीनबलो हि प्रतियोधी यादृशं सन्धिमर्हति तादृशं सन्धि बला विजित्य भवन्तं कारितवानित्यर्थ.। यद्वा हीनो निन्द्यो य सन्धिस्तथाभूतम्। स राम. सर्व्वलोकेषु विदित सार्व्वलौकिक मि प्रसन्नतो भूर्लोकस्य निःक्षत्रियीकरणात् सुप्रसिद्धम्। शुभगादित्वादुभयपदस्थितस्वरयोर्वृद्धि। तस्य कार्त्तवीर्य्यस्य हन्तारं परशुरामम्। तद्योगात् कर्म्मणि षष्ठी। जिगाय जितवान्।

यमास्यदृश्वरी तस्य ताड़का वेत्ति विक्रमम् ।
शूरम्मन्यो रणाच्चाहं निरस्तः सिंहनर्दिना ॥३४॥
न त्वं तेनान्वभाविष्ठा नान्वभावि त्वयाप्यसौ ।
अनुभूतो मया चासौ तेन चान्वभविष्वहम् ॥३५॥

अतस्तेन तव युद्धवार्त्तापि न युज्यते । पुरा किल जामदग्न्यः अग्निहोत्रधेनुमपहृत्य गच्छतः कार्त्तवीर्य्यार्ज्जुनस्य बाहुसहस्रं परशुना चिच्छेद इति पौराणिकी कथात्रानुसन्धेया । "सार्वलौकिकः" इति पाठे तस्य रामं इति पदेनान्वयः । भरतेनोक्तं भपन्तं हीनसन्धिं भग्नसन्धिं अचीकरत् कृतवान् । कृञः स्वार्थे णिः । "चुर्य्यादिभ्यो णिच्" इत्यस्य योगविभागात् कचित् चुरादेरन्यस्मादपि स्वार्थे णिच् भवतीति बोध्यं तेन "रामो राज्यमकारयत्" इत्यादिप्रयोगाः सङ्गच्छन्ते इति ॥ ३३ ॥

यमेति । यमास्यं मृत्युमुखं दृष्टवती यमास्यदृश्वरी तद्बाणाघातेन निहता इत्यर्थः । दृशेः क्वनिप् तत ईप् रङ् च । ताड़का तस्य रामस्य विक्रमं वीर्य्यं वेत्ति जानाति । वर्त्तमानसामीप्ये इति भूते लट् । च किञ्च आत्मानं शूरं मन्यते इति शूरम्मन्यः । आत्ममाने खश् । अहं सिंह इव नर्दति यः स सिंहनर्दी तेन सिंहनादिना रामेण । कर्त्तर्य्युपमाने इति णिनिः । रणात् रणभूमेः निरस्तः बहिष्कृतः । इहगोऽहमपि तस्य विक्रमं जानामीत्यर्थः ॥ ३४ ॥

नत्वमिति । तेन रामेण त्वं न अन्वभाविष्ठाः अनुभूतोऽसि ।

अध्यङ् शस्त्रभृतां रामो न्यञ्चस्तं प्राप्य मद्विधाः ।
स कन्याशुल्कमभनक् मिथिलायां मखे धनुः ॥३६॥
संविग्नः सह्युध्वानौ तच्छक्तिं खरदूषणौ ।
यज्वानश्च ससुत्वानो यानोपौन्मखेषु सः ॥ ३७॥

असौ रामोऽपि त्वया न अन्वभावि न अनुभूतः परीक्षित-विक्रमोऽस्ति। अतस्तस्मिन् तवेयमवधीरणा। किन्तु मया च मया पुनः असौ अनुभूतः, तेन च अहं अन्वभविषि विदित-सारोऽस्मि। अतो मद्वचनं ग्राह्यमित्यर्थः। सर्वत्र कर्मणि लुङ्॥ ३५॥

अध्यङिति। रामः शस्त्रभृतां योधानां मध्ये अध्यङ् अधिकः अग्रेसर इत्यर्थः। अधिपूर्वादञ्चतेर्गत्यर्थात् कर्त्तरि क्विन्। यद्वा अधरञ्चते आधिक्येन पूज्यते इति अध्यङ् अञ्चतेः कर्मणि क्विप्, पूजार्थकत्वात् नलोपाभावश्च। मद्विधाः मादृशाः पुरुषाः तं प्राप्य तस्य पुरतः इत्यर्थः। न्यञ्चन्ति; अधोगच्छन्ति इति न्यञ्चः हीना इत्यर्थः, निरुनाधोभागे वर्त्तते पूर्ववत्। स रामः मिथिलायां जनकराजधान्यां मखे यज्ञे कन्यायाः सीतायाः शुल्कं पणः कन्याशुल्कम्। यो रौद्रं धनुरारोपित-गुणं करोति तस्मै कन्या दीयते इति मूल्यीकृत्य स्थापितमित्यर्थः। धनुः अभनक् बभञ्ज। भञ्जे रौधादिकात् लङ्॥ ३६॥

संविग्न इति। सह सेन सार्द्धं युध्वानौ युद्धवन्तौ। युधेः क्वनिप्। खरदूषणौ तव भ्रातरौ तस्य रामस्य शक्तिं तच्छक्तिं

सुखजातः सुरापीतो त्रजग्धो माल्यधारयः।
अधिलङ्कं स्त्रियो दीव्य मारव्धा वलिविग्रहम् ॥३८॥
तं भीतङ्कारमाक्रुश्य रावणः प्रत्यभाषत।
यातयामं विजितवान् स रामं यदि किन्नतः॥३९॥

संविन्नः सम्यक् जानीतः। वर्त्तमानसामीप्ये इति भूते लट्, अकर्म्मकत्वाभावात् समपूर्व्वात् विदेर्नात्मनेपदम्। तथा सुत-वन्तः सुत्वानः सोमयाजिनः। सुनोतेः क्वनिप्। तैः सह ससुत्वानः यज्वानश्च। "यज्वा तु विधिनेष्टवान्" इत्यमरः। संविदन्तीति वचनविपरिणामेन योज्यम्। यान् यज्वनः सुत्वनश्च स मखेषु अगोपीत् अरक्षीत्, तेषां यज्ञविघ्नकारिणां राक्षसानां हन-नात् तेऽपि जानन्तीत्यर्थः॥ ३०॥

सुखेति। त्वं अधिलङ्कं लङ्कायाम्, विभक्त्यर्थे अव्ययीभावः। जातं सुखमस्य सुखजातः, सुरापीतः पीतमदिरः, स्रजग्धो भुक्त-मांसः, अदेर्जग्धादेशः। सर्वत्र आहिताग्न्यादिषु पाठात् पर-निपातः। माल्यं धारयति इति माल्यधारयः सन्। कर्त्तरि शः। स्त्रियः स्त्रीभिः दीव्य क्रीड। दिवः करणस्य कर्म्मसंज्ञा द्वितीया च। वलिना वीर्य्यवता रामेण विग्रहं संग्रामं मारब्धाः मा-कार्षीः। न खलु विलासिनस्ते प्रवलविरोधो युज्यते इति भावः॥ ३८॥

तमिति। रावणः तं मारीचं भीतं कृत्वा भीतङ्कारं भीतोऽ-सीति उक्त्वा इत्यर्थः। कर्म्मण्याक्रोशे कृञो खमुञ्। आक्रुश्य विनिन्द्य गर्हा वा प्रत्यभाषत। स दाशरथिः यातयामं

**अघानि ताड़का तेन लज्जाभयविभूषणा।**
**स्त्रीजने यदि तत् श्लाघ्यं धिक्लोकं क्षुद्रमानसम् ॥४०॥**
**यद्गेहेनर्द्दिनमसौ शरैर्भीरुमभाययत्।**
**कुब्रह्मयज्ञके रामो भवन्तं पौरुषं न तत् ॥ ४१ ॥**

गलितवयसं रामं परशुरामं विजितवान् यदि ततः किम्। जराजीर्णस्य जामदग्न्यस्य निर्ज्जयात् किं स शूर इति मन्तव्य इति भावः। एतेन "जिगाय तस्य हन्तारम्" इत्यादिना यदुक्तं तदपास्तम् ॥ ३८ ॥

अघानीति। तेन रामेण लज्जा भयं च विभूषणं यस्याः सा तथोक्ता नतु शौर्यभूषणा इति भावः। ताड़का अघानि व्यापादिता। हन्तेः कर्म्मणि लुङ्। स्त्रीजने तत् हननं श्लाघ्यं श्लाघनीयं यदि तदा क्षुद्रमानसं हीनचित्तं लोकं जनं धिक्। स्त्रीवधोहि लोके लज्जाकरः कापुरुषैरेव बहुमन्यते इति भावः ॥ ४० ॥

यद्गेहे इति। असौ रामः कुत्सिता ब्रह्माणः कुब्रह्माः। कुमहद्भ्यामन्यतरस्यामिति समासान्तष्टच्। तेषां यज्ञके कुत्सिते यज्ञे। कुत्सायां कन्। गेहे एव नर्द्दिनं विकत्थनपरम्। पात्रेसमितादित्वात् समासः। भीरुं भयशीलं भवन्तं शरैः अभाययत् भाययामास इति यत् तत् पौरुषं पुरुषकारः न किन्तु कापुरुषत्वमेव इत्यर्थः। अभाययदित्यत्र प्रयोजककर्त्तुरन्यनिरपेक्षत्वाभावात् न पुगात्मनेपदे। आभ्यां श्लोकाभ्यां "यमात्यद्गुरो तस्य" इत्यस्य परिहारः कृतः ॥ ४१ ॥

चिरकालोषितं जीर्णं कीटनिष्कुषितं धनुः।
किं चित्रं यदि रामेण भग्नं क्षत्रियकान्तिके ॥४२॥
वनतापसके वीरौ विपक्षे गलितादरौ।
किं चित्रं यदि सावज्ञौ मम्रतुः खरदूषणौ ॥४३॥
त्वञ्च भीरुः सुदुर्बुद्धे नित्यञ्च रणकाम्यसि।

चिरेति। चिरकालं व्याप्य उषितं स्थितं चिरकालोषितं जीर्णं कीटैः घुणैः निष्कुषितं अन्तःखादितं तथोक्तं धनुः शैवकोदण्डं रामेण कर्त्रा क्षत्रियकाणां जनकादि-कुत्सितक्षत्रियाणां अन्तिके समीपे भग्नं यदि तत्र किं चित्रं आश्चर्यम्। जीर्णधनुर्भङ्गः कापुरुषैरेव प्रशस्यते न खल्वसौ वीराणां श्लाघाकर इति भावः। एतेन "अध्वङ् प्रक्रान्तो रामः" इत्याद्युक्तं परिहृतम् ॥ ४२ ॥

वनेति। वने यः कुत्सितः तापसः तपःशीलः स वनतापसकस्तस्मिन् विपक्षे गलितादरौ किमयं करिष्यतीति अवहेलया शोधितवन्तौ वीरौ वीर्य्यवन्तौ अपि सावज्ञौ अकिञ्चित्करोऽयमिति बुद्ध्या अनवहितौ इत्यर्थः खरदूषणौ यदि मम्रतुः नाशं गतौ, "म्रियतेर्लुङ्लिङोश्चे"ति नियमात् लिटि आत्मनेपदं न भवति। तत् किं चित्रम्। नहि वीराणामपि प्रमादे स्खलनमसम्भाव्यमिति भावः। अस्मिन् श्लोके "संवित्तः सहयुध्वानौ" इत्याद्युक्तं निरस्तम् ॥ ४३ ॥

त्वञ्चेति। हे सुदुर्बुद्धे नितान्तमन्दबुद्धे त्वं च भीरुः भय-

गुणांश्चापह्नुषेऽस्माकं स्तौषि शत्रूंश्च नः सदा ॥४४॥
शीर्षच्छेद्यमतोऽहं त्वां करोमि चितिवर्द्धनम् ।
कारयिष्यामि वा कृत्यं विजिघृक्षुर्वनौकसौ ॥ ४५ ॥
तमुद्यतनिशातासिं प्रत्युवाच जिजीविषुः ।
मारीचोऽनुनयन् त्रासादभ्यमित्यो भवामि ते ॥४६॥

शीलः भवसि नित्यं रणकाम्यसि आत्मनो युद्धमिच्छसि। आत्मेच्छायां काम्यच् । भीरोर्युद्धेच्छा विडम्बना, यतः पराजयः निश्चित एव इति भावः । त्वं अस्माकं गुणान् शौर्यादीन् अपह्नुषे अपलपसि नः अस्माकं शत्रून् अरींश्च सदा अजस्रं स्तौषि बहुमन्यसे। गुणापवादात् तदन्यारोपणाच्च त्वमस्माकं महान् विपक्षः सम्वृत्तोऽसीति भावः ॥ ४४ ॥

शीर्षेति । अतः अस्मात् तव अकारणद्वेषात् हेतोः शीर्षच्छेदं अर्हतीति शीर्षच्छेद्यः तं त्वां अहं चितिवर्द्धनं भूमिवृद्धिकरं करोमि शिरश्छित्त्वा त्वां व्यापादयामीत्यर्थः । वर्त्तमानसामीप्ये वर्त्तमानवद्वेति लट् । वा अथवा वनं ओकोगृहं, ययोः तौ वनौकसौ रामलक्ष्मणौ विजिघृक्षुः विग्रहीतुं योधयितुं अभिभवितुं वा इच्छुः अहम् । विपूर्व्वात् ग्रहधातोः सन् तत उः, नलोकाव्ययेति षष्ठ्याः प्रतिषेधश्च । कृत्यं कार्य्यं मदभिमतं सीताहरणाकूलमित्यर्थः । कारयिष्यामि त्वामिति शेषः । हृक्रोरन्यतरस्यामिति अणिकर्त्तुः कर्म्म त्वम् ॥ ४५ ॥

तमिति । जिजीविषुः जीवितुमिच्छुः अतएव अनुनयन्

हरामि रामसौमित्री मृगो भूत्वा मृगद्युवौ।
उद्योगमभ्यमित्रीणो यथेष्टं त्वञ्च सन्तनु ॥ ४७ ॥
ततश्चित्रीयमाणोऽसौ हैमरत्नमयो मृगः।
ययामुखीनः सीतायाः पुप्लुवे बहु लोभयन् ॥४८॥

कातरवचनैः प्रसादयन् मारीचः त्रासात् भयात् उद्यतनिया-तासिं गौर्पच्छेदार्थं उत्थापिततीक्ष्णचन्द्रहासं तं रावणं प्रत्युवाच। किमिति ते तव अमित्रस्य अभिमुखं अभ्यमित्रम्। आभिमुख्ये अव्ययीभावः। अभ्यमित्रमलंगामीति अभ्यमित्र्यः भवामि त्वदमित्राभिमुखं गच्छामीत्यर्थः अभ्यमित्रशब्दात् इदं गच्छतीति अर्थे यप्रत्ययः। इति प्रत्युवाच इति पूर्वेण सम्बन्धः। निपातित्वत्र ग्राच्छोरन्यतरस्यामिति इत्वाभावपक्षे रूपम् ॥ ४६ ॥

हरामीति। अहं मृगो भूत्वा माययेति शेषः। मृगैः दीव्यत इति मृगद्युवौ मृगयानिरतौ। दीव्यतेः क्विपि ऊट् ऊकारस्य उवादेशः। मृगद्युतौ इति पाठे द्युतमिसर्पणे इति धातोः क्विपि रूपम्। रामसौमित्री रामलक्ष्मणौ हरामि केनचित् व्याजेन अन्यतो नयामीत्यर्थः। त्वञ्च अभ्यमित्रीणः विपक्षाभिमुखं गच्छन्नित्यर्थः यथेष्टं यथाकामं उद्योगं कार्यं सन्तनु विधेहि ॥ ४७ ॥

तत इति। ततो वचनान्तरं हैमरत्नमयः सुवर्णेन रत्नैश्च निर्म्मितदेहः अतः चित्रीयमाणः आश्चर्य्यबुद्धिं जनयन्। चित्रशब्दात् क्यङ् आनश्च। असौ मारीचः सीतायाः मुखमनतिक्रम्य तिष्ठतीति ययामुखीनः पुरतः वर्त्तमानः इत्यर्थः। बहु

तेनादुद्यूषयत् रामं मृगेण मृगलोचना ।
मैथिली विपुलोरस्कं प्रावुवूर्षुं मृगाजिनम् ॥४६॥
योगक्षेमकरं कृत्वा सीताया लक्ष्मणं ततः ।
मृगस्यानुपदी रामो जगाम गजविक्रमः ॥ ५० ॥

लोभयन् बहुधा चक्षुःस्पृहां जनयन् सन् मुमुवे भ्रमति स्म। जयमङ्गलस्त्वाह "निर्मलत्वात् सीताया अग्रतः यथासुखीनः प्रतिबिम्बाश्रय इव भूत्वा" इति । "सुखस्य सदृशं यथासुखं दर्पणादिस्थप्रतिबिम्बमुच्यते सादृश्येऽव्ययीभावः मृगस्य रत्नमयत्वेन स्वच्छतया यथासुखं दृश्यते अत्र" इति भरतेनोक्तम् ॥ ४८ ॥

तेनेति । मृगस्य लोचने इव लोचने यस्याः सा मृगलोचना। मध्यपदलोपी समासः द्व्यधिकस्वरात् स्वाङ्गात् न ङीप् । मैथिली मिथिलाधिपपुत्री मृगाजिनं मृगचर्म प्रावरितुं परिधातुमिच्छुः प्रावुवूर्षुः । प्रापूर्व्वात् वृणोतेः सन् तत उः । विपुलोरस्कं विशालवक्षसम् । उरःप्रभृतिभ्यः कप् इति बहुव्रीहौ कप् । रामं तेन मृगेण अदुद्यूषयत् क्रीड़ितुमिच्छामकारयत् । सन्नन्तात् दीव्यतेः णिचि कृते लुङि रूपम् । क्रीड़ाव्याजेन मृगमिमं धारय इति प्रार्थितयतीति भावः ॥ ४८ ॥

योगेति । ततो गजविक्रमः हस्तिविक्रमः हस्तितुल्यगमनो वा रामः लक्ष्मणं सीतायाः योगक्षेमे शरीरस्थितिपालने करोतीति योगक्षेमकरम् । कृञो हेतौ टः । ग्रहणमतो तदन्तविधेरभावात् क्षेमप्रियमद्रेत्यादिना अणखचौ न भवतः । कृत्वा मृगस्य अनुपदी अन्वेष्टा सन् । अनुपदमन्वेष्टेति निपातनात्

स्थायं स्थायं क्वचित् यान्तं क्रान्त्वाक्रान्त्वा स्थितं क्वचित्
वीक्षमाणो मृगं रामश्चित्रवृत्तिं विसिष्मिये ॥ ५१ ॥
चिरं क्लिशित्वा मर्म्मावित् रामो विलुभितप्लवम्।
शब्दायमानमव्यात्सीत् भयदं चण्डदाचरम् ॥५२॥
श्रुत्वा विस्फूर्जथुप्रख्यं निनादं परिदेविनी।

साधु। जगाम चचाल अत्र "फलपुष्पादेरलब्धस्य साधनं योगः शरीरादेर्लब्धस्य पालनं क्षेमः" इति भरतेनोक्तम् ॥ ५० ॥

स्थायमिति। स्थायं स्थायं स्थित्वा स्थित्वा क्वचित् कुत्रचित् प्रदेशे यान्तं गच्छन्तं तथा क्रान्त्वा क्रान्त्वा उत्प्लुत्य उत्प्लुत्य क्वचित् स्थितं गतिनिवृत्तिमात्रं चित्रवृत्तिं आश्चर्यशरीरचेष्टं मृगं वीक्षमाणः पश्यन् रामः विसिष्मिये विस्मितः सम्वृत्तः। अत्र आभीक्ष्ण्ये क्त्वा च् णमुलौ द्विर्वचनञ्च ॥ ५१ ॥

चिरमिति। मर्म्माणि जीवितस्थानानि विध्यति मर्म्मावित्। विध्यतेः क्विप् ततः सम्प्रसारणं नहिवृतिवृषीत्यादिना पूर्व्वपदस्य दीर्घत्वञ्च। रामः चिरं क्लिशित्वा महान्तं कालमायस्य विलुभितप्लवं शराघातात् व्याकुलितगमनम्। लुभय विमोहने इति धातोः क्तः विमोहनं व्याकुलीकरणम्। तथा शब्दायमानं क्रोशन्तम्। शब्दवैरेति कत्यर्थे क्यङ्। भयदं भयावहं चण्डाचरं राक्षसं अव्यात्सीत् विध्यवान्। विधतेर्लुङि रूपम् ॥ ५२ ॥

श्रुत्वेति। सीता विस्फूर्जथुप्रख्यं वज्रनिर्घोषतुल्यम्।

मत्वा कष्टश्रितं रामं सौमित्रिं गन्तुमैजिहत् ॥५३॥
एष प्रावृषिजाम्भोदनादी भ्राता विरौति ते।
ज्ञातेयं कुरु सौमित्रे भयात् त्रायस्व राघवम् ॥५४॥
रामसंघुषितं नैतत् मृगस्यैव विवञ्चिषोः।
रामस्वनितसङ्काशः स्वान इत्यवदत् स ताम् ॥५५॥

स्फूर्जितेर्भावे अथुच्। निनादं निशाचरशब्दं श्रुत्वा रामं कष्टश्रितं सङ्कटापन्नं मत्वा परिदेवनशीला कृतस्य कर्मणः अनुचितत्वधिया अत्याहितं शङ्कमाना अनुशोचन्तीत्यर्थः। परिदीव्यतेर्घिनुण्। सौमित्रिं लक्ष्मणं गन्तुं ऐजिहत् ईहामकारयत् नोदयामासेत्यर्थः। ईहङ चेष्टायामिति धातोः णिजन्तात् लुङि रूपम्॥ ५३ ॥

एष इति। प्रावृषि वर्षासु जायते प्रावृषिजः। सप्तम्या अलुक्। तादृशः यः अम्भोदः मेघः तद्वत् नदति प्रावृषिजाम्भोदनादी एष ते भ्राता विरौति आर्त्तनादं करोतीत्यर्थः। हे सौमित्रे ज्ञातेयं ज्ञातिकृत्यं कुरु राघवं भयात् त्रायस्व। भयात् त्राणं हि बन्धुकार्य्यम् तदनुतिष्ठेत्यर्थः। ज्ञातेयमित्यत्र "कपिज्ञात्योर्ढक्" इति ढक्॥ ५४ ॥

रामेति। एतत् रामसंघुषितं रामस्य कण्ठध्वनिर्न। संघुषि भावे क्तः विकल्पेन इट्। किन्तु विवञ्चिषोः छलयितुमिच्छोः मृगस्य एव संघुषितमिति शेषः। एष स्वानः ध्वनिः रामस्वनितसङ्काशः रामस्य नादानुकारी इति स लक्ष्मणः तां अवदत्।

आध्यानस्कन्धकण्ठांसं रुषितं संहितुं रणे ।
प्रोर्णुवन्तं दिशो बाणैः काकुत्स्थं भीरु कः क्षमः ॥५६॥
देहं विभ्रत्तुरस्त्राग्नौ मृगः प्राणैर्दिदेविषन् ।
ज्याघृष्टकठिनाङ्गुष्ठं राममायात् मुमूर्षया ॥ ५७ ॥

स मृग एवास्माकं वञ्चनार्थं मायया रामसदृग्नरवमकार्षीदित्यर्थः। यिवञ्चिषोरिति धातूनामनेकार्थत्वात् वञ्चगत्यामितिधातोरूपं, वञ्चकच् वञ्चने इत्यस्य वा रूपं अनित्यण्यन्तायुरादय इति नियमादच णिच् न भवति ॥ ५५ ॥

आध्यानेति। हे भीरु कातरस्वभावे स्कन्धः अंसस्य पश्चिमोभागः सच कण्ठश्च अंसः भुजशिरः सच एतेषां समाहारः स्कन्धकण्ठांसं आध्यानं स्थूलं स्कन्धकण्ठांसं यस्य स तथोक्तः। आङ्पूर्व्वात् वृद्धार्थकात् ध्यायतेः कर्त्तरि क्तः। रुषितं कुपितं बाणैः दिशः प्रोर्णुवन्तं छादयन्तं काकुत्स्थं रामं रणे संहितुं प्रतिद्वन्द्वी भूत्वा योधयितुं को जनः क्षमः समर्थः न कोऽपीत्यर्थः। युद्धे अजय्यस्य त्रिभुवनैकवीरस्य रामस्य विपत् कदापि नाशङ्क-नीयेति भावः ॥ ५६ ॥

देहमिति। अस्त्रमग्निरिव तस्मिन् अस्त्राग्नौ देहं विभ्रत्तुः भर्त्तुं दग्धुमिच्छुः। भ्रज्जतेः सन् तत उः। प्राणैः दिदेविषन् क्रीड़ितुमिच्छन् सहजेव क्रीड़नवस्तुषु तुच्छत्वबुद्धिरतः प्राणान-किञ्चित्करान् गणयन्निति भावः। मृगः ज्यया धनुर्गुणेन घृष्टौ निघृष्टौ अत एव कठिनौ किणाङ्कितत्वात् दृढ़ौ अङ्गुष्ठौ सव्यापसव्यकर्मणोः यस्य तं तथोक्तं रामं मुमूर्षया मर्त्तुमिच्छया

अवून् भीषयमाणं तं रामं विस्मापयेत कः ।
मास्म भैषीस्त्वयाद्यैव कृतार्थो द्रच्यते पतिः ॥५८॥
यायास्त्वमिति कामो मे गन्तुमुत्सहसे न च ।
इच्छुः कामयितुं त्वं मामित्यसौ जगदे तया ॥५९॥

आयात् आजगाम । यदयमनिष्टकामनया धनुष्मतामग्रेसरं राममायातस्तदस्य मृत्युरासन्न एव इति भावः । दिदेविषन् इति दीव्यतेः सन्नन्तात् शतः; इड्भावपक्षे तु दुद्यूषन्निति रूपम् ॥ ५७ ॥

अवूनिति । अवून् भीषयमाणं भीतान् कुर्वाणं तं रामं कः विस्मापयेत चुभितचित्तं कुर्य्यात् न कोऽपीत्यर्थः । सम्भावनायां लिङ् । भीस्मोः कर्त्तुरन्यनिरपेक्षत्वादात्मनेपदं पक्षे भीषोभीषादेशश्च । अतः मास्म भैषीः भयं न कुरु । मास्म योगात् लुङ् । त्वया अद्यैव कृतार्थः पूर्णमनोरथः पतिः द्रच्यते दृष्टोभविष्यति, दृशेः कर्म्मणि लृट् ॥ ५८॥

याया इति । त्वं यायाः रामान्वेषणाय याहीति मे कामः अभिलाषः । कामप्रवेदने लिङ् । किन्तु त्वं गन्तुं न उत्सहसे न शक्नोषि च । अतः त्वं मां कामयितुं रन्तुं इच्छतीति इच्छुः । विन्दुरिच्छुरिति निपातनात् साधु । इति असौ लक्ष्मणः तया सीतया जगदे उक्तः । गन्तुमनुत्साहेनैव ते दुष्टाभिसन्धिरावि{ष्क्रि}यते इति भावः । कामयतेरिच्छार्थकत्वात् कामयितुमिच्छुरित्यस्य न काचिदर्थप्रतिपत्तिर्भवेदतो लक्षणया कमधातुरत्र इच्छाकार्य्यभूते रमणे वर्त्तते ॥ ५९ ॥

मृषोद्यं प्रवदन्तीं तां सत्यवद्यो रघूत्तमः।
निरगात् राघवु हस्तं त्वं यास्यसीति शपन् वशी ॥६०॥
गते तस्मिन् जलशुचिः शुद्धदन् रावणः शिखी।
जलपूकोऽक्षमालावान् धारयो मृद्लाबुनः ॥६१॥

मृषोद्यमिति। सत्यं वदतीति सत्यवद्यः अवितथवादी। कर्त्तरि यत्। वशः इन्द्रियसंयमनमस्यास्तीति वशी जितेन्द्रियः। रघोरपत्यानि रघवः। राजवाचकादुत्पन्नस्य प्रत्ययस्य विकल्पेन लोपः। तेषु उत्तमः श्रेष्ठः स लक्ष्मणः मृषोद्यं अलीकवाक्यम्। मृषोपपदाद्वदेर्नित्यं भावे क्यप्, यजादित्वात् सम्प्रसारणम्। प्रवदन्तीं ताम्। त्वं राघवु हस्तं यास्यसि अचिरेव राघवु हस्तगता भविष्यसीति शपन् अभिसम्पातं कुर्व्वन् सन् निरगात्, निःपूर्वा-दिणगताविति धातोर्लुङ्। उटजात् निश्चक्राम ॥ ६० ॥

चतुर्भिः कलापकमाह गते इति। तस्मिन् लक्ष्मणे गते सति रावणः तां ऊचे इति वक्ष्यमाणेन सम्बन्धः। स कीदृशः। जल-शुचिः स्नातः शुद्धा दन्ता यस्य स शुद्धदन्। दन्तस्य दत्रादेशः। शिखी शिखायुक्तः परिव्राजकत्वादिति भावः। पापामयत्वात् गर्हितं जपति जंजपूकः। जपतेर्गर्हायां यङ् तत उकि तस्य लुक्। अक्षमालावान् जपमालिकान्वितः। अलाबुस्तुम्बी तस्याः फलं अलाबु मृन्मयं अलाबु मृदलाबु तस्य धारयतीति धारयः। कर्त्तरि शः। कृद्योगे कर्म्मणि षष्ठी। सीतामूचे इत्युत्तरश्लोकेन सम्बन्धः ॥ ६१ ॥

कमण्डलुकपालेन शिरसा च मृजावता ।
संवस्त्रा लाक्षिके वस्त्रे मात्राः संभाण्डा दण्डवान् ॥ ६२
अधीयन्नात्मविद्विद्यां धारयन् मस्करिव्रतम् ।
वदन् वह्वङ्गुलिस्फोटं भ्रूक्षेपञ्च विलोकयन् ॥ ६३ ॥

कमण्डल्विति । कमण्डलुः जलपात्रम् कपालो भिक्षापात्रम् द्वयोः समाहारः कमण्डलुकपालं तेन तथाङ्गेन, मृजावता मार्ज्जनायुक्तेन निर्म्मलेन शिरसा च उपलक्षितः । इत्थम्भूतलक्षणे तृतीया । लाक्षिके लाक्षारक्ते वस्त्रे : अधोवस्त्रोत्तरीयके संवस्त्र परिधाय । वस्त्रात् समाच्छादने णिच् । तथा मात्राः परिच्छदान् कमण्डलुप्रभृतीन् संभाण्ड्य समाचित्य युगपद्वहनार्थं राशीकृत्येत्यर्थः । "भाण्डात् समाचयने" इति णिच् । संवस्त्र संभाण्ड्य इत्यादौ "विशेषकर्मसम्बन्धात् प्रकृतेस्तु गतार्थता" इति नियमादेवमर्थप्रतिपत्तिः । दण्डवान् गृहीतत्रिदण्डः । "मात्रा कर्णविभूषणे । अक्षरावयवे वृत्ते मानेऽल्पे च परिच्छदे" इति विश्वः ॥ ६२ ॥

अधीयन्निति । आत्मविदां परमात्मतत्त्वज्ञानां योगिनां विद्यां उपनिषदं अधीयन् अक्लेशेन पठन् । इङ्धार्य्योरिति इङधातोरक्लेशवति कर्त्तरि शतृप्रत्ययः । माकर्त्तुं कर्म्माणि निषेद्धुं शीलमियां मस्करिणां परिव्राजकानां व्रतं धारयन् । मस्करमस्करिणाविति परिव्राजके सुट् । मस्करिणो हि "माकुरुत कर्म्माणि शान्तिर्वः श्रेयसी" इत्येवमुपदिशन्तीत्यर्थः । अक्लेशवता वह्वङ्गुलिस्फोटं पुनः स्फोटिकां दत्वा भ्रूक्षेपं

सन्दिदर्शयिषुः साम निजुह्नूषुः क्षपाटताम् ।
चंक्रमावान् समागत्य सीतामूचे सुखाभव ॥६४॥
सायन्तनीं तिथिप्रण्यः पङ्कजानां दिवातनीम् ।
कान्तिं कान्त्या सदातन्या ह्रेपयन्ती शुचिस्मिता॥६५॥

विलोकयन् भुवौ उत्क्षिप्य उत्क्षिप्य विलोकयन् । उभयत्रापि पौनःपुन्ये णमुल् । भरतस्त्वाङ्गुलिस्फोट अङ्गुलिं स्फोटयित्वा वहुवदन् मितभाषितया वहु हस्तसंज्ञयैव वदतीति भावः । भ्रूक्षेपं भ्रुवमुत्क्षिप्य विलोकयन् ऋजुतया कटाक्षाद्यभाव इति ॥ ६३ ॥

सन्दिदर्शयिषुरिति । इह भयं माभूदिति साम सान्त्वं सन्दिदर्शयिषुः सम्यक् दर्शयितुमिच्छुः । क्षपाटतां राक्षसत्वं निजुह्नूषुः निह्नोतुं गोपितुं इच्छुः । निपूर्वात् ह्नुधातोः सन् तत उप्रत्ययः । कुटिलं क्रमणं गमनं चङ्क्रमा । क्रमेर्नित्यं कौटिल्ये गताविति यङ् । साऽस्यास्तीति चङ्क्रमावान् भमैथ्यादिस्खलपरिजिहीर्षयेति भावः । स रावणः समागत्य समीपमागत्य सीतामूचे । किमिति । सुखाभव यदहं याचे तव अनुकूला भव । सुखप्रियादानुलोम्ये इति डाच्स्तियोगे डाच् ॥ ६४ ॥

सायन्तनीमिति । पञ्चदशकलानां हृद्धिह्रासाभ्यां तिथीः पञ्चदशसंख्यकाः प्रणयति प्रवर्त्तयतीति तिथिप्रणीः तस्य चन्द्रस्य । कर्त्तरि क्विप् । सायन्तनीं दिनावसानभवां कान्तिं तथा पङ्कजानां दिवातनीं दिवसमात्रस्थायिनीं कान्तिं सदातन्या रात्रिन्दिवं स्थायिन्या कान्त्या निजया त्वदीयया श्रिया ह्रेपयन्ती लज्जयन्ती

का त्वमेकाकिनी भीरु निरन्वयजने वने।
क्षुध्यन्तोऽप्यघसन् व्यालास्त्वामपालां कथं न वा॥६६॥
हृदयङ्गममूर्त्तिस्त्वं सुभगम्भावुकं वनम्।
कुर्व्वाणा भीममप्येतद्दद्दाभ्यैः केन हेतुना॥ ६७॥

तिरस्कुर्व्वन्ती तथा शुचिस्मिता विशदनिर्म्मलहासा "का त्वम्", इति वक्ष्यमाणेन सम्बन्धः॥६५॥

का त्वमिति। हे भीरु भयप्रकृतित्वात् स्त्रीणामिदं सम्बोधनम्। निरन्वया निरनुगमा जना यस्मिन् तस्मिन् निरन्वयजने निःसम्बन्धजने जनशून्ये इत्यर्थः। वने एकाकिनी असहाया। एकादाकिनिच्चासहाये इत्याकिनिच्। एवम्भूता त्वं का देवी मानुषी राक्षसी वा। कथं वा क्षुध्यन्तः क्षुधार्त्ता अपि व्यालाः हिंस्रा व्याघ्रादयः। "व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनि" इति विश्वः। पालयतीति पालः। पचाद्यच्। नास्ति पालो यस्याः तां अपालां अशरणां त्वां न अघसन् अभक्षितवन्तः। अदेर्लुङि घस्लादेशः ततोऽङ्॥६६॥

हृदयमिति। हृदयं गच्छतीति हृदयङ्गमा लावण्यातिशयात् मनोहारिणी मूर्त्तिर्यस्याः सा तथोक्ता। कर्त्तरि खच्। अतएव भीममपि श्वापदादिभिः सङ्कुलत्वात् भयावहमपि एतत् वनं असुभगं सुभगं रम्यं भवति सुभगम्भावुकं तत्। अभूततद्भावे कर्त्तरि खुकञ्। कुर्व्वाणा त्वं केन हेतुना अभ्यैः इदं वनमभिगतासि। अभिपूर्व्वादिणो लटि मध्यमपुरुषैकवचनम्॥६७॥

सुकृतं प्रियकारी त्वं कं रहस्युपतिष्ठसे।
पुण्यकृच्चाटुकारस्ते किङ्करः सुरतेषु कः ॥ ६८ ॥
परिपर्य्युदधे रूपमाद्युलोकाच्च दुर्लभम्।
भावत्कं दृष्टवत्स्वेतदस्मास्वधि सुजीवितम् ॥ ६९ ॥

सुकृतमिति। त्वं प्रियं करोति या सा प्रियकारी अनुकूलवर्त्तिनी सती। कर्म्मवाचकादण् तत ईप्। शोभनं कृतवान् सुकृत् पुण्यवान् तम्। अतीते कर्त्तरि क्विप्। कं जनं रहसि एकान्ते उपतिष्ठसे सङ्गच्छसि। "मैत्राध्वसङ्गाराध" इति सङ्गे आत्मनेपदम्। तथा पुण्यकृत् पुण्यवान् को जनः सुरतेषु शोभनरतेषु ते चाटुकारः प्रियवाक्यकारी किङ्करः भृत्योभवतीति शेषः ॥ ६८ ॥

परीति। उदधेः परि परि उदधिं वर्जयित्वा चतुरुदधिमेखलायां भुवि इत्यर्थः समुद्रे लक्ष्म्या उत्पत्तिः तत्रैव तत्सम्भवः नान्यत्रेति भावः। अपपरिवहिरञ्चवः पञ्चम्या इति विभाषया समासविधानात् असमासपक्षे "परेर्वर्ज्जने" इति द्विर्वचनम्। द्यौर्लोकः द्युलोकः द्युलोकात् आ स्वर्गलोकपर्य्यन्तं दुर्लभं पृथिव्यां स्वर्गे च दुष्प्रापमित्यर्थः। एतत् भवत्या इदं भावत्कम्। कण्प्रत्यये पुंवद्भावः। रूपं लावण्यं दृष्टवत्सु अस्मासु अधि अधिकं सुजीवितं शोभनं जीवनम्। विषये सप्तमी। यद्वा अस्मासु अधि अस्मत्स्वामिकं सुजीवितम्। त्वां दृष्टवतामस्माकं जीवनं धन्यं, त्वामपश्यतान्तु तन्नास्तीति भावः। अस्मासु अधि इत्यत्र स्वाम्यर्थवाचिनाधिना योगे सप्तमी ॥ ६९ ॥

प्रपीतमधुका भृङ्गैः सुदिवेवारविन्दिनी।
सत्परिमललक्ष्मीका नापुंस्कासीति मे मतिः॥७०॥
मिथ्यैव श्रीः श्रियम्मन्या श्रीमन्मन्यो मृषा हरिः।
साक्षात्कृत्याभिमन्येऽहं त्वां हरन्तीं श्रियं श्रियः॥७१॥

प्रपीतेति। भृङ्गैः भ्रमरैः प्रपीतं मधु यस्याः सा तथोक्ता। शेषाद्विभाषेति कप्। शोभनं नीहाराद्यभावात् निर्मलं दिवा यस्याः सा सुदिवा दिवाशब्दोऽयमव्ययः। सुप्रातेत्यादिना अच्। अरविन्दिनी पद्मिनी इव, सती विद्यमाना परिमललक्ष्मीः सुगन्धानुलेपनसम्पत्तिः यस्याः सा तथोक्ता त्वं अपुंस्का भर्तृहीना न असि न भवसि इति मे मतिः निश्चयः। विगतभर्तृकाया गन्धानुलेपनं निषिद्धमतः परिमलसम्पर्कात् तव सधवात्वं तथा अनुमीयते यथा सुदिवसे पीतमकरन्दाया नलिन्या भृङ्गसङ्गतिरिति भावः। यद्वा सत्यौ परिमललक्ष्मी गन्धानुलेपनवेशभूषाजनितशोभे यस्याः सा तथोक्ता। "शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिव कथ्यते" इति। "विमर्दोत्थे परिमलो गन्धे जनमनोहरे" इत्यमरवचनेऽपि लक्षणया तस्य गन्धमात्रवाचित्वमित्यनुसन्धेयम्। आपीतमधुकेति क्वचित् पाठः॥७०॥

मिथ्येति। श्रियः लक्ष्म्याः श्रियं रूपसम्पदं हरन्तीं अभिभवन्तीं त्वां साक्षात्कृत्य प्रत्यक्षीकृत्य। विभाषा कृञीत्यनुवर्तमाने "साक्षात्प्रभृतीनि च" इति गतिसंज्ञा, गतिसमासे ल्यपादेशः। अहं अभिमन्ये तर्कयामि। किमिति। श्रीः विष्णुप्रिया देवी मिथ्यैव आत्मानं श्रियं शोभाधिष्ठात्रीं मन्यते इति

नोद्कण्ठिष्यतात्यर्थं त्वामैक्षिष्यत चेत् स्मरः।
खेलायन्ननिशं नापि सजूःकृत्य रतिं वसेत् ॥७२॥
वल्गूयन्तीं विलोक्य त्वां स्त्री न मन्तूयतीह का।
कान्तिं नाभिमनायेत को वा स्थाणुसमोऽपि ते ॥७३॥

श्रियम्मन्या, तथा हरिः स्वपा आत्मानं श्रीमन्तं श्रीपतिं मन्यते इति श्रीमम्मन्यः। आत्ममनने खश्। त्वमेव हि कान्त्यधिदेवता, यस्य त्वं स एव श्रीमानित्यहं मन्ये इति भावः ॥ ७१ ॥

नेति। स्मरः रतिपतिः त्वां ऐक्षिष्यत दृष्टवानभविष्यत् चेत् तदा अत्यर्थं अधिकं न उदकण्ठिष्यत रतिं प्रति भृशमुत्कण्ठितो नाभविष्यत्। क्रियातिपत्तौ लृङ्। नापि रतिं स्वभार्य्यां सजूःकृत्य सहायीकृत्य। ऊर्य्यादिषु सजुः सहार्थे इति वचनात् गतिसंज्ञा। अनिशं निरन्तरं खेलायन् क्रीड़न्। कण्ड्वादित्वात् यक्। वसेत् अवतिष्ठेत अपितु तां परित्यजेत् यदि त्वां पश्येदित्यर्थः। अत्र क्रियातिपत्तिर्न विवक्षिता किन्तु हेतुहेतुमद्भावः इति भूते भव्ये वा लिङ् ॥ ७२ ॥

वल्गूयन्तीमिति। इह जगति का स्त्री वल्गूयन्तीं शोभमानां त्वां विलोक्य न मन्तूयति कुप्यति स्वपतिवैराग्यशङ्कया ईर्ष्यावशादिति भावः। वल्गुमन्तुशब्दाभ्यां कण्ड्वादित्वात् यक्। को वा जनः स्थाणुसमोऽपि काष्ठतुल्योऽपि गुणदोषानभिज्ञत्वात्। यद्वा स्थाणुसमोऽपि महादेववज्जितेन्द्रियोऽपि काष्ठवन्नीरसोऽपि वा आस्तामन्यः। ते कान्तिं विलोक्य न अभिमनायेत पूर्व्वमदर्शनात् अनभिमनाः सन् अभिमनाः सचेता भवेत्।

दुःखायते जनः सर्व्वः स एवैकः सुखायते।
यस्योत्सुकायमाना त्वं न प्रतीपायसेऽन्तिके ॥७४॥
कः पण्डितायमानस्त्वामादायामिषसन्निभाम्।
वस्यन् वैरायमाणेभ्यः शून्यमन्ववसद्दनम् ॥७५॥

अपितु सर्व्व एव प्रीतमना भवेदित्यर्थः। असम्भावने लिङ्, भृशादित्वात् क्यङ् सलोपश्च ॥ ७३ ॥

दुःखेति। यस्य अन्तिके निकटे त्वं उत्सुकायमाना उत्कण्ठायमाना सती प्रेमोद्वेलहृदयत्वात् इति शेषः, न प्रतीपायसे, प्रतिकूलवर्त्तिनी न भवसि। भृशादित्वात् उत्सुकप्रतीपशब्दाभ्यां क्यङ्। स एवैकः जनः सुखायते सुखमनुभवति केवलं स एव जगति सुखीत्यर्थः। तद्भिन्नः सर्व्वः जनः दुःखायते दुःखमनुभवति। सुखादिभ्यः कर्त्तृवेदनायामिति क्यङ् ॥ ७४ ॥

क इति। अपण्डितः कथमपि पण्डितो भवन् पण्डितायमानः को जनः। भृशादित्वात् क्यङ्। वैरायमाणेभ्यः वैरं कुर्व्वद्भ्यः शत्रुभ्यः, भीत्रार्थानां भयहेतुरिति सूत्रात् पञ्चमी, त्रस्यन् बिभ्यत् कदाचिदरयश्चेत् प्रियां मे धर्षयेरन्निति शङ्कमानः इत्यर्थः। शब्दवैरेत्यादिना क्यङ्। आमिषसन्निभां लोभनीयद्रव्यतुल्यां सर्व्व जनप्रार्थनीयत्वादिति भावः। त्वां आदाय शून्यं विजनं वनं अन्ववसत् अनुवसति स्म। उपान्वध्याङ् वस इति कर्म्मसंज्ञा। "आमिषं पुंसले लोभ्ये सम्भोगोत्कारयोरपि। आमिषं सुन्दराकारे रूपादिविषयेऽपि च" इति विश्वः ॥ ७५ ॥

ओजायमाना तस्यार्घ्यं प्रणीय जनकात्मजा।
उवाच दशमूर्द्धानं सादरा गद्गदं वचः॥ ७६॥
महाकुलीन ऐक्ष्वाके वंशे दाशरथिर्म्मम।
पितुः प्रियङ्करो भर्त्ता क्षेमकारस्तपस्विनाम्॥७७॥

ओजेति। ओजः इव आचरन्ती ओजायमाना किञ्चिल्लज्जा-परित्यागात् तेजस्विनीव भवन्तीत्यर्थः, ओजःशब्दात् धर्म्मिप्रधानात् कर्त्तुः क्यङ् सलोपश्च। भृशादित्वादभूततद्भावे वा क्यङ्। जनकात्मजा सादरा अतिथिरयमिति सबहुमाना सती तस्य कपटपरिव्राजकस्य अर्घः पूजाविधिः प्रयोजनमस्य अर्घ्यं पूजार्थोदकम्। "मूल्ये पूजाविधावर्घः" इत्यमरः। प्रणीय दत्वा। सम्प्रदानस्य सम्बन्धविवक्षायां षष्ठी। दशमूर्द्धानं रावणं गद्गदं लज्जया अन्तर्भिया वा सम्यक् नाभिव्यक्तं वचः उवाच। "अतिथि र्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते। स तस्मै दुष्कृतं दत्वा पुण्यमादाय गच्छति" इति शासनादतिथिसत्कारस्य अवश्यकर्त्तव्यतया कथञ्चिदर्घदानसाहसं कृतं आगन्तुना सह वाकोवाक्यकरणे तु तस्याः कुलवधूचितो लज्जोपरोधः सर्व्वथा परिहरणीयो नाभूदेवेति सलज्जमुवाचेति भावः। गद्गदमनभिव्यक्तमसंस्कृतत्वादिति जयमङ्गलेनोक्तम्॥ ७६॥

यदुक्तं "कं रहस्युपतिष्ठसे" इति तस्य प्रतिवचनमाह महेति। इक्ष्वाकूणामयं ऐक्ष्वाकः तस्मिन् वंशे जात इति शेषः। महाकुलीनः महावंशोत्पन्नः सूर्य्यवंशोत्पन्नः पितुः दशरथस्य प्रियङ्करः अनुकूलकारी। क्षेमप्रियमद्रेऽणि इति खच्। तपस्विनां

निहन्ता वैरकाराणां सतां बहुकरः सदा।
पारश्वधिकरामस्य शत्रोरन्तकरो रणे ॥ ७८ ॥
अध्वरेष्विष्टिनां पाता पूर्त्ती कर्म्मसु सर्व्वदा।
पितुर्नियोगाद्राजत्वं हित्वा योऽभ्यागमद्वनम् ॥७९॥

क्षेमं करोतीति क्षेमकारः शुभङ्करः। खच्विकल्पचेत्कर्मण्यण्। दाशरथिः रामः मम भर्त्ता स्वामी। नाहमनैकाकिनी तिष्ठामीति भावः ॥ ७७ ॥

निहन्तेति। वैरं कुर्व्वन्ति ये ते वैरकाराः शत्रवः। वैरपूर्वात् कृञः अण्, तेषां निहन्ता। कर्म्मणि षष्ठी। सतां साधूनां धर्म्मे स्थितानामिति यावत् सदा बहुकरः बहुकार्य्यसाधकः। परान् श्यति खण्डयतीति परशुः परश्वधयेति निपातनात् साधु। परश्वधः प्रहरणमस्य पारश्वधिकः सचासौ रामश्चेति तस्य परशुरामस्य शत्रोः रणे युद्धे अन्तकरः संहर्त्ता स मे भर्त्ता इति पूर्व्वेण परामर्शः ॥ ७८ ॥

अध्वरेष्विति। इष्टमेभिरिति इष्टिनः यज्वानः। इष्टादिभ्यश्चेतीनिः। अध्वरेषु यज्ञेषु इष्टिनां पाता रक्षिता। क्तस्येन्विषयस्येति कर्म्मणि सप्तमी। सर्वदा कर्म्मसु श्राद्धादिक्रियाकलापेषु पूर्त्तमनेनेति पूर्त्ती पितॄणां तृप्तिप्रद इत्यर्थः। पृणातेः भावे क्तः तत इन्। यः पितुर्दशरथस्य नियोगात् शासनात् नत्वयोग्यत्वात्, राजत्वं हित्वा त्यक्त्वा वनं अभ्यागमत् आगतवान् स मे भर्त्तेति योज्यम् ॥ ७९ ॥

पतत्त्रिक्रोष्टुजुष्टानि रक्षांसि भयदे वने ।
यस्य बाणनिकृत्तानि श्रेणीभूतानि शेरते ॥ ८० ॥

दीव्यमानं शितान् बाणानस्यमानं महागदाः ।
निघ्नानं शात्रवान् रामं कथं त्वं नावगच्छसि ॥८१॥
(कुलकम् ।)

भ्रातरि न्यस्य यातो मां मृगावित् मृगयामसौ ।
एषितुं प्रेषितो यातो मया तस्यानुजो वनम् ॥८२॥

पतत्त्रीति । यस्य बाणनिकृत्तानि शरच्छिन्नानि अश्रेणयः श्रेणयः भूतानि श्रेणीभूतानि । अभूततद्भावे च्विः । रक्षांसि भयदे भयङ्करे वने पतत्त्रिक्रोष्टुजुष्टानि पक्षिशृगालैः परिवृतानि सन्ति शेरते भूमौ पतित्वा दीर्घनिद्रामनुभवन्ति । शीङो लट् प्रथमपुरुषबहुवचनम् । स मे भर्त्तेति पूर्वेण सम्बन्धः ॥ ८० ॥

दीव्येति । शितान् बाणान् दीव्यमानं तीक्ष्णैः शरैः क्रीडाशीलं विजिगीषाशीलं वा । दिवु जिगीषेच्छापणद्युतौ क्रीडागत्योः, तद्योगात् कर्मणि द्वितीया । महागदाः अस्यमानं महतीनां गदानां क्षेपणशीलं, शात्रवान् शत्रून्, स्वार्थे ष्णः, निघ्नानं शत्रूणां मारणशीलम् । सर्वत्र शक्तिवयस्ताच्छील्ये शतुः चानश् इति चानः । एवम्भूतं रामं त्वं कथं न अवगच्छसि न जानासि सर्वलोकप्रसिद्धकर्म्मकत्वात् तमजानतस्तवैव महदनभिज्ञत्वं स्फुरतीति भावः ॥८१

यद्येवं क्वासावित्याह भ्रातरीति । मृगान् विध्यतीति मृगावित् असौ मे भर्त्ता मां भ्रातरि अनुजे न्यस्य समर्प्य मृगयां यातः पशुवधार्थं प्रस्थितः । तस्य अनुजः कनिष्ठोऽपि मया

अथायस्यन् कषायाचः स्यन्नखेदकणोल्वणः।
सन्दर्शितान्तराकूतस्तामवादीद्दशाननः॥ ८३॥
कृते कानिष्ठिनेयस्य ज्यैष्ठिनेयं विवासितम्।
को नग्नमुषितप्रख्यं वद मन्येत राघवम्॥ ८४॥

प्रेषितः प्रेरितः सन् एषितुं तमेव ज्ञातुम्। सर्वे गत्यर्थाः प्राप्त्यर्था ज्ञानार्थाश्चेति वचनात् इषुगतौ इत्यस्य ज्ञानार्थत्वम्। प्रेषित इति च तस्यैव रूपम्। वनं यातः अग्रजान्वेषणाय सोऽपि वनमगमदित्यर्थः॥ ८२॥

अथेति। अथ सीतावाक्यानन्तरं आयस्यन् क्रोधवशात् शरीरं खेदयन् कम्पयुक्त इत्यर्थः। कषाये कोपरक्ते अक्षिणी यस्य स तथोक्तः। बहुव्रीहौ सक्थ्यक्ष्णोरिति षच्। स्यन्नैः स्रुतैः खेदकणैः खेदविन्दुभिः उल्वणः उद्भटः व्याप्त इत्यर्थः। स्यन्नेत्यत्र स्यन्दतेः क्तः। सन्दर्शितं प्रकटितं आन्तरमन्तर्गतं आकूतमभिप्रायो येन स सन्दर्शितान्तराकूतः कम्पखेदारुणनेत्रत्वादिभिः वाह्यैर्लिङ्गैः क्रोधेर्ष्यादिकमान्तरं भावमाविष्कुर्वन्नित्यर्थः, यद्वा प्रकटीकृतनिजगर्हिताभिप्राय इति तात्पर्य्यम्। दशाननः रावणः तां सीतां अवादीत् वक्ष्यमाणमुवाच॥ ८३॥

कृते इति। कनिष्ठाया अपत्यं कानिष्ठिनेयस्तस्य भरतस्य कृते निमित्ते ज्यैष्ठिनेयं ज्येष्ठापुत्रमपि विवासितं अयोग्यत्वात् राज्यात् बहिष्कृतमित्यर्थः अत एव नग्नमुषितप्रख्यं, यथा कश्चित् प्रथमं मुषितः हृतसर्वस्वः पश्चात् नग्नः दिगम्बरीकृतः भवति तद्वद्भूतम्। पूर्वकालेति समासः राजदन्तादित्वात्

राक्षसान् वटुयज्ञेषु पिण्डीशूरान्निरस्तवान् ।
यद्यसौ कूपमाण्डूकि तवैतावति कः स्मयः ॥८५॥
मत्पराक्रमसंक्षिप्तराज्यभोगपरिच्छदः ।
युक्तं ममैव किं वक्तुं दरिद्राति यथा हरिः ॥८६॥

परनिपातः । नग्नेति नजतेः क्नप्रत्ययात् साधु । लग्नमुपित-प्रख्यमिति पाठे लग्नः लज्जितः लस्जधातोः क्तः । राघवं रामं कोऽजनः वटु मन्येत स्नावित न कोऽपीत्यर्थः । कानिष्ठिनेय-स्यैष्ठिनेयशब्दौ कृतस्य ध्येयप्रत्ययस्य इनेयादेशात् साधू ॥ ८४ ॥

अथ रैण्विटिनामिल्वलस्योत्तरमाह राक्षसानिति । असौ रामः वटुयज्ञेषु कुब्राह्मणयज्ञेषु पिण्ड्यां भोजने एव शूरान् पिण्डी-शूरान् औदरिकानित्यर्थः पात्रेसमितादयश्चेति क्षेपे समासः । राक्षसान् मारीचादीन् निरस्तवान् तिरस्कृतवान् यदि । यदिशब्दोऽत्रावधारणे । मण्डूकस्य अपत्यं स्त्री माण्डूकी कूपे माण्डूकी इव कूपमाण्डूकी तत्सम्बुद्धिः । पूर्ववत् समासः । हे कूपमाण्डूकि । एतेनाल्पदृश्वत्वादन्ये वीरास्त्वया न दृष्टा इति ते स्मय इति सूचितम् । एतावति स्वल्पे वस्तुनि तव कः स्मयः गर्व्वः विस्मयो वा स नैव युज्यते इत्यर्थः ॥ ८५ ॥

मदिति । मम पराक्रमेण संक्षिप्तः उपहृतः राज्यभोग-परिच्छदः हस्त्यश्वरथपदातिरूपः यस्य स तथोक्तः हरिरिन्द्रः यथा दरिद्राति दुर्गतो भवति तत् वक्तुं किं ममैव युक्तं उचितं नैवेत्यर्थः । आत्मगुणानुवादस्य लज्जाकरत्वादिति भावः ॥ ८६ ॥

निर्लङ्को विमदः स्वामी धनानां हृतपुष्पकः ।
अध्यास्तेऽन्तर्गिरं यस्मात् कस्तन्नावैति कारणम् ॥८७॥
भिन्ननौक इव ध्यायन् मत्तो विभ्यद्यमः स्वयम् ।
कार्ष्णिमानं दधानेन मुखेनास्ते निरुद्यतिः ॥८८॥

निर्लङ्क इति। यस्मात् कारणात् निर्लङ्को लङ्कातो निष्क्रान्तः। "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समासः। हृतं पुष्पकं तन्नामकविमानं यस्य स तथोक्तः। अतः विमदः विगतमदः गर्वहीनः धनानां स्वामी कुवेरः गिरेः कैलासस्य अन्तः मध्ये अन्तर्गिरं अव्ययीभावे समासान्तष्टच्। अध्यास्ते अधिवसति। को जनः तत्कारणं कुवेरस्येदृग्दुर्गतिहेतुभूतं मत्पराक्रमं मां वेति भावः। न अवैति जानाति सर्व्व एव जानातीत्यर्थः। अल्पदृश्यत्वात् त्वमेव तदनभिज्ञा प्रतिभासि इति भावः ॥ ८७ ॥

भिन्नेति। स्वयं साक्षात् मत्तः बिभ्यत् त्रस्यन्। अभ्यस्तत्वात् न नुनागमः। अतएव कार्ष्णिमानं दधानेन मलिनीभावात् कालिमानं धारयता मुखेन। इत्थम्भूतलक्षणे तृतीया, उपलक्षितः यमः धर्म्मराजः भिन्ना भग्ना नौर्यस्य स भिन्ननौकः पोतवणिक् इव ध्यायन् अन्यमनेन नष्टसर्व्वस्वः किं ममापतितमिति चिन्तयन् सन् नास्ति उद्यतिः उद्यमो तस्य स निरुद्यतिः उद्योगहीनः सन् आस्ते तिष्ठति। स्वयमित्यस्य चिन्तयन्निवनेत्याश्रयः स्वयमेवासौ वैधुर्य्यं जानाति नत्वन्येन बोधित इति भरतेन व्याख्यातम्। स्वयं यमः प्राणिनामन्तकोऽपीति भावः॥८८॥

समुद्रोपत्यका हैमी पर्व्वताधित्यका पुरी।
रत्नपारायणं नाम्ना लङ्केति मम मैथिलि ॥८६॥
आवासि सिक्तसंमृष्टे गन्धैस्त्वं लिप्तवासिता।
अर्पितोरुसुगन्धिस्रक् तस्यां वस मया सह ॥९०॥

एवं स्वपौरुषमुक्त्वा सीताप्रलोभनार्थमात्मपरिचयं दातुमाह समुद्रेति। हे मैथिलि मिथिलाधिपपुत्रि समुद्रस्य उपत्यका आसन्ना समुद्रोपत्यका। उपत्यकाशब्दस्याद्रेरासन्नभूमिवाचकत्वेऽपि लक्षणयात्र केवलासन्नपरत्वं बोध्यम्। पर्व्वतस्य त्रिकूटनामकस्य गिरेः अधित्यका उपरिस्थिता पर्व्वताधित्यका। "उपत्यकाद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका" इति अमरः। परं परमं येहं अयनं स्थानं परायणं तदेव पारायणम्। स्वार्थे अण्। रत्नानां मुक्तादीनां पारायणं प्रकष्टस्थानम्। यद्वा रत्नानां पारमवसानं अयन्ते बुध्यन्ते तत्परीक्षका अत्र इति रत्नपारायणं सर्वरत्नस्थानमित्यर्थः। यदाह हलायुधः, "साकल्यवचनं पारायणमुदाहृतम्" इति। लङ्का इति नाम्ना ख्याता हैमी सुवर्णमयी मम पुरी राजधानी अस्तीति शेषः। दुर्गावस्थित्या अनभिभवनीयता रत्नोपचयात् समृद्धता च सूच्यते। उपत्यकाधित्यकाशब्दौ रूपाधिभ्यां त्यकन्प्रत्ययेन निष्पन्नौ॥ ८९॥

आवास इति। तस्यां पुर्य्यां आदौ सिक्ते रजोनिरासार्थं जलेनोक्षिते पश्चात् संमृष्टे परिष्कृते सिक्तसंमृष्टे, आवसत्यस्मिन् इति आवासे निलये। अधिकरणे घञ्। गन्धयन्तीति गन्धाः चन्दनादयः तैः आदौ लिप्ता चर्च्चिता पश्चात् वासिता आमोदिता

सङ्गच्छ पौंस्नि स्त्रैणं मां युवानं तरुणी शुभे ।
राघवः प्रोष्यपापीयान् जहीहि तमकिञ्चनम् ॥८१॥
अश्नीतपिबतीयन्ती प्रसिता स्मरकर्म्मणि ।

धूमादिनेति ग्रेयः। लिप्तवासिता। "वासिता करिणी नार्य्योर्वासितं सुरभीकृते। ज्ञातमात्रे, खगारावे वासितं वस्त्रवेष्टिते" इति विश्वः। तथा अर्पिता न्यस्ता उर्व्वी महती सुगन्धिः सुरभिः स्रक् माला यस्यां तादृशी सती त्वं मया सह वस। प्रार्थनायां लोट् ॥ ८० ॥

सङ्गच्छेति। पुमांसं अर्हति तस्य हिताय वा भवति इति पौंस्री तत्सम्बुद्धिः हे पौंस्नि। स्त्रीपुंसाभ्यां नञ्स्नञौ इति साधु। शोभते इति शुभा। कर्त्तरि कः। हे शुभे कल्याणि तरुणी त्वं स्त्रैणं स्त्रीयोग्यं स्त्रीहितं वा युवानं मां सङ्गच्छ अङ्गीकुरु, सदृशयोरावयोर्योग उचित इति भावः। ननु ममापि तादृशो भर्त्तास्तीति चेदाह राघव इति। राघवः रामः प्रोष्य देशान्तरं गत्वा पापीयान् पापतरः इति प्रोष्यपापीयान् विदेशे प्रोषितः स अतिशयेन पापाचारः सम्वृत्त इत्यर्थः। प्रोष्यपापीयानित्यत्र मयूरव्यंसकादित्वात् समासः। पापीयानित्यत्र पापशब्दात् ईयसुः ततः लुक्तद्धितानामिति यलोपः। अतः अकिञ्चनं नास्ति किञ्चन यस्येति तं दरिद्रमित्यर्थः, यद्वा "द्रविणं किञ्चनं क्लीबे" इत्यभिधानात् नास्ति किञ्चनं धनं यस्यासौ तं दरिद्रं तं जहीहि त्यज ॥ ८१ ॥

अश्नीतेति। अश्नीत पिबत इत्येवं नियोगः सततं भव्य-

वशीकृत्य दशग्रीवं मोदस्व वरमन्दिरे ॥ ९२ ॥
मास्म भूर्ग्राहिणी भीरु गन्तुमुत्साहिनी भव ।
उद्भासिनी च भूत्वा मे वचःसम्मर्दिनी भव ॥९३॥
तां प्रातिकूलिकीं मत्वा जिहीर्षुर्भीमविग्रहः ।
वाह्वपपीड़माश्लिष्य जगाहे द्यां निशाचरः ॥९४॥

जनान् प्रति यस्यां क्रियायां सा अग्रीतपिवता तामात्मन इच्छतीति अग्रीतपिवतीयन्ती। मयूरव्यंसकादित्वात् आख्यातमाख्यातेन क्रियासातत्ये इति समासः। ततः स्त्रियामाप् आत्मेच्छायां क्यच्। तथा स्मरकर्म्मणि कामव्यापारे प्रसिता तत्परा सती प्रसितोत्सुकाभ्यां तृतीया च इति चकारात् सप्तमी। दशग्रीवं रावणं वशीकृत्य आयत्तीकृत्य। साधात्प्रकृतित्वात् गतिसंज्ञा। वरमन्दिरे उत्तमगृहे मोदस्व सुखिता भव॥९२॥
मास्मेति। हे भीरु भयशीले गृह्णाति प्रतिकूलार्थमिति ग्राहिणी प्रतिकूलवर्त्तिनी मास्म भूः। माङ्स्मयोगात् लुङ्। गन्तुं मंदालयगमनाय उत्साहिनी उद्युक्ता भव। तथा उद्भासिनी अलङ्कारादिभिः शोभमाना भूत्वा मे वचःसम्मर्दिनी भव गाढ़ालिङ्गनेन मे उरःस्थलं निपीड़य इत्यर्थः। सर्व्वत्र ग्रहादित्वात् कर्त्तरि णिनिः॥ ९३ ॥
तामिति। तां प्रतिकूलं वर्त्तते या सा तां प्रातिकूलिकीं प्रतिकूलवर्त्तिनीं मत्वा जिहीर्षुः हर्त्तुमिच्छुः, हृधातोः सन्नन्तादुः, अतएव भीमविग्रहः भिक्षुरूपं विहाय कृतनिजभीषणाकारः

त्रस्यन्तीं तां समादाय यातो रात्रिञ्चरालयम्।
तूष्णीम्भूय भयादासाञ्चक्रिरे मृगपक्षिणः ॥ ८५ ॥
उच्चैरारस्यमानां तां कृपणां रामलक्ष्मणौ।
जटायुः प्राप पक्षीन्द्रः परुषं रावणं वदन् ॥८६॥

एते प्रकीर्णकाः। अतःपरं टाधिकारः।

द्विषन् वनेचराग्र्याणां त्वमादायचरो वने।

निशाचरः रावणः बाहुभिः उपपीड्य बाहूपपीड़ं बाहुभिः दृढ़ं धृत्वेत्यर्थः। सप्तम्याञ्चोपपीड़े इति चकारात् तृतीयान्ते उपपदे णमुल्। द्यां आकाशं जगाहे उत्पपात ॥ ८४ ॥

त्रस्यन्तीमिति। त्रस्यन्तीं बिभ्यतीं तां समादाय बलात् गृहीत्वा रात्रौ चरतीति रात्रिञ्चरः। चरेष्टः, विकल्पेन मुमागमश्च। तस्य आलयं लङ्कां यातः गच्छतः रावणादिति शेषः। यातेः शतरि पञ्चम्यां रूपम्। भयात् मृगपक्षिणः तूष्णीम्भूय मौनमवलम्ब्य आसाञ्चक्रिरे स्थिताः। रावणभयात् सर्व्वे नीरवं तस्थुः इत्यर्थः ॥ ८५ ॥

उच्चैरिति। रामलक्ष्मणौ हा राम हा लक्ष्मण इति शब्दौ उच्चैरत्युच्चैः रारस्यमानां पुनः पुनरुदीरयन्तीम्। रसेः शब्दकर्म्मकत्वात् क्रियासमभिहारे यङ्। अतस्त्वाह रामलक्ष्मणौ उच्चैःरारस्यमानां आह्वयन्तीमिति। कृपणां दीनां तां सीतां। रावणं परुषं निष्ठुरं वदन् भर्त्सयन् पक्षीन्द्रः जटायुः प्राप सीतासमीपमभ्युपागमदित्यर्थः ॥ ८६ ॥

इतः प्रभृत्यधिकारकाण्डमुच्यते, यत्र प्राधान्येन एकैकं विषय-

अग्रेसरो जघन्यानां माभूः पूर्वसरो मम ॥ ८७ ॥
यशस्करसमाचारं ख्यातं भुवि दयाकरम्।
पितुर्वाक्यकरं रामं धिक् त्वां दुन्वन्तमत्रपम् ॥८८॥

माश्रित्य व्याकरणलक्षणं प्रदर्शितं भवति तदधिकारकाण्डम्। तत्रापि लक्षणान्तरसम्बन्धात् प्रकीर्णतास्तीति सूचयितुं अन्तरान्तरा प्रकीर्णश्लोकाभिधानं दृश्यते। विवक्षितस्य सर्गार्थस्यापरिसमाप्तत्वात् सर्गमध्ये काण्डान्तरारम्भो न दोषाय एवञ्चायं सर्गो मिश्रक उच्यते द्वयोरप्येव प्राधान्येन निवक्षितत्वात्। कीदृशं परुषं वदन्नित्याकाङ्क्षायामाह द्विपश्चिति। वनेचराणां अग्रयाः प्रधानाः ऋषयः तेषाम्। रे वनेचराग्र्याणां द्विषन् हे ऋषिहिंसक। सम्बन्धे षष्ठी। वने आदाय सीतामिति शेषः। चरतीति चरः प्रयाणपरः जघन्यानां नीचानां अग्रेसरः प्रथमः त्वं मम पूर्व्वसरः मा भूः मम अग्रतो भूत्वा मा गाः। तिष्ठ ते प्रतिफलं दास्यामीति भावः। जयमङ्गलस्त्वाह हे द्विषन् वने वनेचराग्र्याणां आदायचरः मध्यकः त्वमिति ॥ ८७ ॥

यशस्करेति। यशः करोति इति यशस्करः। हेत्वर्थे टः। तादृशः समाचारः चरितं यस्य तं महनीयकीर्त्तिमित्यर्थः, भुवि पृथिव्यां ख्यातं प्रसिद्धं दयाकरं दयाकरणशीलम्। ताच्छील्ये टः। पितुः वाक्यकरं वाक्यकरणानुकूलं आज्ञाकरम्। आनुलोम्ये टः। रामं दुन्वन्तं उपतापयन्तं अत्रपं परस्त्रीहरणेन निर्लज्जं त्वां धिक्, ते निन्दाम् ॥ ८८ ॥

अहमन्तकरो नूनं ध्वान्तस्येव दिवाकरः।
तव राक्षस रामस्य नेयः कर्म्मकरोपमः॥ ९९॥
सतामरुष्करं पक्षी वैरकारं नराशिनम्।
हन्तुं कलहकारोऽसौ शब्दकारः पपात खम्॥१००॥

इति टाधिकारः। अतःपरं प्रकीर्णकाः।

धुन्वन् सर्व्वपथीनं खे वितानं पक्षयोरसौ।
मांसशोणितसन्दर्शं तुण्डघातमयुध्यत॥१०१॥

अहमिति। हे राक्षस रामस्य नेयः वश्यः कर्म्मकरोपमः किङ्करतुल्यः अहं नूनं अवश्यं ध्वान्तस्य अन्धकारस्य दिवाकरः सूर्य्य इव तव अन्तकरः विनाशयिता। न त्वं रामस्य तुल्यप्रतियोगी, अतस्तद्भृत्योऽहं ते प्रतिफलमुचितं ददामीत्यर्थः॥९९॥

सतामिति। सतां साधूनां अरुष्करं पीड़ाकरणशीलम्। अरुःशब्दः व्रणार्थकोऽपि पीड़ोपलक्षणपरः। वैरकारं विरोधकरणशीलं नराशिनं राक्षसं हन्तुं मारयितुं कलहकारः वाग्युद्धकारी असौ पक्षी शब्दकारः सन् घोरं निनादं कुर्व्वन्नित्यर्थः खं आकाशं प्रति पपात वेगेन उदगच्छत्। शब्दपातमिति पाठे शब्दस्य पातो यत्रेति खविशेषणं यावद्दूरं शब्दगमनं तावद्दूरमित्यर्थः। यद्वा शब्दस्येव पातो यत्रेति पतनक्रियाविशेषणं, एतेन यथा शब्दस्य शीघ्रगमनं तथास्येति ध्वनितं। वैरकारादिषु नशब्दश्लोकेति टे प्रतिषिद्धे अण् एव भवति कर्म्मण्यण् प्राप्तिरस्तीति टाधिकारः॥१००॥

धुन्वन्निति। असौ जटायुः सर्वपथीनं सर्व्वेषां पथां व्यापिनं

न बिभाय न जिह्राय न चक्लाम न विव्यथे।
आघ्नानो विध्यमानोऽपि रणान्निववृते न च ॥१०२॥
पिशाचमुखधौरेयं सच्छन्नकवचं रथम्।
युधि कद्रथवद्भीमं बभञ्ज ध्वजशालिनम् ॥१०३॥

इति प्रकीर्णकाः। अतःपरम् आमधिकारः।

पक्षयोर्वितानं विस्तारं विस्तृतपक्षयुगलमित्यर्थः धुन्वन् कम्पयन् मांसशोणितसन्दर्यं कार्तस्वेरन मांसं शोणितञ्च दृष्ट्वा रावणस्येति शेषः। कर्मणि दृशिविदोः साकल्ये इति णमुल्। तुण्डघातं तुण्डेन चञ्चा हत्वा अयुध्यत दैवादिकात् युध्यतेर्लङ्। तुण्डघातैः शत्रोः शरीरात् मांसं कृन्तन् शोणितञ्च स्रावयन् युद्धमकरोदित्यर्थः॥ १०१॥

नेति। आघ्नानः प्रहरन् पक्षी। आङोयमहन इति अकर्मकात् हन्तेरात्मनेपदम्। न बिभाय तस्मात् न भीतः। न जिह्राय मया ताड़ितोऽपि न हत इति लज्जितो न बभूव। न चक्लाम जितश्रमत्वात् ग्लानिं नाससाद। न विव्यथे सत्वाधिकत्वात् अवसादं न भेजे। तथा विध्यमानोऽपि परेण ताड्यमानोऽपि रणात् न निववृते च, अभग्नोत्साहत्वात् न पराङ्मुखो बभूव। अत्र यथाक्रमं भीह्रीक्लमव्यथनिपूर्ववृतधातूनां लिट् ॥१०२॥

पिशाचेति। युधि युद्धे पक्षी धुरं वहन्ति धौरेयाः पिशाचस्येव मुखं येषां तादृशा धौरेयाः यत्र तं पिशाचमुखधौरेयं सत् शोभनं विद्यमानं वा शस्त्रं कवचञ्च यस्मिन् तत् सच्छन्नकवचं ध्वजशालिनं ध्वजयुक्तं,शालिन् शब्दोऽत्रैतद्वत्तायां भस्तार्थे शालिन।

संत्रासयाञ्चकारारिं सुरान् पिप्राय पश्यतः ।
स त्याजयाञ्चकाराथ सीतां विंशतिबाहुना ॥१०४॥
अशीतो रावणः कासाञ्चक्रे शस्त्रैर्निराकुलः ।
भूयस्तं बेभिदाञ्चक्रे नखतुण्डायुधः खगः ॥१०५॥

भीमं भयानकं रथं कद्रथयत् कुत्सितरथमिव । रथवदयोश्चेति कोः कदादेशः । बभञ्ज भग्नवान् । ध्वजशालिनमित्यत्र धातूनामनेकार्थत्वात् शालिरत्र दीप्त्यर्थे इति केचित् । एते प्रकीर्णकाः ॥ १०२ ॥

इतः प्रभृत्यामममधिकृत्याह संत्रासेति । स पक्षी अरिं रिपुं रावणं संत्रासयाञ्चकार भीतमकरोत् । त्रासेरकर्मकत्वात् अणिकर्त्तुः कर्मत्वम् । तथा विंशतिबाहुना रावणेन सीतां त्याजयाञ्चकार त्याजितवान् । गत्यर्थादिषु त्यजेरसंग्रहात् प्रयोजककर्त्तरि तृतीयैव भवति । अतः पश्यतः युद्धमवलोकयतः सुरान् देवान् पिप्राय प्रीणितवान् । प्रीणातेर्लिट् । अत्र त्रासनं सीतात्याजनं च देवानां प्रीतिकारणमिति भावः । स त्याजयाञ्चकारेत्यत्र संत्याजयाञ्चकारेति क्वचित्पाठः ॥१०४॥

अशीत इति । अशीतः त्यक्तसीतः अतएव निराकुलः पूर्वं बाहुभिः सीताग्रहणेन व्याकुल आसीत् अधुना तदभावात् सुस्थिरः शस्त्रैः उपलक्षितः रावणः कासाञ्चक्रे कुत्सितशब्दमकार्षीत् । एह्येहि खगाधम इत्युत्कटमाह्वयते स्म इति भावः । कासृ शब्दकुत्सायामिति धातोः लिट् । यद्वा धातूनामनेकार्थत्वात् शस्त्रैः कासाञ्चक्रे शशंसे इत्यर्थः । नखतुण्डानि एव आयु-

हन्तुं क्रोधवशादीहाञ्चक्राते तौ परस्परम्।
न वा पलायाञ्चक्रे विहंयाञ्चक्रे न राक्षसः॥ १०६॥
उपासाञ्चक्रिरे द्रष्टुं देवगन्धर्वकिन्नराः।
छलेन पक्षौ लोलूयाञ्चक्रे क्रव्यात् पतत्त्रिणः॥१०७॥

धानि यस्य स तयोक्तः, खगः तं भूयः पुनरपि बेभिदाञ्चक्रे अत्यर्थं भिन्नवान्। नखाघातैस्तुण्डाघातैश्च अव्रुं चतविचतं चकारेत्यर्थः। भिदेर्यङन्तात् लिटि रूपं यङो लुक् च॥ १०५॥

हन्तुमिति। तौ जटायुरावणौ क्रोधवशात् कोपाधीनतया परस्परं अन्योन्यं हन्तुं व्यापादयितुं ईहाञ्चक्राते चेष्टां कृतवन्तौ। विः पक्षी। वयतेरौणादिक इक्। नवा नैव। "वा स्यात् विकल्पोपमयोरेवार्थेऽपि समुच्चये" इति विश्वः। पलायाञ्चक्रे रणात् दुद्राव। परापूर्वस्यायधातोरूपं रेफस्य लत्वं। तथा राक्षसः न दयाञ्चक्रे पक्षिणं खल्वहं कथं व्यापादयामीति नानुकम्पामभजदित्यर्थः॥ १०६॥

उपासामिति। दिव्यन्तीति देवाः पचाद्यच्। गानमेषां धर्मः इति गन्धर्वाः पृषोदरादित्वात् साधु। कुत्सिताः नराः किन्नराः अश्वमुखत्वात्। ते द्रष्टुं युद्धदर्शनाय उपासाञ्चक्रिरे तयोरन्तिकमाजग्मुरित्यर्थः। क्रव्यं मांसमत्तीति क्रव्यात् राक्षसः। अत्तेः क्विप्। पतत्त्रिणः पक्षौ छलेन प्रसंह्य जेतुं न शक्यतेऽयमिति मायया लोलूयाञ्चक्रे अत्यर्थं चिच्छेद। लूधातोर्यङि लिट् ततो यङोलुक्। छलेनेत्यत्र बलेनेति पाठान्तरम्॥ १०७॥

प्रलुठितमवनौ विलोक्य कृत्तं
दशवदनः खचरोत्तमं प्रहृष्यन् ।
रथवरमधिरुह्य भीमधुर्य्यं
स्वपुरमगात् परिरभ्य रामकान्ताम् ॥१०८॥

इति श्रीभट्टिकाव्ये पञ्चमः सर्गः ।

प्रलुठितमिति । खे चरन्तीति खचरास्तेषां उत्तमं खचरोत्तमं जटायुं कृत्तं लूनपक्षं अतएव अवनौ भूमौ प्रलुठितं विलोक्य प्रहृष्यन् निहतो विघ्नकारीति हर्षमनुभवन् दशवदनः भीमधुर्य्यं भीषणाश्वं रथवरं खरणादुपस्थितं पुष्पकाख्यं स्यन्दनश्रेष्ठं अधिरुह्य रामकान्तां सीतां परिरभ्य तथैव धारयित्वा स्वपुरं लङ्कां अगात् अगमत् । इणधातोर्लुङि रूपम् । पुष्पिताग्रावृत्तमिदं लक्षणं तूक्तम् ॥ १०८ ॥

इति भट्टिटीकायां पञ्चमः सर्गः ।

---

# BHATTIKAVYAM.

## ENGLISH TRANSLATION.

### CANTO. I.

1. There lived a king celebrated by the name of Dasaratha, who was a friend of the gods and a vanquisher of his enemies; and who was versed in sacred lore, and so eminent in virtues that the eternal being himself, on the pretext of doing good to the world, became incarnate only to have him for a father.

2. He studied the Vedas, offered oblations to the gods, propitiated the manes, honored his friends, triumphed over the passions, delighted in the study of moral science, and destroyed his foes root and branch.

3. He gave away riches as a cloud pours down water, sat in the same seat with the king of heaven, did not worship any other god than the three-eyed one and eclipsed the glory of all (the most renowned) archers.

4. Being holy, esteemable and surrounded by a host of distinguished Brahmans, he gratified by his offerings the dwellers in heaven, and flamed forth in his might for the welfare of the world like the fire consecrated at a sacrifice.

5. Having spotless reputation and resembling the god of a hundred sacrifices, he lived in Ayodhya as his capital, which was pleasant in all the seasons, and inhabited by Brahmanas of bright intellects, and in grandeur rivalled the metropolis of heaven.

6. With the rays of its gems streaming to the sky, that city stood, as it were laughing to scorn the capital of Indra, and seemed as a perfection of Brahma's skill so conspicuous in the work of creation.

7. In it were mansions, containing pearls, diamonds, and minerals of various hue, which had parterres attached to them, and were inhaibted by damsels as fair as bevies of Apsarasas, and thus resembled the peaks of Meru.

8. The glittering rays of the jewels contained in the houses of that city, flashing through the numerous windows, appeared like the crystal waters of the Ganges pouring down from a ravine of the Himalaya.

9. As a scholar is attached to the sciences, so was the king to his three noble wives whom he had married in due time; who were pious and respected by the people, and were so blessed as to contribute to his pleasure, wealth and fame.

10. Desirous of having sons, he resorted to the help of fair ones and thus enticed away to his capital the sage Rishya-s'ringa, in whose mind true wisdom was developed, and who being

enlightened, high-minded and skilful in the performance of a sacrifice, was revered by all.

11. The king, who was possessed of self control, asked that prince of sages to perform a sacrifice in order that he might obtain sons. Then that skilful priest being informed of his wish commenced a ceremony certain to produce male offspring.

12. Having expelled evil spirits from the vicinity of the altar by conjuration, offered oblations to the principal deity and his attendants, and cast certain figures made of pounded rice into the sacred fire, the great sage offered a prayer that the king might obtain a son.

13. The people invited there having been satisfied with gifts the sacrifice was concluded, and the three queens of high pedigree partook of the remainder of the offerings in such a manner as to give birth to four sons.

14. First of all Kaus̃alya was delivered of Rama with ease, next Kaikeyi bore Bharata, and then Sumitra alone gave birth to Lakshmana together with S̃atrughna celebrated for noble deeds.

15. The learned sage Vas̃ishtha, the first of ascetics, having expelled evil spirits, honored, and distributed rich presents among, the Brahmans, and then performed in due time the ceremony of investing the princes with the sacred thread.

16. The princes studied the entire Veda with its attendant sciences, and became initiated into the use of arms which yield victory. They were moreover so endowed by nature as to appear equally captivating to men of various dispositions.

17. After that the son of Gâdhi whose sacrifice had been

interrupted by demons, came to the king to ask for Rama's protection, and he with curd and honey in his hand paid him due homage.

18. Has that meditation of thine, said the king, been undisturbed, which thou hast commenced in order to triumph over the evil of transmigration, and pursued with a total disregard to sensuous impressions, and by means of which thou hast penetrated into the mysteries of things.

19. That meditation of mine, the sage replied, is tolerably safe; but demons have infested our sacrifice in the forest, and I pray that Ra'ma, the vanquisher of his foes, may destroy them with the help of Lakshmana.

20. On hearing this the king, unable to bear the thought of being separated from his son, fell into a swoon. Then the great sage so haughty in his temper, thus addressed the blessed king.

21. "From the dread of demons, I have sought for thy protection as thou wouldst ask for our help in performing religious rites. Brahmans and Kshetriyas are destined to help each other; so banish all fear and permit thy son (to accompany me.)"

22. "I predict that thy son will stand foremost in the field of battle and slay Ravana, that mighty foe of all; so do not O great king! reject my suit, for a sage like myself will never entrust inferior men with the accomplishment of great enterprizes.

23. The king at first thought that the fire of the sage's wrath, if kindled, would consume his race into ashes; while on the other hand, to part from his son would be most agonizing to him. Thus wavering for a while, he at last consented to his son's departure.

24. Then the sage, well satisfied with the king, honored him with benedictions, and set out for his hermitage The prince equipped with flashing arms for the destruction of demons, submissively followed him as he led the way.

25. The countenance of the victorious Rama brightened up at the thought of seeing the sacred grove, and the firm-minded Lakshmana, that favourite of the three mothers, who had mastered the science of war, followed him ever intent on his welfare.

26. When the lion of the house of Raghu firmly grasping a great bow, the terror of his foes, and being equipped with arrows and a finger-protector, was setting out for the forest, desirous of destroying the demons; the damsels of the city, his well-wishers, owing to their great grief, with difficulty abstained from crying : for that would have been a bad omen.

27. Then the Brahmanas loudly chanted benedictions on the prince, and the others struck cymbals of loud and pleasing tone ; the auspicious birds chirped merrily, and the prince felt his right arm throb gracefully, auguring well for the fulfilment of his desire.

---

## CANTO. II.

## ENGLISH TRANSLATION.

---

1. Having come out of the town, the prince beheld all around him, the signs of autumn, at which season trees, lakes, brooks, stars and the sky look gay and serene.

2. The red lotuses, struck by the waves, were oscilating; their leaves, moving to and fro, appeared like flickering lights, and the black-bees seated on them being agitated looked like curling lines of smoke.

3. The banks of the lakes beholding their own glory appropriated by the water in which were reflected the trees on their margin, imitated the beauty of the water-lilies with the smiles of the land-lotuses.

4. At the dawn of day, the trees growing on the banks, from the extremeties of the leaves of which fell transparent drops, seemed as if bewailing the fate of the Kaumudi, with the humming of bees and with the dews of night which resembled tears.

5. The woodland and the water beheld, as it were, each other's charms with a feeling of astonishment and eagerness; the flowers blooming in the one and the lotuses floating on the other had black-bees seated on them, and thus appeared like eyes.

6. As it trembled in the morning breeze, the lotus seemed as if expelling the black-bee, which was embrowned with the dust of the Kaumudi; just like a proud damsel who had become indignant at the flirtations of her lord with her rival.

7. The hunter though desirous to slay the stag, which stood still absorbed in the sweet hummings of the bees, could not take aim at his mark, while he listened to the noise of the excited swans.

8. A cloud which caused the rivers to rise by its showers, but which now appeared as white as snow for want of water,

was seen agitated by the wind, and moving about the ridge of a mountain like a second Himalaya.

9. In a well-watered upland-grove beside a river, a lion roared, and deceived by the echo of his own voice, thought that it was the roar of a rival; so he was in a rage and crouched ready to spring on him.

10. The prince beheld many a lotus blooming in the lakes, listened to the humming of black-bees, and smelled the sweet breeze as it blew laden with the perfume of the lotuses over which it had passed.

11. He drew towards him many a creeper and plucked its flowers, descended to many a brook and rinsed his mouth with the water, and out of curiosity sat himself down on many a slap of rock with a smiling countenance.

12. At day-break he saw in the east waters so gilt with the rays of the sun as to appear like a sheet of the son's light, that had poured down in the form of rays, and collected on the face of the earth.

13. He saw with delight the rows of paddy plants, which were captivating to the sight, and extended as far as the eye could reach: their clumps looked clean and smooth, and stretched up straight, between which no weeds were allowed to grow.

14. He saw settlements of cow-herds inhabited by country-folk, who never knew pangs of separation from their dear ones, paid their due tribute to the king regularly, were free from deceit and destitute of all artificial decorations.

15. He was delighted at beholding in the milk-maids that modest deportment which is regarded as an ornament of the fair-sex ; he was also pleased with their charming looks which were free from coquetry, and with their simple dispositions which inspired confidence.

16. At the time of churning, the graceful movements of the milk-maids, the turning of their sides, and the heaving of their hips, were as gratifying to him as a dance with which the low deep murmur of the churning, as it were, kept time.

17. A herd of deer of various hue, which on the disappearance of clouds had come forth into the forest, and looked gay, bounded by him vigorously and ran in the direction of the wind exciting his interest.

18. The swans, as white as jasmine flowers, which remained hidden in clusters of white lotuses and foamy sands, were only discovered by their song so grateful to the ear.

19. There was no water on which the lotus did not grow, there was no lotus on which the black-bee did not sit, there was not a black-bee which did not make a humming sound, and there was not a humming sound which did not charm the mind.

20. The ascetics who were emaciated by the practice of penances came forth, acompanied by the principal mendicants of the place, with jars in their hands containing water for expiatory sprinkling : those and other hermits who had no settled habitation, welcomed the prince the object of the world's reverence, with fruits and flowers.

21. Desirous of having him kill the demons in fight,

the son of Ga'dhi, whose mind was not impaired by worldly pursuits, initiated the prince, ever intent on destroying the demons, into those occult sciences called jaya' and vijaya'.

22. Ever vigilant for the welfare of the prince, the sage perceived that a great conflict was at hand, and for the destruction of the demons, bestowed on him arms which were unerring and irresistible.

23. The demon Taraka' who, finding several brahmans pass through the wood, was preparing to fall upon them, presented herself before the prince. Then Ra'ma, who had already provided himself with glittering weapons suspecting some sinister motive in her, slew her on the spot.

24. The prince saw the hermitage, where the branches of trees enriched with fruits were begrimed with smoke rising from the sacrificial fire, where the sweet carols of birds as they floated aloft, were drowned in the hum of students reading the vedas.

25. There lions did not prey upon smaller animals, and birds fluttered about without fear; and there waving creepers gladdened the eye bending low, as if to give fruit to the hermits.

26. The principal inhabitants of the hermitage, devoted to the work of hospitality, welcomed the princes, and presented to them seats, water for washing their feet, garlands and a mixture of curd and honey, which they accepted.

27. Then the ascetics addressed them as follows, "you supported with your arms the weight of the world when being infested with demons, it was sinking in destruction: now de-

ign to keep our clarified butter, prepared for sacrifice, from being defiled."

28. "Begin your rites as ye please," the prince replied, "and let the wind of your penance kindle the flame of our weapons amidst your foes and consume them like wood."

26. Then they began the sacrifice with the proper articles prepared for the purpose, but when the priests went on with it according to the directions of the great sages, the demons came to know of it.

30. Their rough reddish hair stood erect on their heads, their legs were sinewy, and their eye-balls lage and fiery: they looked as big as peaks of a mountain, and hovered in the air like clouds in the rainy season.

31. With his bow strung, the grasp of his arm steady, his right thigh drawn back, his left leg stretched forward and his right eye uplifted, Lakshamana having provided himself with sharpened arrows, drew his bow with great force and slew the demons.

32. Then the son of Ga'dhi pointed out Ma'richa bellowing hoarsely, who was versed in producing illusive phantoms, and resolute in keeping his ground in fight. And Ra'ma so well skilled in the use of weapons addressed to him, with a smile, these words of great import.

33. "Thou who livest on human flesh, killest those who sustain their life with the fruits of trees; but tell me why thou dost not feel compassion on poor hermits whose whole worldly fortune is inadequate to maintain them on the morrow."

34. "We devour brahmans," replied, the demon "kill those who offer oblations to the gods, and turn cities into an abode of the dead. This is our peculiar custom, O son of Dasaratha, and we were not ordained by the creator to live according to the vedic system."

35. "True, O Ra´kshasa, this is thy peculir custom," the prince rejoined, "but know that I have also as good a way of my own, by virtue of which I, who am a true Kshatriya, and possessed of a bow and arrows, will slay thee, the enemy of Bra´hmans."

36. Thus did they parley: then the prince and the Ra´kshasa joined in mutual strife. At last the prince counting his foe as stubble, transported him with an arrow from the place of combat.

37. Now the Bra´hmans became cheerful, and the heaven began to rain flowers. The sacrifice was concluded without any impediment, when the great sage thus addressed the prince—

38. "Having vanquished the demons at the sacrifice of the gods, thou hast graced the earth and conferred on her the proud title of "mother of heroes"; so that now she will not suffer from a comparison with heaven, though adorned with the presence of Indra.

39. "This is not a difficult task for him by whom Bali was enchained, the ocean churned, nectar carried off, the race of the titans vanquished, and the earth saved though covered with ruin at that time of the great annihilation."

40. At the close of the sacrifice, the sage well-satisfied, gave utterance to those sweet, wholesome words: he then took

the prince to the place where the king of Mithila had commenced a scrifice, for he was desirous to see the glory of kings eclipsed by the achievements of Ra̅ma.

41. The people assembled at the place of Janaka were so bewitched by the handsome features of those great princes, that they supposed they were either the two gods called Mitra̅-Varuna, or the twin As'vins desirous of drinking the juice of the soma-plant.

42. The king Janaka; in order to test the prowess of Ra'ma presented before him that bow with which Pinaki had sacked the capital of Tripura: On this, the prince with a smile snapped the bow in twain.

43. Then the king, desirous to bestow the hand of his daughter on Ra'ma, despatched messengers to invite the lord of Ajodhya': they were mounted on chargers, and acquainted with roads, rivers and rocks.

44. On learning the news of his sons, the king, though very old, hastened to Mithila̅ with the alacrity of youth, in a vehicle drawn by well-trained horses, so making the journey without fatigue.

45. On his arrival, Janaka, who had a great reputation and was of a rank equal to that of Dasaratha, honored him as his sire: for the old king was regarded as the home of all virtues, and as a great personage, and ranked as the greatest and most renowned potentate of his age.

46. Janaka then addresed him thus.—" by placing thee, who hast attained to the highest degree of virtue, wealth, and pleasures, on the same seat with himself, the great Indra was

